**उपाददे परसुखदुःखचिन्तया विभूतिपु क्वचिदुदसिच्यत स्वयम् ।**
**प्रमाद्यति स्म न विपसाद योगिवद्दिवानिशं विधिपु विभज्य यः स्थितः ॥९॥**

उपाददे इति—परसुखदु खचिन्तया परेपामात्मविलक्षणानामाश्रितानामनाथाना च सुखदु खे हिताहिते तत्र चिन्ता जनोऽयं केनोपायेन दु खादपाकृतो सुख च भविताऽस्येति परामर्शतया स्वय परोपदेशमनपेक्ष्य कर्तृभूतया चिन्तया उपाददे । कर्मतापन्नो यो राजा तथा विभूतिपु सम्पत्सु क्वचित्कस्मिंश्चित् स्थाने नोदसिच्यत । स्वय गर्वेण नानुभूयते स्म । क इव योगीव औदास्यावलम्बि मुनीन्द्रवत् न प्रमाद्यति स्म न प्रमत्तो बभूव । न विपसाद न विपादेन विपण्णो बभूव । विधिपु धर्मार्थकामलक्षणेपु कार्येपु दिवानिशमहोरात्र स्वय विभज्य आत्मान विभागीकृत्य यो राजा स्थित इति समुच्चयालङ्कार ॥८॥

**द्विषो जगद्विलयभयान्न्यपातयत् न्यपेवत स्मरमपि सन्ततीच्छया ।**
**गृहीतवान्करमपमित्यया चितुं स्वजन्म यः समगमयत्परार्थताम् ॥१०॥**

द्विष इति—जगद्विलयभयात् लोकविनाशभीत्या द्विषो रिपून् न्यपातयत् व्यापादयामास । स्मरमपि काममपि सन्ततीच्छया सन्तानाभिलापेण न्यपेवत अनुशीलयाम्बभूव । अपमित्ययाचितु याचित्वा दातु कर सिद्धाय गृहीतवान् स्वीकृतवान् । अनया युक्त्या यो राजा परार्थता साफल्य स्वजन्म आत्मोत्पत्ति समगमयत् अनैपीत् । समुच्चय ॥१०॥

**जिगाय पड्विधमरिमन्तराश्रयं यतः स्मयं त्यजति न पड्विधं बलम् ।**
**न यस्य यद्व्यसनमदीपि सप्तकं स्थिराऽभवत् प्रकृतिपु सप्तसु स्थितिः ॥११॥**

जिगायेति—यतो यस्मात् कारणात् अन्तराश्रयमन्तरङ्गोद्भव पड्विध षट्प्रकारमरिं रिपु जिगाय जितवान् अयुक्तित प्रणीता कामक्रोधलोभ(मान)मदहर्पा क्षितीशानामन्तरङ्गो हि[1] पड्वर्ग. । उक्तञ्च—

"काम क्रोधश्च मानश्च लोभो हर्पस्तथा मद ।
अन्तरङ्गोऽरिपड्वर्गं क्षितीशाना भवत्ययम् ॥१॥ [ का नी १।५७ ]

अत एव य नृपतिं वल सैन्य न त्यजति स्म न मुमोच हिरण्यदानसम्भापणाभ्यामरातिनिवारणेन च स्वामिन सतीर्ववस्थासु बलते सवृणोति दुस्तर तारयति इति वल तच्च मौलभृतकश्रेण्यारण्यदुर्गमित्रभेदम् । मौल पट्टसाधनम्, भृतक पदातिबलम्, श्रेणयोऽष्टादश, सेनापति, गणक, राजश्रेष्ठी, दण्डाधिपति, मन्त्री, महत्तर, [2]तल्वर, चत्वारो वर्णा चतुरङ्गबल, पुरोहित, अमात्यो, महामात्य । आरण्यमाटविकम्, दुर्गं धूल्किोट[3]पर्वतादि, मित्र सौहृदम् । उक्तञ्च—

---

जो दूसरोंकी सुखकी प्राप्ति तथा दुखहानिकी चिन्तासे प्रेरित होकर स्वयं ही लोकोपकारक कार्योंमें लगा रहता था, अपने वैभव और सम्पत्तिके कारण कभी उसके मनमें अहंकार नहीं आया था। वह न कभी प्रमादमें पड़ता था और न खेदखिन्न ही होता था तथा अपने दिन-रातको धर्म-अर्थ तथा कामके कार्योंका विभाग करके जीवन व्यतीत करता था ॥९॥

यह राजा संसारके विनाशके भयसे शत्रुओंका संहार करता था। सन्तानकी इच्छा से काम सेवन करता था, राजस्वको भी लेकर दूसरोंको देनेके लिए प्रजासे लेता था इस प्रकार उसने अपने जन्मको ही परार्थ कर रखा था ॥१०॥

यतः इसने काम, क्रोधादि छहों प्रकारके अन्तरग शत्रुओंको जीत लिया था अतः मौल, भृत, आदि छह प्रकारकी सेना इसे नहीं छोड़ती थी। मद्य, स्त्री, द्यूत, आदि सातों व्यसन इसके मनमें नहीं आये थे अतएव स्वामी, अमात्य, सुहृद, कोश आदि सातों प्रकृतियोंकी दृष्टिसे उसकी स्थिति दृढ़ थी ॥११॥

---

१ -रङ्गोऽरिपड्व-द०, प० । २ वल्वर-प० । ३ कोटि-प०, कोट-द० ।

श्रैणं दौर्गं च सौहार्दं मौलं भार्त्तकमाटवम् ।
षड्विधं च बलं प्राहुर्बुधा नीतिविचक्षणा. ॥१॥

यत् यस्मात् कारणात् यस्य नरपतेर्नादीपि न दीप्त बभूव किं दण्डपारुष्यकामवाक् पारुष्यार्थदूषणमद्य-स्त्रीद्यूतपापर्द्धिकोपस्वभाव व्यसनसप्तकम्—उक्तञ्च

"दण्डपारुष्यकन्दर्पवाक्पारुष्यार्थदूषणम् ।
प्राकृतं सप्तकं प्रोक्तं नीतिशास्त्रविशारदै ॥१॥

अतएव सप्तसु प्रकृतिषु स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गमित्रलक्षणासु स्थिरा निश्चला स्थितिरवस्थानम-भवदभूत् । उक्तञ्च—

"स्वाम्यमात्य. सुहृत्कोशो राष्ट्र दुर्गं तथा बलम् ।
प्राकृतं सप्तकं प्रोक्त नीतिशास्त्रविशारदै. ॥१॥ [ का. नी. ४।१ ]

एतेन नरपतेर्जितेन्द्रियत्व प्रदर्शितम्[1] ।

**विवर्ज्य यः प्रियमहिर्षीं युवाधिपं स्वमप्यतः परमुपनीय लक्ष्यताम् ।**
**सदोपधाविधिभिरमात्यमेकशो यथोचितं पदमनयद्विशोधितम् ॥१२॥**

विवर्ज्येति—यो नृपति सदा सर्वकाल यथोचित (यथा) योग्य विशोधित निर्बाध पद पदवीममात्य सचिव महत्तर पुरोहित दण्डनायकञ्च अनयत् नीतवान् कथमेकश. एकमेक किं कृत्वा पूर्वं विवर्ज्य वर्जयित्वा किं किं प्रियमहिषीं पट्टराज्ञीं युवाधिप मुख्यकुमार स्वमपि च किं कृत्वा लक्ष्यता विशोध्यभावमुपनीय नीत्वा कथम्भूत पर केभ्य. अत एभ्य' प्रियमहिष्यादिभ्य' कै. कृत्वा उपधाविधिभि । धर्मार्थकामभयेषु व्याजेन पर-चित्तपरीक्षणमुपधा तस्या विधयो विधानानि तैस्तथोक्तै । उक्तञ्च—

"छलेन परचित्ताना धर्मार्थकामभीतिषु ।
परीक्षण विधीयेत सोपधा कथ्यते बुधै ॥१॥

समुच्चयः ॥१२॥

**वणिक्पथे खनिषु वनेषु सेतुषु व्रजेषु योऽहनि निशि दुर्गराष्ट्रयोः ।**
**गुणाधिकं धनमववर्द्धदुद्धतं यशोधनं ध्रुवमुपचेतुमुज्ज्वलम् ॥१३॥**

वणिगिति—ध्रुवमहमेव मन्ये उज्ज्वल शुभ्रमुद्धतमुल्वण यशोधनमुपचेतुमुपचय नेतु गुणाधिक गुणै-रौदार्यादिल्क्षणैरधिक प्रचुर धन कनकादिकमहनि दिवसे निशि रात्रौ अववर्द्धत् वृद्धिं प्रापयामास । क क व-णिक्पथेषु वणिजा मार्गेषु खनिषु रत्नोत्पत्तिस्थानेषु वनेषु कान्तारेषु सेतुषु समुद्रतटेषु व्रजेषु गोकुलेषु दुर्गराष्ट्रयोश्च "यस्यानि (भि) योगात् परे दु ख गच्छन्ति दुर्जनोद्योगविषया वा स्वस्य (विजिगीषो ) आपदो गमय-तीति दुर्गम्" [नी वा २०।१] स्वाभाविकमाहार्यं द्विविधम् । "पशुधान्यहिरण्यसम्पदा राजते शोभते इति राष्ट्रम्" [नी वा १९ १] इति उत्प्रेक्षा—॥१३॥

**अनारतं तिसृषु सतीषु शक्तिषु त्रिवर्ग्यपि व्यभिचरति स न स्वयम् ।**
**पदातयः किमु किमरातयः सुता सहायता किमु किल यस्य बन्धुता ॥१४॥**

---

अपने आप, पट्टरानी तथा युवराजके अतिरिक्त अमात्य आदि प्रत्येक महान् अधि-कारीको किसी व्याजसे प्रत्येक विषयकी कसौटीपर कसके ही उसके योग्य निर्दोष तथा स्थिर पदपर उसकी नियुक्ति करता था ॥१२॥

निश्चित ही वह राजा निर्मल तथा पर्याप्त यशरूपी धनको संचित करनेके लिए ही व्यवसायियोंसे भरे बाजारों, खनिक क्षेत्रों, अरण्यों, समुद्र तीरोंपर स्थित पत्तनों, पशु-पालकोंकी बस्तियों, दुर्गों तथा राष्ट्रोंमें गुणोंकी अपेक्षा प्रचुर मात्रामें सम्पत्तिको बढ़ा रहा था ॥१३॥

१. -तम् । विल्द्ववानलङ्गार -द०, प० ।

अनारतमिति—अनारतमनवरत स्वयमात्मना त्रिवर्ग्यपि त्रयाणा धर्मार्थकामरूपाणा वर्गाणा समाहार-स्त्रिवर्गा धर्ममभिभूय न हि तादृगमर्थोपार्जनम् तन्मूलत्वादर्थस्य यथैव नानुभवनाय कुठारच्छिन्नभूरुहप्रफुल्लफुल्लसम्भार यथोक्तमर्थोपार्जनमन्तरेण न यथोक्तकामानुभवनम् सजलजलधरयुक्तजलमन्तरेण स्वच्छातुच्छपल्लवजालानुभवनवत् । कामानुभवनमन्तरेण न सन्तानोत्पत्ति वारिणा विना वीजाङ्कुरवत् सन्तानादृते नार्थोपयोग रमणेन विना यथा विधवातरुणीतारुण्योपभोग. । अर्थोपयोगेन विना नो धर्म यथा तपस्यया विना न स्वर्गफल विभूतय. ।

इत्यनया विरोधयुक्त्या साऽपि त्रिवर्ग्यपि यत्[1] यस्य नरपतेर्न व्यभिचरति स न[2] तत्याज कासु सतीषु वर्त्तमानासु[3] तिसृषु शक्तिषु प्रभुमन्त्रोत्साहलक्षणासु स्वपरज्ञानविधायिन्य प्रभुमन्त्रोत्साहशक्तिरूपास्तिस्र शक्तयो भूभृता विभूतिहेतव. । उक्तञ्च—

"तिस्रो हि शक्तय स्वामिमन्त्रोत्साहोपलक्षणा. ।
स्वपरज्ञा विधाविन्यो राज्ञा राज्यस्य हेतव ॥१॥

तासु इति अपरार्द्धेऽप्यध्याहार्यमत्र । अतएव उ सम्बोधने किल आश्चर्ये किमाक्षेपे कि पदातयो भृत्या व्यभिचरिष्यन्ति अपि तु न । एव किमरातय शत्रव. कि सुता पुत्रा कि सहायता मित्रसमूह । अत्राक्षेपालङ्कार ॥१४॥

**भुवस्तलं प्रतपति संभ्रमन् रविः शशी चरन् स्वयमभिनन्दयत्ययम् ।**
**चरैः स्थितः पुरि सचराचरं जगत्परीक्ष्य यः स तपति सन्धिनोति च ॥१५॥**

भुव इति—भुवस्तल भूमितल सम्भ्रमन् सञ्चरन् रविरय सूर्योऽय प्रतपति सन्तापयति तथा चरन् शशी चन्द्रोऽय स्वयमात्मनाभिनन्दयति प्रीणयति । यो भूमिपाल पुरि नगर्यां स्थित सन् चरै स्वपरमण्डले कार्याकार्यावलोकने चक्षुषीव चरन्ति प्रवर्त्तते इति चरा तै कृत्वा सचराचर जगत् सजङ्गमाजङ्गम भुवन परीक्ष्य आत्मप्रतीतिमानीय तपति स्म सन्तापयामास सन्धिनोति स्म च प्रीणयाञ्चकार च । अत्र प्रतापनाह्लादनाभ्या सूर्याचन्द्रमसावतिशेते स्मेति । अतिशयोक्ति ॥१५॥

**कृषीवलं कृषिभुवि वल्लवं वहिर्वनेचरं चरमटवीष्वयुङ्क्त यः ।**
**वणिग्जनं पुरि पुरसीम्नि योगिनं नियोगिनं नृपसुतबन्धुमन्त्रिषु ॥१६॥**

कृषीवलमिति—यो राजा कृषिभुवि क्षेत्रभूमौ कृषीवल कुटुम्बिकरूप चर गूढपुरुषमन्वयुङ्क्त प्रेरयाञ्चकार ।

---

प्रभु-मन्त्र-उत्साह रूप तीनों समीचीन शक्तियोंका सर्वदा उपयोग करनेपर भी जिसने धर्म-अर्थ काम रूपी त्रिवर्गका भी परस्पराविरोधेन पालन किया था। अनुगामियों, पुत्रों तथा सहायकोंकी तो कहना ही क्या है इसके शत्रु भी मित्रके समान आचरण करते थे ॥१४॥

सूर्य स्वयं सारे संसारका परिभ्रमण करके उसे आतप देता है। चन्द्रमा भी संचार करता हुआ ही सृष्टिको अपनी चन्द्रिकासे आह्लादित करता है किन्तु यह दशरथ अथवा पाण्डुराजा राजधानीमें ही रहता हुआ स्थावर तथा जंगम संसारकी गुप्तचरोंके द्वारा पूरी जानकारी रखता था और उनपर प्रसाद तथा निग्रह करता था ॥१५॥

कृषिके क्षेत्रमें उसने किसानको ही चर बनाया था, वाह्य प्रदेशोंमें ग्वालोंको तथा जगलोंमें भील आदिको ही गुप्तचरके पदपर नियुक्त किया था, शहरोंमें व्यवसायियोंको, देशकी सीमाओंपर कौलादि साधुओंको तथा अन्य राजाओं, राजपुत्रों, कुटुम्बियों तथा मंत्रियोंमें उनके कर्मचारियोंको चर बनाये था ॥१६॥

अन्त पुरोंमें वहिरों, अपाङ्गों तथा कुबड़ोंपर च ... ग्रा।

---

१ यत्र—द०, प० । २ न परस्परं त्यजति स्म—द० । ३. स्थिता—प०, द० ।

श्रैणं दौर्गं च सौहार्दं मौलं भार्त्तकमाटवम् ।
षड्विधं च बलं प्राहुर्बुधा नीतिविचक्षणाः ॥१॥

यत् यस्मात् कारणात् यस्य नरपतेर्नादीपि न दीप्त बभूव किं दण्टपारुष्यकामवाक् पारुष्यार्थदूषणमद्यस्त्रीद्यूतपापर्द्धिकोपस्वभाव व्यसनसप्तकम्–उक्तञ्च

"दण्डपारुष्यकन्दर्पवाक्पारुष्यार्थदूषणम् ।
प्राकृतं सप्तकं प्रोक्तं नीतिशास्त्रविशारदैः ॥१॥

अतएव सप्तसु प्रकृतिषु स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गमित्रलक्षणासु स्थिरा निश्चला स्थितिरवस्थानमभवदभूत् । उक्तञ्च—

"स्वाम्यमात्य. सुहृत्कोशो राष्ट्र दुर्गं तथा बलम् ।
प्राकृतं सप्तकं प्रोक्त नीतिशास्त्रविशारदैः ॥१॥ [ का. नी ४।१ ]

एतेन नरपतेर्जितेन्द्रियत्व प्रदर्शितम्[1] ।

**विवर्ज्य यः प्रियमहिषीं युवाधिपं स्वमप्यतः परमुपनीय लक्ष्यताम् ।**
**सदोपधाविधिभिरमात्यमेकशो यथोचितं पदमनयद्विशोधितम् ॥१२॥**

विवर्ज्येति—यो नृपति' सदा सर्वकाल यथोचित (यथा) योग्य विशोधित निर्बाध पद पदवीममात्य सचिव महत्तर पुरोहित दण्टनायकञ्च अनयत् नीतवान् कथमेकश एकमेक किं कृत्वा पूर्वं विवर्ज्य वर्जयित्वा किं किं प्रियमहिषीं पट्टराज्ञी युवाधिप मुख्यकुमार स्वमपि च किं कृत्वा लक्ष्यता विशोध्यभावमुपनीय नीत्वा कथम्भूत पर केभ्य' अत एभ्य प्रियमहिष्यादिभ्य' कैः कृत्वा उपधाविविभि. । धर्मार्थकामभयेषु व्याजेन परचित्तपरीक्षणमुपधा तस्या विधयो विधानानि तैस्तथोक्तैः । उक्तञ्च—

"छलेन परचित्ताना धर्मार्थकामभीतिषु ।
परीक्षण विधीयेत सोपधा कथ्यते बुधै ॥१॥

समुच्चयः ॥१२॥

**वणिक्पथे खनिषु वनेषु सेतुषु व्रजेषु योऽहनि निशि दुर्गराष्ट्रयोः ।**
**गुणाधिकं धनमववर्द्धदुद्धतं यशोधनं ध्रुवमुपचेतुमुज्ज्वलम् ॥१३॥**

वणिगिति—ध्रुवमहमेव मन्ये उज्ज्वल शुभ्रमुद्धतमुल्वण यशोधनमुपचेतुमुपचय नेतु गुणाधिक गुणैरौदार्यादिलक्षणैरधिक प्रचुर धन कनकादिकमहनि दिवसे निशि रात्रौ अववर्द्धत् वृद्धिं प्रापयामास । क क वणिक्पथेषु वणिजा मार्गेषु खनिषु रत्नोत्पत्तिस्थानेषु वनेषु कान्तारेषु सेतुषु समुद्रतटेषु व्रजेषु गोकुलेषु दुर्गराष्ट्रयोश्च "यस्यानि (भि) योगात् परे दु ख गच्छन्ति दुर्जनोद्योगविषया वा स्वस्य ( विजिगीषो ) आपदो गमयतीति दुर्गम्" [नी वा २०।१] स्वाभाविकमाहार्य द्विविधम् । "पशुधान्यहिरण्यसम्पदा राजते शोभते इति राष्ट्रम्" [नी वा १९ १] इति उत्प्रेक्षा—॥१३॥

**अनारतं तिसृषु सतीषु शक्तिषु त्रिवर्ग्यपि व्यभिचरति स न स्वयम् ।**
**पदातयः किमु किमरातयः सुता सहायता किमु किल यस्य बन्धुता ॥१४॥**

---

अपने आप, पट्टरानी तथा युवराजके अतिरिक्त अमात्य आदि प्रत्येक महान् अधिकारीको किसी व्याजसे प्रत्येक विषयकी कसौटीपर कसके ही उसके योग्य निर्दोष तथा स्थिर पदपर उसकी नियुक्ति करता था ॥१२॥

निश्चित ही वह राजा निर्मल तथा पर्याप्त यशरूपी धनको संचित करनेके लिए ही व्यवसायियोंसे भरे बाजारों, खनिक क्षेत्रों, अरण्यों, समुद्र तीरोंपर स्थित पत्तनों, पशुपालकोंकी बस्तियों, दुर्गों तथा राष्ट्रोंमें गुणोंकी अपेक्षा प्रचुर मात्रामें सम्पत्तिको बढ़ा रहा था ॥१३॥

१ -तम् । विरद्धवानलङ्कार –द०, प० ।

अनारतमिति—अनारतमनवरत स्वयमात्मना त्रिवर्ग्यपि त्रयाणा धर्मार्थकामरूपाणा वर्गाणा समाहार-स्त्रिवर्गी धर्ममभिभूय न हि ताद्दशमर्थोपार्जनम् तन्मूलत्वादर्थस्य यथैव नानुभवनाय कुठारच्छिन्नभूरुहप्रफुल्ल-फुल्लसम्भार. यथोक्तमर्थोपार्जनमन्तरेण न यथोक्तकामानुभवनम् सजलजलधरयुक्तजलमन्तरेण स्वच्छातुच्छ-पल्लवजालानुभवनवत् । कामानुभवनमन्तरेण न सन्तानोत्पत्ति वारिणा विना बीजाङ्कुरवत् सन्तानादृते नार्था-पयोग रमणेन विना यथा विधवातरुणीतारुण्योपयोग । अर्थोपयोगेन विना नो धर्म यथा तपस्यया विना न स्वर्गफल विभूतय ।

इत्यनया विरोधयुक्त्या साऽपि त्रिवर्ग्यपि यत्[1] यस्य नरपतेर्न व्यभिचरति स न[2] तत्याज कासु सतीषु वर्त्तमानासु[3] तिसृषु शक्तिषु प्रभुमन्त्रोत्साहलक्षणासु स्वपरज्ञानविधायिन्य प्रभुमन्त्रोत्साहशक्तिरूपास्तिस्र शक्तयो भूभृता विभूतिहेतव । उक्तञ्च—

"तिस्रो हि शक्तय स्वामिमन्त्रोत्साहोपलक्षणा" ।
स्वपरज्ञा विधायिन्यो राज्ञा राज्यस्य हेतव ॥१॥

तासु इति अपराद्धेंष्यध्याहार्यमत्र । अतएव उ सम्बोधने किल आश्चर्ये किमाक्षेपे किं पटातयो भृत्या व्यभिचरिष्यन्ति अपि तु न । एव क्रिमरातय शत्रव कि सुता पुत्रा कि सहायता मित्रसमूह । अत्राक्षेपालङ्कार ॥१४॥

**भुवस्तलं प्रतपति संभ्रमन् रविः शशी चरन् स्वयमभिनन्दयत्ययम् ।**
**चरैः स्थितः पुरि सचराचरं जगत्परीक्ष्य यः स तपति सन्धिनोति च ॥१५॥**

भुव इति—भुवस्तल भूमितल सम्भ्रमन् सञ्चरन् रविरय सूर्योऽय प्रतपति सन्तापयति तथा चरन् शशी चन्द्रोऽय स्वयमात्मनाभिनन्दयति प्रीणयति । यो भूमिपाल पुरि नगर्यां स्थित सन् चरै स्वपरमण्डले कार्याकार्यावलोकने चक्षुषीव चरन्ति प्रवर्त्तते इति चरा तै कृत्वा सचराचर जगत् सजङ्गमाजङ्गम भुवन परीक्ष्य आत्मप्रतीतिमानीय तपति स सन्तापयामास सन्धिनोति स च प्रीणनाञ्चकार च । अत्र प्रतापनाह्ला-दनाभ्या सूर्याचन्द्रमसावतिशेते स्मेति । अतिशयोक्ति. ॥१५॥

**कृषीवलं कृषिभुवि वल्लवं वहिर्वनेचरं चरमटवीष्वयुङ्क्त यः ।**
**वणिग्जनं पुरि पुरसीम्नि योगिनं नियोगिनं नृपसुतबन्धुमन्त्रिषु ॥१६॥**

कृषीवलमिति—यो राजा कृषिभुवि क्षेत्रभूमौ कृषीवल कुटुम्बिकरूप चर गूढपुरुषमन्वयुङ्क्त प्रेरयाञ्चकार ।

---

प्रभु-मन्त्र-उत्साह रूप तीनों समीचीन शक्तियोंका सर्वदा उपयोग करनेपर भी जिसने धर्म-अर्थ काम रूपी त्रिवर्गका भी परस्पराविरोधेन पालन किया था। अनुगामियों, पुत्रों तथा सहायकोंकी तो कहना ही क्या है इसके शत्रु भी मित्रके समान आचरण करते थे ॥१४॥

सूर्य स्वयं सारे संसारका परिभ्रमण करके उसे आतप देता है। चन्द्रमा भी संचार करता हुआ ही सृष्टिको अपनी चन्द्रिकासे आह्लादित करता है किन्तु यह दशरथ अथवा पाण्डुराजा राजधानीमें ही रहता हुआ स्थावर तथा जंगम संसारकी गुप्तचरोंके द्वारा पूरी जानकारी रखता था और उनपर प्रसाद तथा निग्रह करता था ॥१५॥

कृषिके क्षेत्रमें उसने किसानको ही चर बनाया था, बाह्य प्रदेशोंमें ग्वालोंको तथा जंगलोंमें भील आदिको ही गुप्तचरके पदपर नियुक्त किया था, शहरोंमें व्यवसायियोंको, देशकी सीमाओंपर कौलादि साधुओंको तथा अन्य राजाओं, राजपुत्रों, कुटुम्बियों तथा मात्रयोंमें उनके कर्मचारियोंको चर बनाये था ॥१६॥

अन्त पुरोंमें बहिरों, अपाङ्गों तथा कुबड़ोंपर चरत्वका भार था। इस प्रकार वह राजा

---

१ यत्र–द०, प०। २ न परस्पर त्यजति स्म–द०। ३, विद्यमानासु–प०, द०। ४. पल-क्षिता–प०, द०।

एव प्रतिसम्बन्धिनी क्रिया तथा बहिर्वाह्य प्रदेशे वल्लव गोपाल्म्। अटवीपु अरण्यानीषु वनेचर भिल्ल पुरि नगर्या वणिग्जन किराटकवेपवन्तम्। पुरसीम्नि नगरसीमाया योगिन भट्टारक कौल्कादिवेषधारिण गूढपुरुष नृपसुतबन्धुमन्त्रिपु नरपतितनयवान्धवसचिवेषु नियोगिन व्यापारिणम् इत्यनेन नरपतेर्नीतिकौशल्यमुक्तम्। समुच्चय. ॥१६॥

**वधूगृहे वधिरकिरातवामनं स्वरक्षया परबलसंग्रहेण च।**
**प्रयुक्तवान् प्रणिधिमनाकुलं परानबोधि यः प्रतिबुबुधे न चापरैः ॥१७॥**

वधूगृह इति–वधूगृहे रामामन्दिरे वधिरकिरातवामन वधिर.[1] प्रसिद्धः किरातो विकलाङ्गः वामनः कुब्जक. समाहारापेक्षयैकत्व स्वरक्षया आत्मावनेन तथा परबल्सग्रहेण रिपुसैन्यपरिकल्नेन सह प्रणिधिं चरञ्च प्रयुक्तवान् प्रेरितवान् कथ यथा भवति अनाकुल्म् विनष्टसभ्यासभ्यक्षोभतया स्वीकृतमनोधैर्यावलम्बन यथा अतएव यो राजा परान् इतरान् शत्रून् अवोधि ज्ञातवान् कर्मतापन्नो राजा अपरैश्च शत्रुभिरपि न प्रतिबुबुधे न प्रतिज्ञात इति। समुच्चय ॥१७॥

**अवाहयत्तुरगमवाहितं गजं न चाविशद्वनमविगाहितं हितैः।**
**ददर्श यः सपदि न सिद्धतापसं समाययौ न तमवरोधमेककः ॥१८॥**

अवाहयदिति–हितै परीक्षितै[2]नरै' अवाहितमनधिरूढ तुरगमश्व गज दन्तिन च यो राजा नावाहयत् नाचाल्यत्। अविगाहितमनालोडित वन कान्तार नाविशत् न प्रविष्टवान् सपदि सहसा सिद्धतापस वेषधारिण तपस्विन न ददर्श नालोक्तिवान् तथा त लोकप्रसिद्ध मवरोधमन्त.पुरमेकक. एकाकी सन् न समाययौ न गतवान्। अत्र तात्पर्यम्–अन्त पुररक्षिकाभिर्महत्तरीभि. सार्द्धमन्त पुर प्राविशत् इत्यर्थ। अनेन नीतिकौशल्यमुपपादितम्[3] ॥१८॥

**इदं मया नयमपदिश्य वर्णितं शरं तु यः क्षिपति न यावदाहवे।**
**शरासनं शरमिषुधिं परोऽक्षिपत् परं विदुर्यमनप्रवर्त्तकं महः ॥१९॥**

इदमिति—मया कविना धनञ्जयेन नयमपदिश्य नीतिमाश्रित्य इद पूर्वोक्त वर्णितमधुना राज्ञो विक्रमो व्यावर्ण्यते। अत्र तु प्रयोगादेवेदमुपलक्ष्यते[4]। आहवे–सग्रामे प्रथममेक शर यो राजा यावन्न क्षिपति न क्षेप्स्यति तावत् शरासन धनुः शर वाणमिपुधिं भस्त्रा परः शत्रु अक्षिपत् मुक्तवान्। अतएव पर केवल य राजानमनपवर्त्तक नित्य महस्तेजो विदु विदन्तीति नीतिमन्त इति शेष। विरोधालङ्कार ॥१९॥

---

आत्मविश्वासपूर्वक अपनी रक्षा तथा शत्रुसेनाके वशीकरणके साथ-साथ सर्वत्र गुप्तचरोंका प्रयोग करता था। वह दूसरोंको भलीभांति जानता था किन्तु शत्रुओंके द्वारा इसका एक भी रहस्य न जाना गया था ॥१७॥

उस घोड़े या हाथीपर नहीं चढता था जिसपर अनुगत आत्मीय जन न बैठ चुके हों। उस वनमें नहीं जाता था जिसमें पहिले उसके आदमी न घूम आये हों। सिद्ध आदि वेषधारी साधुओंसे सहसा भेंट नहीं करता था और अन्तःपुरमें कभी भी अकेला प्रवेश नहीं करता था ॥१८॥

यह वर्णन राजाकी नीतिनिपुणताको प्रधानता देनेके लिए किया है किन्तु उसका प्रताप ऐसा था कि कहीं पर भी उसका उल्लंघन नहीं होता था—युद्धमें जबतक वह वाण छोड़े तबतक ही शत्रु वाण, धनुष और तूणीरको भी फेंककर आत्मसमर्पण या पलायन कर देते थे ॥१९॥

---

१ नष्टकर्णं –प द। २ परीक्षितान्त करणै —प, द। ३. समुच्चयालङ्कार –प, द०। ४. उपलम्भते–प, द–।

**न विक्रमः शरभनिपातसन्निभः शृगालवद्भयबहुलो न यो नयः ।**
**न निन्द्यते स्वयमनुकम्प्यते परैर्नयेन वा चरितमधत्त तादृशम् ॥२०॥**

नेति—यस्य नृपते विक्रम पौरुष शरभनिपातसन्निभ 'शरभस्याष्टापदस्य सन्निपातेन सन्निभ तुल्यो नाभूत् । अत्रायम्भाव —विवेकविकलो हि अष्टापद किल लीलया विचित्रोत्प्लवनविधानोपपन्नो नखराङ्कुरैर्मत्तमातङ्गगण्डस्थल विदार्य पृष्ठोद्भवचरणचतुष्टयमध्ये निक्षिप्य त च मृतकुथितगजेन्द्रपूयसम्भवैर्जन्तुजातैर्विदार्यमाणो म्रियत इत्यनया युक्त्या योऽपर्यालोचिततया विहितो विक्रम स्वस्य मरणाय जायते स न बभूवेति भाव । शृगालवद्भयबहुलो नय' भय बहुल प्रचुर यस्मिन् यस्येति वा स तथाभूतो नय तस्य नृपतेर्न बभूव । कस्येव शृगालस्येव । अत्र तात्पर्यम्—

शृगालस्य यथा समर्थजन्तुजातमालोकमालोक्य चकितचकितत्वेन प्रपलायनमिति तादृगो नृपतेर्न बभूवेति भाव । स्वयमात्मना तादृग चरित यो नृपतिरधत्त कृतवान् येन चरितेन परै शत्रुभिर्न निन्द्यते । न निन्दाविषयीक्रियते । नानुकम्प्यते नानुकम्पाविषयीक्रियत इति' ॥२०॥

**यदा व्यरित्सदरिमदित्सदेष वा धनं तदारुषदतुषच्च यः परम् ।**
**प्रकोपसम्मदविषयो गुणः फलं विनोद्गमाद्वट इव यस्य सन्ददे ॥२१॥**

यदेति—यो नृपतिर्यदा यस्मिन् काले अरि रिपु व्यरित्सत् हन्तुमैच्छत् वा अथवा धन हिरण्यादिद्रव्यमदित्सत् दातुमैच्छत् पर केवल तदा तस्मिन् काले अरुषत् रुष्टवान् अतुषच्च तुष्टवान् च । अत्र कारणापेक्षया रोषतोषव्यवस्थितचेता बभूवेति भाव । उद्गमाद्विना कुसुममन्तरेण वट इव न्यग्रोध इव यस्यावनीश्वरस्य प्रकोपसम्मदविषयो रोषतोषगोचरो गुण फल सन्ददे समयच्छत् । अत्र यदैव हर्षामर्षलक्षणो गुणो ह्युत्पन्नस्तदैव फलप्रदानकालयापनामकार्षीत् । समुच्चयालङ्कार ॥२१॥

**प्ररोपयन्नयभुवि मूलसन्ततिं प्रसारयन् दिशि बहुशाखमन्वयम् ।**
**फलं दिशन् विपुलमपुष्पयापनं जनस्य यः समजनि कल्पभूरुहः ॥२२॥**

प्ररोपयन्निति—यो नृप [2] जनस्य भूरुह सुरपादप समजनि अभूत् किं कुर्वन् नयभुवि नीतिभूमौ मूलसन्तति दुर्गाध्यक्षधनाध्यक्षकर्माध्यक्षसेनापतिपुरोहितामात्यज्योतिशास्त्रज्ञा हि मूल क्षितिपतीना मूलस्य सन्ततिं सन्तान प्ररोपयत् स्थापयत् । उक्तञ्च—

"भाण्डागारी चमूभर्ता [3] दुर्गाध्यक्ष पुरोहित ।
कर्माध्यक्षोऽथ दैवज्ञो मन्त्री मूल हि भूभृताम् ॥१॥

दिशि आशाया बहुशाख बह्वय शाखा पुत्रपौत्रादयो यत्र तथाभूतमन्वयमाम्नाय प्रसारयन् विस्तारयन् अपुष्पयापनमनायासलभ्य विपुल प्रचुर फल दिशन् सयच्छन् कल्पवृक्षोऽप्येवभूत नयभुवि न्यायभूमौ मूलसन्ततिं नेत्रसमूह प्ररोपयन् अधोऽधो नयन् अन्वय बुध्नम् बहुशाख प्रचुरविटपस्थान प्रसारयन् प्रतानीकुर्वन् विपुलमपुष्पयापन न पुष्पवद्यापनाकालगमनिका यत्र तदित्थभूत फल दिशन्निति । रूपकालङ्कार ॥२२॥

---

उसका पराक्रम सिंहके अविचारित आक्रमण और आत्मविनाश सदृश न था और न उसका कूटनीतिका प्रयोग शृगालके समान अत्यधिक भीत होकर चलनेका था । अपितु इस राजाका कुछ ऐसा आचरण था जिसके कारण न तो शत्रु उसकी निन्दा कर पाते थे और न उन्हें इसपर अनुग्रह करनेका ही अवसर मिलता था ॥२०॥

यह राजा जब शत्रुका संहार करना चाहता था तभी रुष्ट होता था अथवा जब धनादि देनेकी इच्छा करता था तभी प्रसन्न होता था । उसकी रोषणता तथा प्रसन्नतारूपी गुण वट वृक्षके समान विना फूल दिये ही फल दे देते थे ॥२१॥

राजनीति रूपी भूमिके ऊपर भण्डारी, सेनापति, दुर्गपाल आदि राजतन्त्रके सातों मूलोंको स्थिर करता हुआ, समस्त दिशाओंमें अपने कुलके ही शाखा राजोंको प्रसार करता

---

१ शार्दूलस्य—प, द । २ समुचयालकार—प, द । ३ भूभर्ता–द. । भूतभर्त्ता—प ।

**जलाशयं दिशि दिशि पङ्कजीविनं नवोत्थितं नियतिषु देशकालयोः ।**
**विमर्द्य षष्ठिकमिव विद्विषं भुवि प्ररोपयन्नतुलमवाप यः फलम् ॥२३॥**

जलाशयमिति—यो नृपतिः अतुल्मसाधारण फल्मलब्ध प्राप । किं कुर्वन् ? दिशि दिशि विद्विप शत्रु तथा प्ररोपयन् किं कृत्वा पूर्व विमर्द्य स्वस्वस्थानात् प्रचाल्य कासु सतीषु देशकाल्योर्नियतिपु कथम्भूत सन्त जडाशय जडचेतस्क पङ्कजीविन पङ्केन पापेन जीवतीत्येवशील पुन नवोत्थित नूतनसमुत्पन्नमलब्धमूल्त्वादसहायमित्यर्थ । अधुनोपमानस्यार्थ. प्रदर्श्यते । इव यथा षष्ठिक व्रीहिविशेष दिशि दिशि प्ररोपयन् कश्चित्पामरादिर्विपुल फल प्राप्नोति किं कृत्वा पूर्व देशकाल्योर्नियतिषु 'विमर्द्य' मल्त्विा कीदश सन्त जलाशय जलमेवाशय' स्थान यस्य त तथोक्त पङ्कजीविन पङ्कात् कर्दमात् जीव आत्मा अस्यास्तीति त तथोक्त नवोत्थितमिति शेष.[1] ॥२३॥

**सुहृज्जनं कृशयति यः स्म कर्कशं पदानतं द्विषमपि तं व्यगाहत ।**
**निजं मलं क्षिपति हि वार्द्धिरुद्धतं नदीनदं समुपनतं विगाहते ॥२४॥**

सुहृदिति—यो नृपति. कर्कश निर्दय सुहृज्जन (मित्रलोक) कृशयति स्म तनूचकार । (त लोकप्रसिद्ध) पदानत चरणपतित[3] द्विषमपि (शत्रुमपि) व्यगाहत स्वीचकार । अर्थान्तर "न्यस्यति—

वार्द्धि. समुद्रो ( हि स्फुट ) निजम् ( आत्मीयम् ) उद्धतम् (उत्कट) मल बहि. क्षिपति बहि. कुरुते । समुपनत ( सम्यक् ) प्रह्वीभूत नदीनद पूर्ववाहिन्यो निम्नगा नद्य. पश्चिमवाहिन्यो नद्यो नदा नद्यश्च नदाश्च नदीनद विगाहते गृह्णाति[5] 'गुणग्राहकोऽयमिति दर्शितम् ॥२४॥

**विवर्द्धितानतिकठिनान्नखानिव प्रियानिव स्खलितगतीन्समुच्छिनत् ।**
**पुपोष यस्तमिह नयेन विक्रिया भवत्यपि स्वपठितमन्त्रतो भयम् ॥२५॥**

विवर्द्धितानिति—यो नृपतिः विवर्द्धितान् वृद्धिं पापितान् अतिकटिनान् अतिनिष्ठुरहृदयान् स्खलितगतीन् स्खलिते पापे गतिर्येषा तान् प्रियानपि नखानिव समच्छिनत् सम्यक् चिच्छेद । अत्र वासनेयम्—

यथा सम्पद्गर्वितान् निर्दयान् पापीयस. प्रियानपि स्त आत्मीयोच्चपदादुत्थाप्य[7] स्तोकपदे स्थापयामास । यथा दिवा कीर्ति वृद्धिगतान् कररुहान् भ्रष्टगतीन् प्रियान् पाणिपादशोभाविधायिनो नखान् छिनत्तीत्यर्थ. ।

---

हुआ तथा अनायास ही सुख-शान्तिरूपी फलोंको देता हुआ वह राजा जनताके लिए कल्पवृक्षके समान था क्योंकि कल्पवृक्ष भी मर्यादापालक भोगभूमिमें होते हैं तथा पुष्टतने शाखायुक्त होते हैं और इच्छा मात्रसे वे दश प्रकारकी भोग-सामग्री देते है ॥२२॥

शुभ ग्रहों तथा अनुकूल देशकालमे तुरन्त हुए मूढ़मति तथा पापाचारी शत्रुको सब दिशाओंमें पराजित करके वह विनम्र हो जानेपर फिर धानके समान स्थापित करता था और इससे अतुल सम्पत्तिको प्राप्त करता था। धानके लिए भी कीचड़से पूर्ण तालावादिको उचित समय तथा देशमें खूब जोत कर जब विधि वर्ष ले तब उगनेके बाद ही रोप देनेसे वह खूब फलता है ॥२३॥

वह राजा कठोर अथवा निर्दय मित्रको भी दण्ड देता था तथा चरणोंमे नत शत्रुको भी अपनाकर उठाता था। समुद्र भी अपने कूड़े-कचरेको वाहर फेंक देता है और नीचेकी ओर वहनेवाली नदियो तथा नदोंको अपनेमें मिला लेता है ॥२४॥

स्वयं उन्नत पदपर नियुक्त किन्तु अत्यन्त निर्दय तथा पापमार्गमें प्रवृत्त अपने प्रियलोकोंको भी नखोंकी तरह काटकर फेंक देता था [ नख भी मनुष्य स्वयं बढ़ने देता है, वे कठोर होते हैं और बहुत बढ़ जानेपर चलना फिरना कठिन कर देते हैं] यह उन्हीं लोगों-

---

१. अलब्ध–प, द । २ अत्र नीतिमत्त्वकौशल्यमुपदर्शितम् । —श्लेषालङ्कार —प, द । ३ चरणन्यस्तमस्तकम्–प, द । ४ उक्तार्थदृष्टान्तेन द्रढयत्याचार्य —प, द । ५ स्वीकरोति–प, द । ६ गुणग्राहकत्वेन विवेचकत्व समुपदर्शितम् । अर्थान्तरन्यासालङ्कार —प, द । ७. प्रचाल्य —प, द ।

किं बहुना यो राजा त पुपोष येन पोषितेनापि विक्रिया न भवति। युक्तमेतत् स्वपठितमन्त्रतो भय यथा गुरुपरम्परोपदेशमन्तरेणात्माधीतात् मन्त्रात् भय स्यात् तथात्मवर्द्धितेभ्योऽतिक्रूरेभ्य पापरतेभ्य इत्यभिप्राय । अर्थान्तरन्यास. ॥२५॥

**अनुद्धतान् युवजरतः श्रुतागमान् जितश्रमान्नयविनयान्वितान् सुतान् ।**
**अयोजयन् सममविरोधयन्परैश्चकार यः प्रकटमकर्कटस्थितीन् ॥२६॥**

अनुद्धतानिति—अनुद्धतान् अगर्वान् श्रुतागमान् श्रुत[1] आगमो व्याकरणादिर्यैस्तान् जितश्रमान् कृत-शस्त्रशास्त्राभ्यासान् नयविनयान्वितान् नीतिप्रश्रययुक्तान् युवजरत. युववृद्धान् सुतान् पुत्रान् परैरितरै. सम सार्द्धमयोजयन् अघटयन् अविरोधयँश्च यो राजा प्रकट यथा भवति तथा अकर्कटस्थितीन् न विद्यते कर्कट-स्येव कुलीरस्येव स्थितिरवस्थान येषा ते तथोक्तास्तान् चकाराकार्षीत् ।

अत्र वासनेयम्—इह हि समुत्पन्ना किल कर्कटसमा पुत्रा पितर भक्षयन्ति इति ज्ञात्वा प्रियभाषणा-दिभिरात्माज्ञाविधायिन कृतवान् इति ॥२६॥

**ऋतं वचो-विसमुदितं क्रियाफलं कृतज्ञतां स्वविभवसम्मितां मताम् ।**
**जिगीषुतां दिगवधृता कुटुम्बितामशेषभूभरणभरां बभार यः ॥२७॥**

ऋतमिति—यो राजा ऋत वच. सत्य वचन क्रियाफलम् अविसमुदितमविसवादि स्वविभवसम्मिता-मात्मविभूतिसमुदिता कृतज्ञता मतामिष्टा दिगवधृता दिक्षु अवधृता विजिगीषुता विजेतृतामशेषभूभरणभरा समस्तभूमिपोषणाधारा कुटुम्बिता प्रतिसम्बन्ध योजनीया क्रिया बभार धृतवान्[2] ॥२७॥

**प्रसेदुषि स्थितिमति यत्र राजनि ध्वजांशुकान्यपि न जहार मारुतः ।**
**स चातकः सतततृषातुरो-श्रुवाः पतिंवरावलयपरिग्रहे परम् ॥२८॥**

प्रसेदुषीति—यत्र यस्मिन् प्रसेदुषि प्रसन्ने सति स्थैर्यवति राजनि मारुतोऽपि वायुरपि ध्वजांशुकानि पताकावस्त्राणि न जहार हृतवान् । स लोकप्रसिद्ध चातक. सतततृषातुर अविरततृषाव्यग्र. पर केवल पतिंवरावल्यपरिग्रहे कन्याकङ्कणाङ्गीकारे तत्प्रसिद्धमश्रु वा वाष्पजलम् अत्रास्तिक्रियाया. अध्याहार । परिसख्याऽलकृति ॥२८॥

**बलेन यः स्वयमनिलोऽपि नानिलः सनीतिरप्यभवदनीतिगोचरः ।**
**अशीतकः शशिशिशिरः समेखलः समेखलस्त्विति न जनेन दूषितः ॥२९॥**

---

का भरण-पोषण करता था जो अनाचारको न फैलाए । क्योंकि गुरुके बिना स्वयं सिद्ध किये गये मन्त्रसे भी अनिष्ट हो जाता है ॥२५॥

नीति शास्त्रादिके पंडितों, परिश्रम करनेमें प्रवीण, शिष्टाचार और आस्थासे पूर्ण तथा अनुद्धत वृद्ध, युवक तथा पुत्रोंको अन्य लोगोंके साथ कार्यमें ही नहीं लगाया था अपितु उनका परस्परका विरोध भी नष्ट कर दिया था । उसने स्पष्ट ही उन भोगोंकी स्थितिको कैकड़ोंकी परम्परासे विपरीत कर दिया था अर्थात् युवक वृद्धोंको नष्ट नही करते थे ॥२६॥

उस दशरथ अथवा पाण्डुके वचन सत्य थे, अनुष्ठानोंका परिणाम उपयुक्त और अनु-कूल ही होता था, कृतज्ञताको अपनी विशाल सम्पत्तिसे नापता था, अभिलषित विजयकी इच्छा समस्त दिशाओंमें व्याप्त थी तथा कुटुम्बिताकी भावना समस्त संसारके भरण-पोषणमें समर्थ थी ॥२७॥

उस स्थिरमति राजाके राज्यकालमें वायु भी ध्वजाओंके कपड़ोंको नहीं चुराता (उड़ाता) था [चोरोंकी तो बात ही क्या है]। केवल चातक पक्षी ही प्यास से व्याकुल रहता था तथा पतिको वरण करके पाणिग्रहण करनेवाली कन्याकी विदाके समय ही आँसू आते थे ॥२८॥

---

१ श्रुत आकर्णित आगमो व्याकरणतर्कपड्दर्शनाभिप्रायसिद्धान्तस्वभावो यै । २ समुच्चयालङ्कार —प, द ।

बलेनेति—बलेन सामर्थ्येन कृत्वा स्वयमात्मना यो राजा अनिलोऽपि वायुरपि स कथ नानिल इति विरोधः। नैव न विद्यते इला भूमिर्यस्यासौ अनिलः न अभवत् भूमिपरित्यक्तो नाभूदित्यर्थः। सनीतिरपि सह नीत्या वर्त्तमानोऽऽपि अनीतिगोचरोऽभवदिति विरोधः। नैव न ईतयो गोचरा लोचनविषया यस्यासौ अनीतिगोचरः। ईतय सप्त। तदुक्तम्—

"अतिवृष्टिरनावृष्टिर्मूषका शलभा शुका.।
स्वचक्रं परचक्रं च सप्तैता ईतय स्मृता ॥१॥

शशिशिशिरः शशीव चन्द्र इव शिशिरः शीतल. स कथमशीतक इति विरोधः। न शीतको मन्दः कार्येष्वनलस इत्यर्थः। समे खलस्त्विति। यः समे औदासीन्यावलम्बिनि पुरुषे खलो दुर्जन'। इत्थमपि दूषितो न जनेन विरोधोऽयम्। परिह्रियते। मेखलया कटिसूत्रेण सह वर्त्तमान. यद्वा समे साधौ अखल. प्रतिपालकः शिष्टाना प्रतिपाल्न दुष्टाना निग्रह. राज्ञ धर्म इति वचनात्। उक्तञ्च—

"दुष्टाना निग्रहो नीत्या शिष्टाना प्रतिपालनम्।
राज्ञा धर्मोऽयमेवासौ नान्य कश्चिच्च विद्यते ॥१॥ इति' ॥२९॥

**न्याय्यं सुखावहमहो भुवि धर्मराज्यमित्यात्मनः प्रथयतः प्रजयानुभावम्।**
**तस्याभवत् प्रियतमा गुणपक्षपाताल्लक्ष्म्याः स्वयंवरकृता प्रथमा सपत्नी ॥३०॥**

न्याय्यमिति—अहो आश्चर्यं भुवि पृथिव्या सुखावह सुखमावहतीति तथोक्त धर्मराज्य धर्मात् प्राप्त धर्मेणोपलक्षित वा राज्य न्याय्य न्यायादनपेत यथोक्तप्रजापाल्नलक्षणमात्मन स्वस्य प्रजाया. अष्टादश प्रकृत्या कृत्वा अनुभाव माहात्म्य प्रथयत' प्रख्यापयत समस्तस्य दशरथस्य प्रियतमा भार्या लक्ष्म्याः प्रथमा सपत्नी अभवत् बभूव। किंविशिष्टा सती स्वयवरकृता स्वय परोपदेशमन्तरेण व्रियते परिणीयते राजपुत्र्या राजपुत्रो यत्रासौ स्वयवर'। स्वयवरो कृतो यया सा कस्मात् गुणपक्षपातात् गुणा औदार्यादय. तेषा पक्षपातोऽङ्गीकारः तस्मात् समानगुणशीलत्वमुपदर्शितम्।

इदानी भारतीय.—अहो भुवि न्याय्य सुखावह धर्मराज्य धर्मस्य पाण्डोर्नराधिपस्य राज्य तथोक्तमिति आत्मन. अनुभाव प्रजया कृत्वा प्रथयत तस्य पाण्डो राज्ञ प्रियतमाया लक्ष्म्या प्रथमा सपत्नी अभवत् गुणपक्षपातात् स्वयवरकृता सती। श्लेष ॥३०॥

**कलागमानामधिदेवतेव वेलेव लावण्यरसाम्बुराशेः।**
**अन्तर्निधिर्भूरिव वीरभूमिर्या वन्द्यतेऽद्यापि सती सतीभिः ॥३१॥**

कलेति—अद्यापि साम्प्रतमपि या सती पतिव्रता सतीभि पतिव्रताभि ²भामिनीभिर्वन्द्यते नमस्क्रियते

---

**वह बलमें साक्षात् अनिल (वायु) था। तो भी अनिल (भूमि-राज्य-हीन) न था, नीतिका प्रतिपालक था अनीति (अतिवृष्टि आदि छः ईतियोंसे रहित) के लिए ख्यात था। चन्द्रमाके समान शीतल था तो भी अ-शीतल (ढीला अकर्मण्य नहीं) था तथा करधनीको धारण करता था तो भी लोगोंके द्वारा उसपर समे-खल (साधु पुरुषोंके साथ दुष्टता करनेवाला) लाञ्छन नहीं लगाया गया था ॥२९॥**

**न्यायमार्गपर लीन, सबको सुखकर धार्मिक राज्य द्वारा अपना तथा प्रजाका माहात्म्य प्रकट करते हुए भी उस दशरथकी राज्यलक्ष्मीकी प्रथम सौत वह प्रियतमा रानी हुई थी जिसने गुणोंपर रीझकर स्वयंवरमें उसका वरण किया था।**

**धर्म (पाण्डु) का राज्य न्यायप्रधान, सुखकर तथा राजा प्रजाके पुण्यका फल था तथापि आश्चर्य था कि स्वयंवरमें गुणोंपर मोहित उसकी प्रियतमा रानी राज्यलक्ष्मीकी प्रमुख सपत्नी थी ॥३०॥**

**सती स्त्रियां शिक्षा संगीतादि कलाओं तथा आगमोंकी मुख्य देवीके समान, लावण्य-**

१ विरोधालङ्कार प०, द०। २ कामिनीभि —प०, द०।

सूयते वा कथम्भूता सती कलागमाना कला लिखितपठितगणितवेणुवीणादय चतुष्षष्टि आगमा. व्याकरणतर्कसिद्धान्तादय. । कलाश्च आगमाश्च तेषामविदेवतेव इष्टदेवीव लावण्यरसाम्बुराशेः शरीरसमुदायशोभावारिवारिनिवेवेंलेव अन्तर्निधिरिव अन्तर्निरातनिधानावनीव वीरभूमि वीराणामुत्पत्त्यर्थभूमि. शूरोत्पत्तिस्थानमित्यर्थ' ॥३१॥

**या कौशल्या रूपशीलेन चार्वी दीनां काकुंत्यागसान्निध्ययोगात् ।**
**दीनेष्वर्थिष्वाददे लोभवादान्नासौ राज्ञः स्वान्तमन्तर्जहार ॥३२॥**

येति—असौ कौशल्या कोशलो नाम नरेन्द्रः तस्यापत्य स्त्री कोशलाया जाता भवा वा कौशल्या[1] राज्ञी । राज्ञो दशरथस्य स्वान्त मन अन्त आन्तर जहार हृतवतीति[2] भाव. । कथभूता सती रूपशीलेन कृत्वा चार्वी मनोज्ञा या दीनेषु अकिञ्चित्करेषु[3] दीना म्लाना काकु[4] वक्रोक्ति नाददे न गृहीतवती । कस्मात्त्यागसान्निध्ययोगात् । दाननैकत्व्यसंबन्धात् । कथम्भूतात् अलोभवादात् । न विद्यते लोभस्य वाद उक्तिर्यत्र तस्मात् ।

भारतीय —असौ कुन्ती कुन्तेरपत्य स्त्री कुन्ती[5] कुन्तिनृपात्मजा पाण्डोर्नराधिपस्य स्वान्तमन्तर्जहार । या दीनेषु अर्थिषु विषये लोभवादान् कार्पण्यवचनानि न आददे न गृहीतवती । कस्मात् निध्ययोगात् निधे समूहस्य अयोग असम्बन्ध तस्मात् केषामागसामपराधानाम् । कथम्भूता सती न दीनाङ्का दीनो म्लानोऽङ्को लक्षण यस्या सा तथोक्ता अस्मिन् विशेषणे पूर्वोक्त न शब्द सम्बन्ध्यते तेनायमर्थ न दीनाकेति लभ्यते । पुन. कथम्भूता चार्वी मनोहरा केन कृत्वा रूपशीलेन रूप चक्षुर्विषय शील गृहीतव्रतप्रतिपालन रूप च शीलञ्च रूपशील तेन कृत्वा कौशली कुशलभाव तया कौशल्या कृत्वा अत्र वेणुवीणादीना चतु षष्टिकलाना परिज्ञानलक्षण दक्षत्व प्रदर्शितमिति कवेरभिप्राय । अथवा कौशल्या कौ पृथिव्या शल्यमिव शल्या आत्मीयरूपशीलेनान्यासा कमनीयकामिनीना शल्योत्पादकत्वादिति काव्यटीकाकर्तुर्मतमिति शेष[6] ॥३२॥

**सौन्दर्य्यवर्य्येऽप्यवरोधवर्गे स्थिते विशेषेण सतामियेष ।**
**विहाय चूतस्य समस्तमङ्गं पुष्पोद्गमं चुम्बति हि द्विरेफः ॥३३॥**

सौन्दर्येति—स राजा ता राज्ञीमियेष अभिलाष केन कृत्वा अन्यासा राज्ञीना रूपशीलादिव्यवच्छेदिना गुणेन कृत्वा क सति अवरोधवर्गे स्थितेऽपि सति कथम्भूते सौन्दर्यवर्ये लावण्यप्रधाने युक्तमेतत् चूतस्याम्रस्य समस्त सर्वमङ्ग शाखोपशाखाबुध्नादिशरीर विहाय त्यक्त्वा द्विरेफ द्वौ मुखकण्टकप्रख्यौ[7] रेफौ यस्य स द्विरेफ. भ्रमर हि स्फुट पुष्पोद्गम मञ्जरीमकरन्द चुम्बति आस्वादयतीति सम्बन्ध. । अर्थान्तरन्यास ॥३३॥

---

रसके समुद्रके तीरके समान और वसुन्धरा भूमिके समान राघव पाण्डव वीरोंकी जननी उस पतिव्रता पट्टरानीकी आज भी वन्दना करती हैं ॥३१॥

अन्वय—या रूपशीलेन चार्वी त्यागसान्निध्ययोगात् दीनेषु अर्थिषु लोभवादान् दीना काकु नाददे असौ कौशल्या राज्ञ स्वान्तमन्तर्जहार ।

जो सौन्दर्य और सदाचारके कारण ही सुन्दरी थी, त्याग वृत्तिका सतत अभ्यास होनेके कारण दीन याचकोंसे लोभमय मनोवृत्तिसे प्रेरित तुच्छ व्यंग्य वचन न बोलती उस कौशल्या ने राजा दशरथके मनको सर्वथा चुरा लिया था ।

अन्वय 'दीनाङ्का आगसान्निध्ययोगात् लोभवादानाददे असौ कुन्ती

जो लावण्य और पतिव्रतके कारण ही रमणीक थी, विनम्रता जिसका लक्षण था तथा पापोंके समुद्रमें डूबे दीन दु'खी याचकोको भी जो कृपणताके द्योतक वचन नहीं कहती थी उस कुन्तीने पाण्डु राजाके हृदयको लुभा लिया था ॥३२॥

सौन्दर्यकी दृष्टिसे सर्वोत्तम अन्य अनेक रानियोंके होनेपर भी वह राजा विशेषरूपसे

---

१ द्विकुरुनाद्यजादकोशलाञ्ञ्य [ जै ३।१।१५२]। २ ती रक्षितवतीति भा—प, द । ३ पु याचकेषु द्रो–प, द । ४ -कु मनोऽभिप्रायं व- प०, द० । ५ कुन्त्यवन्तिकुरुभ्य स्त्रियाम् [ जै० ३।१।१५७ ] इति हृद्पु–प, द । ६ श्लेषालङ्कार प, द । ७ पक्षौ–द० ।

**इति रति नयानुरुध्यमानो हृदि शरणोत्तममङ्गलं नमस्यन् ।**
**व्यसनरहितराजराज्यभारः समुपचिकाय यशोधनं जयेन ॥३४॥**

इतीति—जयेन अरितिरस्कारेण कृत्वा तत् स्वमात्मीय यशोधन यश एव धन द्रव्य तत् स राजा उपचिकाय वृद्धिं नीतवान् कथम्भूतः व्यसनैरर्थदूपणादिभिः रहितः विमुक्तो राजा यत्र तादृशो राज्यभारो यस्य स तथोक्त. पुन. रतिं सुरतोत्सवम् अनया परममहादेव्या सह इति वक्ष्यमाणापेक्षया अनुरुध्यमानः कामयमानः पुनः शरणोत्तममङ्गल शरणयोग्यत्वात् शरणः उत्तमै. सर्वज्ञैः प्राणीतत्त्वात् उत्तमः । मङ्ग सुख लाति (ददाति) मल पाप गाल्यति इति वा मङ्गलो धर्मः । स च स च स च त हृदि हृदये नमस्यन् नमस्कुर्वन् ॥३४॥

इति *निरवद्यविद्यामण्डनमण्डितमण्डलीडितस्य* पट्तर्कचक्रवर्तिन. *श्रीमद्विनयचन्द्रपण्डितस्य* गुरोरन्तेवासिनो देवनन्दिनाम्न. शिष्येण सकलकलोद्भवचारुचातुरीचन्द्रिकाचकोरेग नेमिचन्द्रेण विरचितायां द्विसन्धानकवेर्धनञ्जयस्य राघवपाण्डवीयापरनाम्न काव्यस्य पदकौमुदी नाम दधानायां टीकाया दशरथपाण्डुराजवर्णनो नाम द्वितीय. सर्ग. ।

---

उस कौशल्या या कुन्तीके ही पास जाता था । जैसे भ्रमर आमके स्कन्ध-शाखा पत्रादि समस्त अंगोंको छोड़कर केवल बौरको ही चूमता है ॥३३॥

सब विपत्तियोसे रहित राज्यका शासक यह राजा अपनी पट्टरानीके साथ ही भोगों की अभिलाषा करता था तथा उत्तम शरण मंगलभूत धर्मकी मनमें विनती करते हुए इसने विजयके द्वारा अपने यशरूपी धनकी परिपूर्ण उन्नति की थी ॥३४॥

निर्दोष विद्याभूषणभूषितपण्डितमण्डलीके पूज्य, पट्तर्कचक्रवर्ती, श्रीमान् पण्डित विनयचन्द्रगुरुके शिष्य देवनन्दिके शिष्य, सकलकलाकी चातुर्य-चन्द्रिकाके चकोर नेमिचन्द्रद्वारा विरचित कवि धनञ्जयके राघवपाण्डवीय नामसे ख्यात द्विसंधान काव्यकी पदकौमुदी नामक टीकामें दशरथपाण्डुराजवर्णन नामक द्वितीय सर्ग समाप्त ।

---

# तृतीयः सर्गः

अथास्य राज्ञः प्रियधर्मपत्नी धर्मोऽस्ति वन्ध्यः किमितीव मत्वा ।
रजःकणं तत्र फलाय काले बबन्ध चूताग्रिममञ्जरीव ॥१॥

अथेति—अथशब्दो राज्यव्यावर्णनानन्तर्यार्थः[1] । अस्य पूर्वोक्तस्य राज्ञ नराधिपस्य प्रियधर्मपत्नी प्रियो धर्मो यस्याः सा प्रियधर्मा अथवा प्रियधर्मस्य हेतुत्वात् प्रियधर्मा सा चासौ पत्नी च सा तत्र काले तारुण्यभरप्राप्तिसमये रजःकणमार्त्तवलव फलाय बबन्ध धृतवती । किं कृत्वा ? पूर्वं मत्वा ज्ञात्वा कथमिति । किमिव धर्मोऽस्ति वन्ध्यः निष्फल इति । केव चूताग्रिममञ्जरीव यथाऽम्रभूरुहप्रथमोद्भवपुष्पगुच्छः तत्र काले वसन्तसमये फलाय रज कण मकरन्दबिन्दु बध्नातीति[2] ॥१॥

इन्द्रो विभूत्या स बृहस्पतिर्वा बुद्ध्या सुतः स्यादिति वंशवृद्धाः ।
सिद्धाय मन्त्रेण निरुप्तवन्तश्चरुं स दिष्ट्या ववृधे च पौरः ॥२॥

इन्द्र इति—विभूत्या सम्पदा कृत्वा इन्द्र पुरन्दर बृहस्पतिर्वा अथवा बुद्ध्या मत्या कृत्वा बृहस्पतिः सुरगुरु सुत पुत्र स्याद्भवेत् इति हेतो वंशवृद्धा कुलोद्भवशतायुप पुरुषा सिद्धायमन्त्रेण परमेष्ठिने बीजाक्षरलक्षणेन मन्त्रेण कृत्वा सिद्ध निष्पन्न अय भाग्य यस्मादसौ सिद्धाय स चासौ मन्त्रश्च तेन तथोक्तेन कृत्वा चरुम् इष्ट-देवताबलिविशेष निरुप्तवन्तः दत्तवन्त । स लोकप्रसिद्ध पौर' नागरो जन दिष्ट्या महोत्सवेन ववृवे वृद्धि प्रापत्[3] ॥२॥

बोधातिरेकाय सरस्वतीव लक्ष्मीरिवानेकविधार्थहेतोः ।
गर्भं महिष्याधित भूमिभर्तुः पुण्यस्य पुष्पोद्गम एष सर्वः ॥३॥

बोधेति—महिषी पट्टराज्ञी गर्भमाधित धृतवती । केवोत्प्रेक्षिता ? भूमिभर्तुर्भूपस्य बोधातिरेकाय ज्ञानाधिक्याय सरस्वतीव वाणीव अनेकविधार्थहेतो नानाप्रकारद्रव्यनिमित्त लक्ष्मीरिव श्रीरिव युक्त चैतत् पुण्यस्य एषोऽसौ सर्वं समस्त पुष्पोद्गम फलमिति सम्बन्ध । अर्थान्तरन्यास ॥३॥

दीप्तान्तरङ्गा शिखिनारणीव निधानगर्भेण भुवः स्थलीव ।
सत्त्वेन तेन स्तिमितप्रकाशा जज्ञेऽलसोद्योगवतीव देवी ॥४॥

दीप्तेति—तेन गर्भस्थितेन सत्त्वेन प्राणिना अलसा मन्दा सती देवी पट्टराज्ञी उद्योगवतीव जज्ञे जाता । केव अरणी वह्निमन्थनकाष्ठमिव । कथम्भूता ? शिखिना कृशानुना दीप्तान्तरङ्गा दीप्त प्रकाशमान अन्तरङ्गो

---

राजाकी परमप्रिय धर्मपत्नी 'क्या धर्म निसन्तति है ?' यही सोचकर उपयुक्त वयमें आम्रके द्वारा बौरके समान धर्मसन्ततिके लिए रजोदर्शनको प्राप्त हुई थी ॥ १ ॥

वैभवकी दृष्टिसे इन्द्र, बुद्धिकी अपेक्षा बृहस्पति ही वह राजपुत्र होगा । इस विश्वासके कारण ही वंशके वृद्ध पुरुषोंने बीजाक्षर मन्त्रोंके उच्चारण सहित सिद्ध परमेष्ठीको नैवेद्य समर्पित किया था और अयोध्या तथा हस्तिनापुरके नागरिक श्री आनन्दमंगल मनानेमें दिनों दिन उन्नति कर रहे थे ॥ २ ॥

कौशल्या अथवा कुन्ती पटरानीने धर्मपतिके विवेककी लोकोत्तर वृद्धिके लिए सरस्वतीके समान, विविध प्रकारके धनोंके लिए लक्ष्मीके समान गर्भको धारण किया था । अथवा यह सब पुण्यरूपी वृक्षके पुष्पके उद्गमके समान था ॥ ३ ॥

भीतर ही भीतर प्रज्वलित अग्निसे काष्ठके समान तथा नीचे छिपी हीरादि सम्पत्तिके

---

1 राजव्यावर्ण—प०, द० । 2 उपमालंकार —प०, द० । 3 समुच्चयालंकार —प०, द० ।

मध्यभागो यस्याः। पुनः निधानगर्भेण निधियुक्तमध्येन भुवः स्थली इव यथा कथम्भूता स्तिमितप्रकाशा स्तिमितो निश्चलः प्रकाशः शरीरकान्तिर्यस्याः सा तथोक्ता। स्थली च स्थिरप्रकाशा जायते इति सम्बन्धः। उपमा ॥४॥

**आपाण्डुरं रागनिबद्धमङ्गमुत्साहबाहुल्यमुदात्तमोजः।**
**विश्वं जगद्वीप्सुरिवोदुवाह द्यौरभ्रलिप्ताभ्युदितार्यमेव ॥५॥**

आपाण्डुरमिति—आपाण्डुरमीषत्पाण्डुरम् अङ्गरागनिबद्धमनुरागयुक्तमुत्साहस्य बाहुल्य (प्राचुर्य) यत्र तत्तथोक्तम्। उदात्तमुत्कटमोजश्च 'महता तेजः एतद्द्वितय राज्ञी उदुवाह बभार। कथम्भूतेव विश्व समस्त जगद्भुवन वीप्सुरिव व्याप्तुमिच्छुरिव। केव यथा द्यौः नभस्तलमभ्युदितार्यमाऽभ्युदित उद्गत अर्यमा सूर्यो यस्या सा इत्थम्भूता सती अङ्गमात्मीयस्वरूपमुद्वहति। कथम्भूता पुनः? अभ्रैः मेघैः ईषल्लिप्ता "कादल्पे" जै० सू० [३।१।४४] इति डीः। अङ्गमापाण्डुरमीषच्छ्वेत रागनिबद्ध लौहित्ययुक्तम् उत्कृष्टा सा लक्ष्मीः शोभा यत्राहनि तत् उत्स उत्स च तदहश्च तदुत्साह सश्रीक दिन तस्य बाहुल्य यत्राङ्गे तत्तथोक्तम्। ओजश्च तेजः उदात्तमुल्बणमुद्वहति कथम्भूतेव विश्व जगद्वीप्सुरिवेत्युपमा[1] ॥५॥

**कुमारभृत्याकुशलः स तस्मिंल्लोकस्थितिं प्रत्यवधातुमैच्छत्।**
**अस्पृश्यमग्न्यादिभिरप्रधृष्यमन्येन तद्वंश्यमविष्यमाहुः ॥६॥**

कुमारेति—तस्मिन्नापाण्डुरत्वादिधारणकाले स राजा कुमारभृत्या बालवैद्यक तत्पोषकशास्त्र वा कुमारभृत्या तस्या कुशल प्रवीणः लोकस्थितिं लोकव्यवहार प्रत्यवधातुमवधानीकर्तुमैच्छत् अभिलषितवान् यस्मात्, तस्मात् कारणात् तद्वश्य वशे भव वश्यः तस्य राज्ञो वश्य स तथोक्तस्तमाहुः ब्रुवन्ति लोकवृद्धा कथम्भूतमग्न्यादिभिरग्न्यादिभिर्दैवव्यसनैः अस्पृश्यमस्पर्शविषयमगम्यमित्यर्थः। अन्येन अरिजातेन अप्रधृष्यमजेयमनभिभवनीयमित्यर्थः। अविष्य विषेणावध्यञ्चेति ॥६॥

**जाने हि मृत्स्नाऽभ्यवहारमात्रं मातुः प्रकाश्यच्छलमन्तरात्मा।**
**समुद्रवेलाजलसिक्तसीमां गर्भस्थितः स ग्रसते स्म भूमिम् ॥७॥**

जाने इति—जानेऽहमेव मन्ये हि स्फुट ससत्त्वोऽन्तरात्मा अव्यक्तमूर्तिः सन् गर्भस्थितोऽपि भूमिं पृथ्वीं ग्रसते स्म गिलितवान्। कीदृशी समुद्रवेलाजलसिक्तसीमा वारिधिपय प्लावितमर्यादा किं कृत्वा पूर्वं मातुर्जनन्याः मृत्स्नाभ्यवहारमात्र छल प्रशस्तमृत्तिकाभक्षणव्याज प्रकाश्य प्रव्यक्तीकृत्वेति ॥७॥

---

द्वारा प्रकाशमान खानके समान गर्भमें आये उस पुण्यात्मा जीवके द्वारा गर्भिणी रानीकी कान्ति स्थिर हो गयी थी और गर्भभारसे अलसायी रानी उद्योगरत सदृश प्रतीत होती थी ॥ ४ ॥

समस्त संसारको व्याप्त करनेकी अभिलाषासे ही उस रानीने कुछ श्वेत-लाल कान्ति युक्त शरीर, कार्य करनेकी क्षमताकी विशालता तथा अत्यन्त प्रभावक तेजको घनाच्छन्न तथा उदित सूर्ययुक्त आकाशके समान धारण किया था। क्योंकि उक्त प्रकारके आकाशका रूप भी आंशिक धवलिमा व्याप्त लालिमा, दिवस सौन्दर्य तथा प्रखर आतपमय होता है ॥५॥

इस प्रकारकी गर्भस्थितिके समय कुमारभृत्यमें निपुण राजा दशरथ अथवा पाण्डुने लोक-व्यवहारको भी जाननेका प्रयत्न किया था। तब इसके कुल-वृद्धोंने अग्नि आदि आठ दैवी उपसर्गोंके निवारणकी विधि, शत्रु आदिके द्वारा गर्भपात निरोधके उपाय तथा विषप्रयोगके परिहार बताये थे ॥ ६ ॥

ऐसा मानना चाहिये कि माताको मिट्टी खानेकी चेष्टाको प्रकट करके दशरथ अथवा पाण्डु राजाकी पत्नियोंके गर्भमें स्थित अतएव गुप्त जीवने समुद्रकी लहरोंके पानीसे आर्द्र सीमायुक्त पृथ्वीको ही ग्रास कर लिया था ॥ ७ ॥

१ धातूना—प०, द०। २. श्लेषोपमालङ्कार—प०, द०।

अव्यक्तभावोऽयमलब्धदेहस्तथाधितिष्ठन्नपि गर्भभूमिम् ।
कोप्यङ्कुरो वीजमिवानुभावात्स्वजन्महेतुं कुलमुद्बभार ॥८॥

अव्यक्तेति—अय सत्त्व तथापि अनुभावात् माहात्म्यात् स्वजन्महेतुमात्मोत्पत्तिहेतु कुलम् अन्वयमुद्बभार उद्धृतवान् । किं कुर्वाणोऽपि अधितिष्ठन्नपि गर्भभूमि यद्यपि अव्यक्तभाव अप्रकटपरिणाम अलब्धदेह अप्राप्तशरीर प्रवर्त्तते उपमार्थ. प्रदर्श्यते इव यथा कोऽपि अनिर्वचनीयोऽपि अङ्कुर प्रथमाद्भिन्नसूचिक अनुभावात् स्वजन्महेतु बीज उद्बिभर्ति यद्यपि गर्भभूमिं मध्यावनिं अधितिष्ठन्नपि कीदृग अव्यक्तभाव. । अव्यक्तो गुप्तो भाव सत्तालक्षणो यस्य स. तथोक्त अलब्धदेह. । उपमा ॥८॥

सर्वज्ञमभ्यर्च्य महामहेन व्यधत्त तस्याः क्रियया महत्या ।
यथोचितं पौंस्नवनादिकर्म धर्मोपधाशुद्धविधिः पुरोधाः ॥९॥

सर्वज्ञमिति—तस्या देव्या यथोचित पौंस्नवनादि पुसो भाव पौंस्न वनति सम्भजते यत् कर्म तत्तथोक्तम् । औषधरसायनविधानैर्गर्भातिशयशुद्धि कृत्वा गर्भसक्रान्तिवासरमारभ्य मासस्याष्टमस्य पर्यन्तदिवस यावत्पुत्रोत्पत्त्यर्थं मन्त्राराधन देवपूजा त्रिविधपात्रेषु च यथाक्रम यथायोग्य दानविधिर्यद्विधीयते तत् पौंस्नवनम् । उक्तञ्च—

"आरभ्य सक्रान्तिदिन हि यावन्मासाष्टमस्यावधिमुत्सवेन ।
पुत्रेप्सया धर्म (कर्म) विधीयते यत्तत् सूरय पौंस्नवन वदन्ति ॥
"केचिद् हि मासे किल पञ्चमेऽपि पूर्णेऽथ गर्भे कथमष्टमावधि ।
तथेति धर्माद्विविधा हि सम्पत्सम्पूर्णमायुर्न रुजो भवेयु ॥१॥"

तदादौ यस्य तत्तथोक्त कर्मक्रियया महत्या गरिष्ठया क्रियया कृत्वा पुरोधा पुरोहित' व्यधत्त कृतवान् किं कृत्वा अभ्यर्च्य प्रपूज्य क सर्वज्ञ हेयाहेयरूपतया सर्व त्रैलोक्योदरविवरवर्तितत्वात्तत्त्व करतलामलवज्जानातीति सर्वज्ञ. । त तथोक्तम् । केन कृत्वा महामहेन महोत्सवेन कथम्भूत. सन् धर्मोपधा शुद्धविधि. धर्मोपधया धर्मस्य परीक्षया शुद्धो यथोक्तो विधि क्रिया यस्य स. ॥९॥

स्वप्नेन सोमं निशि वीक्ष्य वालमादाय सारोप्य किल स्वमङ्कम् ।
लब्धोऽतिसौम्यस्तनयः प्रजानां मयेति दिष्ट्याभ्यववर्द्धदालीः ॥१०॥

स्वप्नेति—सा देवी दिष्ट्या परमोत्सवेन आली सखी. अभ्यववर्द्धत् आनन्दयति स्म । कथमिति लब्धोऽतिसौम्यस्तनय प्रजानामष्टादशप्रकृतीनामतिसौम्य अतिशयेन प्रसन्न' तनय पुत्र. लब्ध. प्राप्तो

---

पूर्वोक्त प्रकारसे गर्भमें वास करते हुए जीवने अपने परिणामोंका प्रकाश बिना किये ही तथा शरीरको धारण किये विना ही अपने जन्मके निमित्त पितृकुलका अपने विशिष्ट प्रभावसे वैसा ही उद्धार कर दिया था जैसे भूमिमें बोया गया, सबके लिए अदृश्य तथा शरीरहीन कोई कोई अंकुर बीजको ऊपर उठा लाता है ॥ ८ ॥

धर्मके निमित्त शुद्ध विधि-विधानोंमें लीन पुरोहितने केवली भगवान्‌की महामह-द्वारा पूजा करके पटरानीका 'पौंस्न' महोत्सव बड़े आयोजनके साथ राजाओंके अनुरूप साज-सज्जा-द्वारा किया था—

[ गर्भाधानकी तिथिसे लेकर आठ मास बाद पुत्रकी अभिलाषासे जो धर्म कार्यमय उत्सव किया जाता है उसे 'पौंस्नवन' कहते हैं। कुछ आचार्योंका मत है कि आठवें बाद क्यों ? गर्भाधानकी तिथिसे ५ मास पूर्ण होनेपर जो आराधना-पूजा-दानमय धर्मकार्य किया जाता है उसे 'पौंस्नवन' कहते हैं। इसके कारण समृद्धि तथा आयु पूर्ण होती है और रोगादि नहीं होते हैं ] ॥ ९ ॥

रात्रिमें सोते समय वह रानी स्वप्नमें बालचन्द्रमाको देखकर उठा लेती थी तथा

मयेति । कि कृत्वा पूर्वं किल अनायासेन स्वसात्मीयमङ्कमुत्सङ्ग सोम चन्द्र आरोप्य निवेश्य । कथम्भूत बाल शिशुम् । किं कृत्वा पुनः आदाय गृहीत्वा । निशि रात्रौ स्वप्नेन सुप्त्या कृत्वा वीक्ष्य आलोक्य । अत्र कर्तृकर्मक्रियाणा तिसृणा सोममित्येक कर्मसम्बन्धनीयम् इति ॥१०॥

**[1]तेषु ग्रहेषूच्चगतेषु तस्मिन् नक्षत्रयोगे सुषुवे कुमारम् ।**
**अवग्रहो यैरभवन्नभूमे येनापि नक्षत्रमुदीर्णमन्यत् ॥११॥**

तेष्विति—तेषु लोकप्रसिद्धेषु ग्रहेषु सूर्यादिषु उच्चगतेषु स्वस्वोच्चैः स्थानस्थितेषु सत्सु तस्मिन् लोकप्रसिद्धे नक्षत्रयोगे नक्षत्राणि अश्विन्यादीनि सप्तविंशतिर्योगाः विष्कुम्भादयः सप्तविंशति. नक्षत्राणि योगाश्च 'समाहारः। यथोक्ते नक्षत्रयोगे सा देवी कुमार सुषुवे जनयति स्म । यैः ग्रहै' भूमे. पृथिव्या अवग्रह प्रतिबन्धः न अभवत् नाजनिष्ट । येनापि नक्षत्रयोगेन क्षत्र क्षात्रो धर्म' अन्यत् शात्रव न उदीर्णं न समुत्पन्नम् । समुच्चयालङ्कार. ।

अत्र पूर्वोक्तस्य यथोचितविहितस्य पोस्नवनादिकर्मणः फलमुपदर्शितमिति भाव' ॥११॥

**तस्मिन् सुते तत्क्षणजातमात्रे रत्नप्रदीपाः प्रभया विमुक्ताः ।**
**नित्यं न[2]रालम्बितभोगभागा नागा इवोच्चैः सविषादमस्थुः ॥१२॥**

तस्मिन्निति । रत्नप्रदीपाः प्रभया दीप्त्या विमुक्ता' परित्यक्ताः सन्तः उच्चैरतिशयेन अस्थुः तिष्ठन्ति स्म । कस्मिन् सति ? तस्मिन् लोकप्रसिद्धे सुते पुत्रे तत्क्षणजातमात्रे तत्समयोत्पन्नमात्रे उत्प्रेक्षार्थं प्रदर्श्यन्ते । के इवोत्प्रेक्षिता' । नागा इव यथा नागा. सर्पास्तिष्ठन्ति । कथम्भूता. नित्य नरालम्बितभोगभागाः नित्य नरे आलम्बितो भोगभागः फणाप्रदेशो यैस्ते तथा कथ सविषाद क्रियाविशेषणमिति उत्प्रेक्षा ॥१२॥

**नालं न्यधित्सद् भुवि यत्र नाभ्यं पदे पदे तत्र निधिं निचाय्य ।**
**रोमाञ्चितः कञ्चुकमन्यदेकं सकञ्चुकीपर्यधितेव हृष्टः ॥१३॥**

नालमिति—स (लोकप्रसिद्धः) कञ्चुकी सहवासिक. हृष्ट' हर्षोत्कर्षं प्राप्त सन् अन्यत् अपर कञ्चुक कूर्पास पर्यधितेव परिदधाति स्मेव कथम्भूत ? रोमाञ्चित उद्धर्षितरोमा किं कृत्वा पदे पदे प्रतिपद तत्र तस्या भुवि निधि निधान निचाय्य आलोक्य कस्या भुवि यत्र यस्या नाभ्य नाल न्यधित्सत् निधातुमैच्छत् । उत्प्रेक्षा ॥१३॥

**दिशः प्रसेदुर्विमलं नभोऽभूत् सौवं न्यपप्तत्कुसुमं नभस्तः ।**
**विरि[3]द्धमिद्धं दिवि दुन्दुभीनां किं भागधेये सति दुर्लभं वा ॥१४॥**

---

अपनी गोदमें बैठाकर कहती थी 'मैंने अठारहों श्रेणियोंके कल्याणकर्त्ता शान्त पुत्रको प्राप्त किया है ।' इससे सेवामें लीन सखियोंके आनन्दका ठिकाना नहीं रहता था ॥१०॥

जिन ग्रहोंसे पृथ्वीपर उपसर्ग नहीं आता है उन सबके अपने अपने उच्च स्थानपर रहनेपर तथा जिसके कारण विपरीत उद्धत क्षात्र ( शत्रु ) का उदय नहीं होता है ऐसे नक्षत्र तथा योगमें महारानीने राजपुत्रको जन्म दिया था ॥११॥

उस क्षणमें ही उत्पन्न उस राजपुत्रके सामने प्रसूतिगृहमें रखे रत्नोंके दीपक तेजहीन हो गये थे और मन्त्रवेत्ता मनुष्योंके द्वारा फणसे पकड़े गये सांपोंके समान सदाके लिए अत्यन्त उदास हो गये थे ॥१२॥

जिस स्थानपर कञ्चुकी सद्य'जात पुत्रकी नाभिके नालको गाढना चाहता था वहां पर पद-पदपर निधिको देखकर इतना हर्षित हुआ कि उसका रोम-रोम पुलकित हो गया था । मालूम होता था कि उसने एक और कञ्चुक (जामा) पहिन लिया है ॥१३॥

---

१ ग्रहेषु तेषूच—द० २ निरालम्बितभोगभागा —प० १ निरालम्बितभोगभागा' नित्य निरतिशयेनालम्बितोऽतिसंकोचितो भोगभागो यै —प० । ३. ध्वं प्रतिभाति ।

दिश इति–दिश ( आशा ) प्रसेदु प्रसन्ना बभूवु । नभो गगन ( विमल ) निरभ्रमभूत् अजनि । सैव दिविज कुसुम नभस्तो गगनात् न्यपतत् पपात । दिवि नभसि दुन्दुभीना तूर्याणा विरिध ध्वनितमिद्ध तारमत्र बभूवेति क्रियाध्याहार्या । वा अथवा–भागधेये भाग्ये सति किं दुर्लभ प्राणिना स्यात् । अर्थान्तरन्यास. ॥१४॥

**आशीतिका वर्षवराः पुरन्ध्र्यः पञ्चाशदुत्तीर्णदशा निशान्ते ।**
**कुब्जाश्च पुत्रोत्सवमोहमन्त्रैरानर्तिषुः स्तोभमिवाभिनीताः ॥१५॥**

आशीतिका इति–आशीतिका[1] अशीतिं वर्षाणामतिक्रान्ता. वर्षवरा वर्षैर्वरा अधिका इति निरुक्ते अन्त पुररक्षणे नियुक्ता नपुसकरूपा महत्तरा । पञ्चाशदुत्तीर्णदशा पञ्चाशत वर्षाणि उत्तीर्णा दशावस्था वयो यासा ता. पुरन्ध्र्य कामिन्य कुब्जाश्च अत्युन्नतपृष्ठवशा पुत्रोत्सवमोहमन्त्रै कर्तृभि स्तोभमावेशमभिनीता इव अभि समन्तात् प्रापिता इव निशान्तेऽन्त पुरे आनर्तिषु नृत्य चक्रुरित्युत्प्रेक्षा ॥१५॥

**निवेदयद्भ्यः सुतजन्म राजा स राज्यचिह्नं सुतराज्यभाव्यम् ।**
**हित्वैतदेकं धृतवान्नकिञ्चिद्देयं हि तुष्टैरपि नान्यदीयम् ॥१६॥**

निवेदयद्भ्य इति–स राजा दशरथ पाण्डुर्वा सुतजन्म पुत्रोत्पत्ति निवेदयद्भ्य कथयद्भ्य न धृतवान् किञ्चित् वस्तु कि कृत्वा हित्वा परित्यज्य किं एतदेक राज्यचिह्न कथम्भूत सुतराज्यभाव्य सुतराज्योपलक्षणीयम् । हि स्फुट अन्यदीय वस्तु तुष्टैरपि आनन्दमन्दिर प्रविष्टैरपि न देय न दातव्यम् । उत्प्रेक्षार्थान्तरन्यासौ ॥१६॥

**अन्तःपुरे राजनि राजधान्यां देशेऽप्यसम्माय दिशामधीशान् ।**
**व्याप्यासनक्षोभकृदुत्सवोऽयमद्यापि विश्राम्यति न प्रजासु ॥१७॥**

अन्त पुर इति–अयमुत्सवोऽद्यापि साम्प्रतमपि प्रजासु अष्टादशप्रकृतिषु विषये न विश्राम्यति न विश्राम करोति । कथम्भूत आसनक्षोभकृत् आसनस्य उपवेशनस्य क्षोभ सञ्चलन करोति स । किं कृत्वा दिशामधीशान् व्याप्य । पुन किं कृत्वा अन्त पुरेऽवरोधे राजनि भूपे राजधान्या मुख्यनगर्या देशे मण्डले असम्माय अवकाशमलब्ध्वा । समुच्चय ॥१७॥

**समं द्विषन्तः शुकसारिकाभिर्विपाशिता वल्गु शिशुं शशंसुः ।**
**निर्मोक्षमाणं सह धेनुकेन गृहे गृहे वात्सकमभ्यमुञ्चत् ॥१८॥**

---

पुत्र-जन्मके समय सब दिशाएँ स्वच्छ हो गयी थीं। आकाश मेघरहित अतएव निर्मल हो गया था। आकाशसे स्वर्गलोकके फूलोंकी वर्षा हो रही थी। वातावरणमें दुन्दुभियोंकी जोरकी ध्वनि व्याप्त हो गयी थी। शुभ भाग्य होनेपर ससारमें क्या दुर्लभ होता है ? १४॥

अस्सी वर्षसे भी अधिक वयके अन्त पुरके नपुंसक प्रहरी, पचास वर्षसे भी अधिक वयकी रानीकी परिचारिकाएँ तथा कुबड़े, पुत्रजन्मके उत्सवरूपी वशीकरण मन्त्रके आवेशमें अन्तःपुरमें नाच रहे थे ॥१५॥

राजा दशरथ अथवा पाण्डुने पुत्रके जन्मकी सूचना देनेवालोंको इस प्रकार पुरस्कार दिया था कि उनके शरीरपर भावी राजा राजपुत्रके राज्यचिह्नको छोड़कर और कोई आभूषणादि न रह गये थे। क्योंकि महापुरुष परम प्रसन्न होनेपर भी दूसरोंकी वस्तु पुरस्कारमें नहीं देते हैं ॥१६॥

आसनको हिला देनेवाला पुत्रके जन्मका उत्सव रनवास, राजा, राजधानी तथा पूरे राज्यमें भी न समा सका था। अतएव समस्त दिक्पालों तक को व्याप्त करके यह आज भी समस्त जनतामें चालू ही है, रुका नहीं है ॥१७॥

1 का' अशीतिभूता "तमधीष्टो भृतो भूतो वा" [ जै० ३।४।७६ ] इति ठञ्। वर्ष–५०, द० ।

सममिति–द्विषन्तः शत्रवः शुकसारिकाभिः सम सार्द्धं विपाशिताः विमोचिताः सन्तः वल्गु मधुर यथा शिशु बाल शशंसुः प्रशसयामासुः। गृहे गृहे निर्मोक्ष्यमाणमात्मान मोक्तुमिच्छन्त वात्सक तर्णकसमूह नागरो जनः धैनुकेन गोसमूहेन सह सार्द्धमभ्यमुञ्चत् समन्तात् मुक्तवान्[1] ॥१८॥

**पुरोहितावर्तितजातकर्मा नीरञ्जितं रत्नमिवाकरस्थम्।**
**पुत्रः प्रकाशोऽयमभूत् क्रिया हि द्रव्यं निसृष्टद्युति संस्करोति ॥१९॥**

पुरोहितेति–पुरोहितेन पुरोधसा आवर्तित जातकर्म यस्य स तथोक्तः सन् अय पुत्रः तनयः प्रकाशहेतुत्वात् प्रकाशः तेजस्वी अभूत् अजनि। किमिव आकरस्थ खनिसमुत्पन्न रत्नमिव मणिरिव कथम्भूत नीरञ्जितमुत्तेजितम्। हि स्फुट निसृष्टद्युति अविनष्टकान्ति द्रव्य क्रिया कर्त्री सस्करोति विनयति। अर्थान्तरन्यासः ॥१९॥

**पूर्वं परं ज्योतिरुपार्च्य देवं स्थेयान् प्रकृत्या विशदो गरीयान्।**
**मनोऽभिरामोऽयमजातशत्रुरित्यर्थयुक्तं जुहुवे नृपेण ॥२०॥**

पूर्वमिति–नृपेण दशरथेन राज्ञा अर्थयुक्त सार्थकमय पुत्रः राम इति जुहुवे आहूतः। कथम्भूतः प्रकृत्या स्वभावेन स्थेयान् स्थिरः। कि कृत्वा पर ज्योतिर्देवं[2] उपार्च्य[3] अर्चयित्वा। कथम्भूतः रामः विशदः स्वच्छः स्वच्छाशयः कथ "मनोभिः[4] मनसा पुनः कथम्भूतः गरीयान् गरिष्ठः पुनः अजातशत्रुः न जाताः शत्रवो यस्य सः अथवा यमात् मृत्योर्जात मरणलक्षण कर्म यत् तत् यमज यमज अतन्ति गच्छन्ति प्राप्नुवन्ति ये ते यमजाताः नन्द्यादिनेति सूत्रेणा प्रत्यय इत्थम्भूताः शत्रवो यस्मात् सः। अथवा–यमाय यावज्जीवव्रताय जाताः शत्रवो यस्मिन्नुत्पन्ने सति स्वीय स्वीयराज्यमपहाय पराभवभयात् वैरिणो व्रतिनो बभूवुरित्यर्थ।

भारतीय–नृपेण पाण्डुना राज्ञा अर्थयुक्तमय पुत्रः अजातशत्रुर्युधिष्ठिर इति जुहुवे आहूत। कथम्भूतः मनोभिराम कमनीयः अथवा आमः सार्द्रं कैः "मनोभि चित्तैः मनस कौटिल्यरहितत्वात् बहुवचनमत्र। शेष पूर्ववत्। श्लेषः ॥२०॥

---

शत्रुओंके साथ-साथ बन्धनसे मुक्त किये गये, तोता और मैना आदि अपनी मधुर ध्वनियोंसे नवजात राजपुत्रकी प्रशंसा करते थे। मुक्त करनेकी लोगोंको ऐसी धुन बँध गयी थी कि घर-घरसे गायोंके साथ बछड़े भी छोड़ दिये थे ॥१८॥

पुरोहितके द्वारा जन्मके संस्कार कर दिये जानेपर खानसे निकले किन्तु खरादपर चढ़ाकर चमकाये गये रत्नके समान यह राजपुत्र भी तेजस्वी दिखने लगा था। स्वभावसे कान्तिमान पदार्थको भी संस्कार अधिक कान्तिमान बना देते है ॥१९॥

अन्वय—नृपेण पूर्वं पर ज्योतिर्देवं उपार्च्य स्थेयान्, प्रकृत्या विशदो गरीयान् मनोभि अजातशत्रु अयम् अर्थयुक्तं राम इति जुहुवे।

राजाने सबसे पहिले परम ज्ञानी भगवान्‌की सविधि पूजा करके पुत्रको सार्थक नाम रामसे पुकारा था क्योंकि यह वह राजपुत्र स्थिर, स्वभावसे निर्मल और गम्भीर था तथा मनसे भी कोई इसका शत्रु नहीं था। अथवा स्वभावसे स्थिर, मनसे स्वच्छ तथा गम्भीर और इसके शत्रु आजीवन व्रत (यम) लेकर चले गये थे अथवा यमलोक (मृत्यु) चले गये थे।

अन्वय— मनोभिराम इति अर्थयुक्त अजातशत्रु जुहुवे।

सर्वप्रथम केवलज्ञानी भगवान्‌की पूजा करके राजा पाण्डुने राजपुत्रको सार्थक नाम अजातशत्रु (युधिष्ठिर) से पुकारा था क्योंकि वह अत्यन्त दृढ़ भावसे निष्कपट, परम गम्भीर तथा सबके मनको मोह लेता था ॥२०॥

---

१ समुच्चयालङ्कार–प०, द०। २. दैव देवानामिदं दैवम्–प०, द०। ३ उपार्च्य अर्चयित्वा–प०, द०। ४ अत्र राघवीयपक्षे टीकोक्तदिशा मनोभि रामा इति छेद। अत्र द्रूलोपदीर्घाप्रवृत्तिरूपः संधिदोषश्चिन्त्य। भारतीयपक्षे तु मनोभिराम मनोभि आमः आर्द्र इतिच्छेदो युक्त एव।

विपत्तिमुपनीताः । अनुजा' बान्धवाः विनयेन विगतो नय. विनय दुर्नयस्तेन भूषिता. भुवि उषिताः तेन कृत्वा इत एभ्य. प्रकारेभ्य. नास्ति काचन पराभूतिरभिभव' अन्येति पदमध्याहार्यम्[१] ॥ ५२ ॥

**यदि राज विना नृपाः कृतराज्या इव सानुभावनाः ।**
**यशसा च युतास्तदे बहुचिन्ताहतया किमु श्रिया ॥५३॥**

यदीति–यदि राजतया राजभावेन विना कृतराज्या इव नृपाः नरेश्वराः सानुभावना समाहात्म्याः यशसा च युता भवेयुस्तत् तस्मात् उ अहो किमेतया श्रिया लक्ष्म्या कथम्भूतया बहुचिन्ताहतया बह्वी या चिन्ता तया हतया नष्टया ।

भारतीय–यत् यस्मात्कारणात् सानुभावना सानुषु पर्वतनितम्बेषु भावना स्थितिर्येषा ते पर्वतनितम्बस्थितिका सन्त. नृपा. कृतराज्या इव भवेयु. । कथम्भूता. ? अविना न विद्यते विना येषा ते अविना युक्ता इत्यर्थ । कया इराजतया इराया. अज. क्षेप' यस्याऽसाविराज' पृथिवीपरित्यागयुक्त. पुरुष इत्यर्थ । इराजस्य भाव. इराजता तया पृथिवीपरित्यागत्वेनेत्यर्थ । यशसा युताश्च स्यु तत् तस्मात् किमु अहो एतयाऽनया श्रिया । कथम्भूतया ? बहुचिन्ताहतया बहूना स्वपरवर्गीयाणा चिन्ता बहुचिन्ता तया हतया बहुचिन्ताहतया । श्लेषालङ्कार ॥ ५३ ॥

**चमरा व्यजनेन वीजयन्ति द्विरदास्ते दधते च नित्यसेवाम् ।**
**शवराः शिविरेषु बद्धगेयाः किमु राज्येन गतेन वा स्थितेन ॥५४॥**

चमरेति–शिविरेषु निवेशेषु चमरा चमर्य्य. व्यजनेन कृत्वा वीजयन्ति । ते प्रसिद्धा. 'कान्तारसमुद्भवा'[२] द्विरदा हस्तिन' नित्यसेवा अनवरतवलानं च दधते धरन्ति तथा शवरा पुलिन्दा' बद्धगेया विरचितगीताः भूत्वा दधते धरन्ति नित्यसेवाम् । एषु प्रकारेषु सत्सु उ अहो किं गतेन वा अथवा स्थितेन राज्येनेति सम्बन्ध ।

भारतीय–वा उपमार्थे स्थितेन राज्येनेव गतेन राज्येन उ अहो युधिष्ठिर ते तव सम्बन्धित्वेन शिविरेषु वसतिस्थानेषु लक्षितलक्षणानिरूपणात् चमराः पुरुषा. व्यजनेन चामरेण कृत्वा किं वीजयन्ति ? चकारेण समुच्चयार्थो गम्यते । तथा द्विरदा. किं नित्यसेवा दधते ? तथा शवरा. गीतेन कृत्वा श सुख शृण्वते

---

कौरवोंपर छोड़कर महा विपत्तिमें डाल दिया है और नीतिसे काम न करके हम छोटे भाइयोंको भूमिपर सोनेके लिए बाध्य किया है ॥५२॥

यदि राजाके कार्यादिके विना ही राजाका प्रभाव, माहात्म्य आदि राज्य करनेवालोंके समान हो जॉय और कीर्तिको प्राप्त करले तो अनेक चिन्ताओंसे साबाध इस राज्य-लक्ष्मीसे क्या प्रयोजन है ?

अन्वय—यत इराजतया विना सानुभावना नृपा कृतराज्या इव यशसा च युता. तत बहुचिन्ताहतया एतया श्रिया किमु ।

यतः पृथ्वीके राज्यके त्यागसे भूषित अतएव पर्वतोंपर निवास करनेमें प्रसन्न मन त्यागी राजा राज्य करनेवालोंके समान यशके भागी होते हैं अतः अपनों तथा परायों; सभीको चिन्तामें डालनेवाली इस लौकिक सम्पत्तिसे हे धर्मराज ! क्या लाभ है ॥५३॥

चमरी मृग अपनी पूँछोंसे चमर ढोरते हैं। जंगली हाथी प्रतिदिन सवारीकी सेवामें रहते हैं। जहाँ पड़ाव डालते हैं वहीं भील आदि ग्राम्यगीत गाते हैं। तव राज्यके रहने या चले जानेसे क्या अन्तर हुआ ?

राज्यपदपर रहनेके समान (वा) राज्य खो देनेपर आपको चमरधारी क्या

---

१ श्लेषाऽलङ्कार –प०, द० । २ रेवातीरसमुद्भवा–प०, द० ।

शृण्वन्तीति शवराः गायनाः अथवा शेन सुखेन म्रियन्ते इति शवराः सुखिनः बद्धगेयाः सन्तः नित्यसेवा किं दधते ? अपि तु नेति सर्वत्र सम्बन्धः । अत्रैतत्तात्पर्यम्—यथा स्थितेन राज्येन चामरधराद्यः सम्भवन्ति तथा न गतेन राज्येनेति । आक्षेपालङ्कारः ॥ ५४ ॥

**त्वामभ्युपैतु पुनरभ्युदयाय दीप्ति-**
**रौत्सुक्यमागतवतीव रविं दिनादौ ।**
**ध्वान्तं विसर्पति तवानुदयान्नयत्वं**
**कालेऽभिवृद्धिमभिमानधनञ्जयश्च ॥५५॥**

**इति श्री द्विसन्धानकवेर्धनञ्जयस्य कृतौ राघवपाण्डवीये महाकाव्येऽरण्य-**
**वासवर्णनं नाम चतुर्थः सर्गः ॥४॥**

---

त्वामिति—हे राम हे युधिष्ठिर च त्वा भवन्त च पुनः दीप्तिः प्रतापलक्षणाऽभ्युपैतु व्याघृत्यागच्छतु । कस्मै ? अभ्युदयाय विभवाय । कथम्भूता सती ? औत्सुक्य रामस्य आगतवती । उपमार्थः—इव यथा रविमादित्य दिनादौ दिवसस्य प्रथमारम्भे दीप्तिः पुनरभ्युपैति । कथम्भूता ? औत्सुक्यमागतवती । उत्तरार्द्धे सोपस्करतया व्याख्यानं विधीयते—तथा तव भवतः सम्बन्धित्वेन अनुदयादभिभवात् ध्वान्तमनीतिलक्षणतमः विसर्पति सामस्त्येन प्रवर्त्तते । यथा रवेरनुदयात् ध्वान्तमन्धकारः विसर्पति । अतएव काले समये तथा अभिमानधनम् अभिमान एव धनम् अथवा अभिमानश्च धनञ्च अभिमानधन समाहारापेक्षयैकत्वमत्र । जयञ्चेति कर्म, अभिवृद्धिं नय त्व भवान् । यथा रविः अभिमानधनमभि सामस्त्येन मान प्रमाण यस्य तत् अभिमानञ्च तद्धनञ्चाभिमानधन सप्रमाणकिरणसन्दोहमित्यर्थः । जयञ्च तमस्तोमनिराकरणलक्षणञ्च कर्मद्वयम् अभिवृद्धिं नयति क्व काल इति[1] ॥ उपमालङ्कार ॥ ५५ ॥

**इति निरवद्यविद्यामण्डनमण्डितमण्डलीडितस्य पट्तर्कचक्रवर्तिनः श्रीमद्विनयचन्द्रपण्डितस्य**
**गुरोरन्तेवासिनो देवनन्दिनाम्नः शिष्येण सकलकलोद्भवचारुचातुरीचन्द्रिका-**
**चकोरेण नेमिचन्द्रेण विरचितायां पदकौमुदीनामदधानायां टीकायां**
**द्विसंधानकवेर्धनञ्जयस्य कृतौ राघवपाण्डवीये महाकाव्ये**
**राघवपाण्डवारण्यगमनवर्णनो नाम**
**चतुर्थः सर्गः ॥४॥**

---

हवा करते हैं ? हाथी आदिकी प्रतिदिन सवारी प्राप्त होती है क्या ! राजमहलके समान शिविरमें भी क्या गायक गीत सुनाते हैं ? अर्थात् नहीं ॥५४॥

हे राम अथवा युधिष्ठिर लौकिक अभ्युदयके लिए मिलनकी उत्कण्ठासे प्रेरितके समान प्रभुता फिर आपको उसी तरह प्राप्त हो जैसे प्रातःकाल कान्ति सूर्यसे मिलती है, आपके वनमें रहनेके कारण कोशल अथवा कुरु देशमें अनीतिरूपी अन्धकार सब ओर छाया है अतएव आप उचित समयपर सर्वथा विकास, आत्मगौरव रूपी धन और अनीतिकी जयको करें । [ सूर्य भी रात्रिमें फैले हुए अन्धकारको पूर्ण विस्तृत किरणोंरूपी सम्पत्तिसे जीतता है और समस्त पदार्थोंकी वृद्धिका कारण होता है ] ॥५५॥

निर्दोषविद्याभूषणभूषित पण्डितमण्डलीके पूज्य, पट्तर्कचक्रवर्ती, श्रीमान् पण्डित विनयचन्द्र गुरुके
शिष्य देवनन्दिके शिष्य, सकलकलाकी चातुर्यचन्द्रिकाके चकोर नेमिचन्द्र-द्वारा
विरचित कवि धनञ्जयके राघवपाण्डवीय नामसे ख्यात द्विसंधान-
काव्यकी पदकौमुदी टीकामें राघव-पाण्डवारण्यगमन
नामक चतुर्थ सर्ग समाप्त ।

१. काले इति सम्बन्ध —प०, द० ।

# पञ्चमः सर्गः

ततो वनं देशमनेकमेव पुण्याश्रमं तीर्थमतीत्य राजा ।
गूढः प्रदीप्त्यारविराटभूमिं स्फीतांसको दण्डकलक्षितां सः ॥१॥

तत इति—ततो रामलक्ष्मणसीता सम्बन्धित्वेन स्वदेशपरित्यागकान्तारप्रवेशवर्णनानन्तर स राजा राम. दण्डकलक्षिता भूमिमाट गतवान्। कथभूत ? स्फीतासक पीनोन्नतस्कन्ध । पुनः ? रविरिव रवि अथवा स्वयमेव प्रदीप्त्या क्षात्रतेजसा रवि । पुन. गूढ प्रच्छन्नवृत्तिक । कि कृत्वा ? पूर्व गतवान् राम. अतीत्यातिक्रम्य । किम् ? वनमरण्य तथा देश विपय तथा पुण्याश्रम तापसवसति तथा तीर्थम्। येन दृष्टेनाश्रितेन वा अपारससारपारावारस्तीयते तत्तीर्थं ऊर्जयन्तादि सर्वम्। कथभूतम् ? विशेष्यमनेकमेव नानाप्रकारमेव।

भारतीय.—तत पाण्डवाना सम्बन्धित्वेन स्वदेशपरित्यागकान्तारप्रवेशवर्णनानन्तरमनेकमेव वन देश पुण्याश्रम तीर्थमतीत्य स जगद्विख्यातो राजा युधिष्ठिर स्फीता लोकविख्याता विराटभूमि मत्स्यदेशमार गतवान्। कथभूत. ? कोदण्दकलक्षितास. कोदण्डकेन धनुषा लक्षित अस स्कन्धो यस्य सः। पुन. गूढ.सवृतः कया प्रदीप्त्या प्रतापेनेति ॥श्लेषालङ्कार ॥१॥

विहाय चापव्यवहारमुग्रं यथा नियोगं प्रयतो जितात्मा ।
निरूप्य तस्यां स कुलायभूमिं योगीव कञ्चित्[1] समयं निनाय ॥२॥

विहायेति—तस्या दण्डकारण्यभूमौ स राम. कञ्चित्समय काल निनाय नीतवान्। किं कृत्वा ? पूर्वं निरूप्य समर्प्य, का भूमिम् कस्मै ? कुलाय अन्वयाय भरताय। किं कृत्वा ? पुनश्च (च पुन.) विहाय परित्यज्य। कम् ? अपव्यवहार दुर्नीतिम्। कथम्भूतम् ? उग्र सोढुमशक्यम्। कथम्भूतो राम. ? जितात्मा जितेन्द्रिय.। पुन' प्रयत प्रयत्नवान्। कथम् ? यथा नियोग यथा स्वाभिप्रायेण नियोगो व्यापारो यत्र कर्मणि तत् यथा नियोगम्। उपमार्थं प्रदर्श्यते। योगीव यथा योगीन्द्र तस्या लौकिकप्रसिद्धाया भूमौ सकुलाय

---

अन्वय—ततो अनेकमेव वनं, देशं, तीर्थं, पुण्याश्रम अतीत्य, स्फीतासको प्रदीप्तभा रवि स. गूढ राजा दण्डकलक्षिता भूमिं आट।

उक्त प्रकारसे भ्रमण करते हुए अनेक वनों, देशों, ऋषियोंके पवित्र आश्रमों तथा प्रयाग आदि तीर्थोंको पार करके पुष्ट उन्नत स्कन्धधारी, तेजमें सूर्य समान वह गुप्त वेशधारी राजा राम दण्डक नामसे ख्यात प्रदेशमें पहुंचे थे।

अन्वय— कोदण्डलक्षितास प्रदीप्त्या गूढ स राजा स्फीता विराटभूमिं आर।

गुप्तवासके से अनेक देशों, वनों, तपोभूमियों और ऊर्जयन्त आदि तीर्थोंसे निकलता हुआ पुष्ट कन्धेपर धनुप लटकाये तथापि प्रताप शौर्यकी दृष्टिसे अज्ञात वह राजा युधिष्ठिर विस्तृत तथा ख्यात मत्स्य देशमें पहुंचा था ॥ १ ॥

अन्वय—उग्र चापव्यवहारं विहाय यथा नियोगं प्रयत. जितात्मा स तस्या कुलायभूमिं निरूप्य योगीव कञ्चित् कालं निनाय।

दारुण धनुपके प्रयोगको छोड़कर अपने स्वभावानुसार जीवन व्यतीत करनेमें लीन तथा आत्मजेता राजा रामने दण्डकारण्यमें झोपड़ीके लायक भूमिको चुनकर योगीके समान कुछ समय व्यतीत किया था [ आत्मापर विजय न पानेके कारण योगी भी बुरे आचरण तथा उग्रताको छोड़कर किसी वनमें कुटिया बनाता है और योगशास्त्रके अनुसार क्रिया करता है और अभ्यासमें कुछ समय बिताता है ]।

---

१ किञ्चित्—द०।

वृण्वन्तीति शवराः गायना. अथवा शेन मुखेन त्रियन्ते इति शवरा मुखिन वहुरोगा' सन्त. नित्यसेवा किं दधते । अपि तु नेति सर्वत्र सम्बन्ध. । अत्रैतत्तात्पर्यम्-यथा स्थितेन राज्येन चामरधरादय सम्भवन्ति तथा न गतेन राज्येनेति । आक्षेपालङ्कार. ॥ ५४ ॥

त्वामभ्युपैतु पुनरभ्युदयाय दीप्ति-
रौत्सुक्यमागतवतीव रविं दिनादौ ।
ध्वान्तं विसर्पति तवानुदयान्नयत्वं
कालेऽभिवृद्धिमभिमानधनञ्जयश्च ॥५५॥

इति श्री द्विसन्धानकवेर्धनञ्जयस्य कृतौ राघवपाण्डवीये महाकाव्येऽरण्य-
वासवर्णनं नाम चतुर्थ. सर्ग ॥४॥

---

त्वामिति—हे राम हे युधिष्ठिर च त्वा भवन्त च पुन दीप्ति. प्रतापलक्षणाऽभ्युपैतु व्यावृत्यागच्छतु । कस्मै ? अभ्युदयाय विभवाय । कथम्भूता सती ? औत्सुक्य रामस्य आगतवती । उपमार्थ –इव यथा रविमादित्य दिनादौ दिवसस्य प्रथमारम्भे दीप्ति. पुनरभ्युपैति । कथम्भूता ? औत्सुक्यमागतवती । उत्तरार्द्धे सोपस्करतया व्याख्यान विधीयते–तथा तव भवत. सम्बन्धित्वेन अनुदयादभिमतात् ध्वान्तमनीतिलक्षणतमः विसर्पति सामस्त्येन प्रवर्त्तते । यथा रवेरनुदयात् ध्वान्तमन्धकार विसर्पति । अतएव काले समये तथा अभिमानधनम् अभिमान एव धनम् अथवा अभिमानश्च धनञ्च अभिमानधन समाहारापेक्षयैकत्वमत्र । जयञ्चेति कर्म, अभिवृद्धिं नय त्व भवान् । यथा रवि अभिमानधनमभि सामस्त्येन मान प्रमाण यस्य तत् अभिमानञ्च तद्धनञ्चाभिमानधन सत्प्रमाणकिरणसन्दोहमित्यर्थ । जयञ्च तमन्तोमनिराकरणलक्षणञ्च कर्मद्वयम् अभिवृद्धिं नयति क काल इति[1] ॥ उपमालङ्कार ॥ ५५ ॥

इति निरवद्यविद्यामण्डनमण्डितमण्डलीडितस्य पट्तर्कचक्रवर्तिन श्रीमद्विनयचन्द्रपण्डितस्य
गुरोरन्तेवासिनो देवनन्दिनाम्न शिष्येण सकलकलोद्भवचारुचातुरीचन्द्रिका-
चकोरेण नेमिचन्द्रेण विरचितायां पदकौमुदीनामधानायां टीकायां
द्विसंधानकवेर्धनञ्जयस्य कृतौ राघवपाण्डवीये महाकाव्ये
राघवपाण्डवारण्यगमनवर्णनो नाम
चतुर्थ· सर्ग. ॥४॥

---

हवा करते हैं ? हाथी आदिकी प्रतिदिन सवारी प्राप्त होती है क्या ! राजमहलके शिविरमें भी क्या गायक गीत सुनाते हैं ? अर्थात् नहीं ॥५४॥

हे राम अथवा युधिष्ठिर लौकिक अभ्युदयके लिए मिलनकी उत्कण्ठासे प्रेरितके प्रभुता फिर आपको उसी तरह प्राप्त हो जैसे प्रात.काल कान्ति सूर्यसे मिलती है, आपके वनमें रहनेके कारण कोशल अथवा कुरु देशमें अनीतिरूपी अन्धकार सब ओर छाया है अतएव आप उचित समयपर सर्वथा विकास, आत्मगौरव रूपी धन और अनीतिकी जयको करें । [ सूर्य भी रात्रिमें फैले हुए अन्धकारको पूर्ण विस्तृत किरणोंरूपी सम्पत्तिसे जीतता है और समस्त पदार्थोंकी वृद्धिका कारण होता है ] ॥५५॥

निर्दोषविद्याभूषणभूषित पण्डितमण्डलीके पूज्य, पट्तर्कचक्रवर्ती, श्रीमान् पण्डित विनयचन्द्र गुरुके
शिष्य देवनन्दिके शिष्य, सकलकलाकी चातुर्यचन्द्रिकाके चकोर नेमिचन्द्र-द्वारा
विरचित कवि धनञ्जयके राघवपाण्डवीय नामसे ख्यात द्विसंधान-
काव्यकी पदकौमुदी टीकामें राघव-पाण्डवारण्यगमन
नामक चतुर्थ सर्ग समाप्त ।

१ काले इति सम्बन्ध.–प०, द० ।

# पञ्चमः सर्गः

ततो वनं देशमनेकमेव पुण्याश्रमं तीर्थमतीत्य राजा ।
गूढः प्रदीप्त्यारविराटभूमिं स्फीतांसको दण्डकलक्षितां सः ॥१॥

तत इति–ततो रामलक्ष्मणसीता सम्बन्धित्वेन स्वदेशपरित्यागकान्तारप्रवेशवर्णनानन्तर स राजा राम दण्डकलक्षिता भूमिमाट गतवान्। कथभूत ? स्फीतासक. पीनोन्नतस्कन्ध । पुन ? रविरिव रवि. अथवा स्वयमेव प्रदीप्त्या क्षात्रतेजसा रवि । पुन गूढ प्रच्छन्नवृत्तिक । कि कृत्वा ? पूर्व गतवान् राम. अतीत्यातिक्रम्य । किम् ? वनमरण्य तथा देश विषय तथा पुण्याश्रम तापसवसति तथा तीर्थम्। येन दृष्टेनाश्रितेन वा अपारससारपारावारस्तीर्यते तत्तीर्थं ऊर्जयन्तादि सर्वम्। कथभूतम् ? विशेष्यमनेकमेव नानाप्रकारमेव ।

भारतीय –तत पाण्डवाना सम्बन्धित्वेन स्वदेशपरित्यागकान्तारप्रवेशवर्णनानन्तरमनेकमेव वन देश पुण्याश्रम तीर्थमतीत्य स जगद्विख्यातो राजा युधिष्ठिर स्फीता लोकविख्याता विराटभूमि मत्स्यदेशमार गतवान्। कथभूत. ? कोदण्दकलक्षितास. कोदण्डकेन धनुषा लक्षित अस. स्कन्धो यस्य स ।पुन गूढःसवृत. कया प्रदीप्त्या प्रतापेनेति ॥श्लेषालङ्कार ॥१॥

विहाय चापव्यवहारमुग्रं यथा नियोगं प्रयतो जितात्मा ।
निरूप्य तस्यां स कुलायभूमिं योगीव कञ्चित्[1] समयं निनाय ॥२॥

विहायेति–तस्या दण्डकारण्यभूमौ स राम कञ्चित्समय काल निनाय नीतवान्। किं कृत्वा ? पूर्वं निरूप्य समर्प्य, का भूमिम् कस्मै ? कुलाय अन्वयाय भरताय । किं कृत्वा ? पुनश्च ( च पुन. ) विहाय परित्यज्य । कम् ? अपव्यवहार दुर्नीतिम्। कथम्भूतम् ? उग्र सोढुमशक्यम्। कथम्भूतो राम. ? जितात्मा जितेन्द्रिय । पुन. प्रयत प्रयत्नवान्। कथम् ? यथा नियोग यथा स्वाभिप्रायेण नियोगो व्यापारो यत्र कर्मणि तत् यथा नियोगम्। उपमार्थं प्रदर्श्यते। योगीव यथा योगीन्द्र तस्या लौकिकप्रसिद्धाया भूमौ सकुलाय

---

अन्वय—ततो अनेकमेव वनं, देश, तीर्थं, पुण्याश्रमं अतीत्य, स्फीतासंको प्रदीप्तभा रवि स. गूढ. राजा दण्डकलक्षिता भूमिं आट ।

उक्त प्रकारसे भ्रमण करते हुए अनेक वनों, देशों, ऋषियोंके पवित्र आश्रमों तथा प्रयाग आदि तीर्थोंको पार करके पुष्ट उन्नत स्कन्धधारी, तेजमें सूर्य समान वह गुप्त वेशधारी राजा राम दण्डक नामसे ख्यात प्रदेशमें पहुंचे थे ।

अन्वय— कोदण्डलक्षितास प्रदीप्त्या गूढ स राजा स्फीतां विराटभूमिं आर ।

गुप्तवासके प्रसंगसे अनेक देशों, वनों, तपोभूमियों और ऊर्जयन्त आदि तीर्थोंसे निकलता हुआ पुष्ट कन्धेपर धनुष लटकाये तथापि प्रताप शौर्यकी दृष्टिसे अज्ञात वह राजा युधिष्ठिर विस्तृत तथा ख्यात मत्स्य देशमें पहुंचा था ॥ १ ॥

अन्वय—उग्र चापव्यवहारं विहाय यथा नियोग प्रयत जितात्मा स तस्यां कुलायभूमिं निरूप्य योगीव कञ्चित् काल निनाय ।

दारुण धनुषके प्रयोगको छोड़कर अपने स्वभावानुसार जीवन व्यतीत करनेमें लीन तथा आत्मजेता राजा रामने दण्डकारण्यमें झोपड़ीके लायक भूमिको चुनकर योगीके समान कुछ समय व्यतीत किया था [ आत्मापर विजय न पानेके कारण योगी भी बुरे आचरण तथा उग्रताको छोड़कर किसी वनमें कुटिया बनाता है और योगशास्त्रके अनुसार क्रिया करता है और अभ्यासमें कुछ समय बिताता है ]।

---

१ किञ्चित्—द० ।

समान कुल यस्याऽसौ सकुलः तस्मै सकुलाय भूमिं निरूप्य कञ्चित् समय नयति। कथम्भूतः जितात्मा ? पुनः प्रयतः प्रयत्नपरः। कथम् ? यथा नियोग स्वाभिप्रायव्यापारम्। किं कृत्वा ? पूर्वं विहाय च। कम् ? अप-व्यवहारम्। कथम्भूतम् ? उग्रमिति सम्बन्धः।

भारतीयः—स युधिष्ठिर. तस्या विराटभूमौ कञ्चित्समय निनाय। क इव ? योगीव। किं कृत्वा ? पूर्वं निरूप्यावलोक्य। काम् ? कुलायभूमिं कुलायाय नीडाय भूमिः कुलायभूमिः ता निवासभूमिम्। कथम्भूतः ? अजितात्मा अजितेन्द्रियः द्यूतव्यसनोपहत'। पुनः कथभूतः ? प्रयतः। कथम् ? यथा नियोगम्। किं कृत्वा ? पूर्वं विहाय विमुच्य। काम् ? चापव्यवहारम्। कीदृगम् ? उग्र तीव्रम्। उपमार्थः प्राग्वत्। श्लेपालङ्कारः॥२॥

**विरामभूमिः कमनीयतायाः कृष्णोदयानां विनिवासहेतुः।**
**यौ कामनिवेशमूर्तिस्तत्राभिमुख्यं किल कीचकस्य ॥३॥**

विरामेति—तत्र दण्डकारण्ये किल लोकोक्तौ शास्त्रोक्तौ वा कीचकस्य वेणो सम्बन्धित्वेन आभिमुख्य कृष्णो लक्ष्मण' समाययौ गतवान्। कथभूत. ? कमनीयतायाः रमणीयतायाः. विरामभूमि. विश्रामावनि.। पुनः दयाना करुणाना विनिवासहेतुः स्थितिकारणम्। पुनः कामनिवेशमूर्ति. कन्दर्पस्थितिशरीरक इति सम्बन्धः।

भारतीय'—तत्र विराटभूमौ किल कृष्णा द्रौपदी कीचकस्य कीचकनामधेयस्य नराधिपस्याभिमुख्य समाययौ गतवती। कथभूता ? कमनीयताया विरामभूमि.। पुनरुदयाना निवासहेतु'। पुनः कामनिवेशमूर्तिः कामानामभिलाषाणा निवेशाय रचनायै मूर्तिर्यस्याः सा' ॥३॥

**विलासभावेन विलम्बमानं निस्त्रिंशमत्राहृत सूर्यहासम्।**
**असौ निजग्राहमहोद्धतिस्तं पुण्यैकरूपेण वशं हि सर्वम् ॥४॥**

विलासेति—अत्रास्मिन् प्रस्तावे असौ लक्ष्मणस्त लोकप्रसिद्ध सूर्यहास सूर्यहासनामधेय निस्त्रिंश खड्गमाहृत गृहीतवान्। कथम्भूत निस्त्रिंशम् ? विलम्बमान निरालम्बतया लम्बमानम्। केन ? विलासभावेन वीना पक्षिणा लास. विलास. क्रीडा यत्र तद्विलास तस्य भावेन गगन समुपेत्येत्यर्थः। कथभूतो लक्ष्मणः ?

---

अन्वय—जितात्मा यथा नियोगं प्रयत भूमिं निरूप्य तस्या उग्रं चापव्यवहारं विहाय कञ्चित् निनाय।

, आदि व्रतोंके पूर्ण पालनके कारण आत्मजयी तथापि कर्म-संयोगके अनु जुआ, आदि रण कर्ता युधिष्ठिर अपने सगोत्रोंके लिए राज्य हार कर विराट भूमिमें पहुंचनेपर प्रखर विद्याको त्यागकर कुछ समय बिता रहे थे॥ २॥

अन्वय—तत्र कमनीयताया विरामभूमि. दयानां विनिवासहेतुः कामनिवेशमूर्ति. कृष्ण किल कीचकस्य आभिमुख्यं समाययौ।

दण्डकारण्यमें रहते समय सुन्दरताकी चरमसीमा, दया दाक्षिण्यकी निवासभूमि सशरीर कामके समान मनोहर वासुदेव लक्ष्मण कीचक (वेणुवन) के सामने जा पहुंचा था।

अन्वय— . उदयानां विनिवासहेतु कृष्णा ..।

f भूमिमें निवासके समय परमलावण्यकी चरम कृति, अनेक अभ्युदयोंकी निमित्त, तथा कामरूपी मन्दिरमें विराजमान करने योग्य मूर्तिके द्रौपदी संयोगसे कीचक राजाके सामनेसे निकल गयी॥ ३॥

अन्वय—विलासभावेन विलम्बमान तं सूर्यहासं निस्त्रिंशं अत्र निजग्राहमहोद्धति असौ आहृत हि पुण्यैकरूपेण सर्व वशं।

पक्षियोंकी उडानके समान आकाशमें लटकते उस लो द्ध चन्द्रहास खड्गको दण्डकारण्यमें, स्वयमेव वरण करनेके कारण प्रतापी लक्ष्मणने पकड़ लिया था। उचित ही है क्योंकि, केवल पुण्यके प्रतापसे सब कुछ वशमें हो जाता है।

---

१ श्लेपालङ्कार—प. द.।

निजग्राहमहोद्धृति' निजश्चासौ ग्राहश्च निजग्राह तेन महोद्धृतिर्यस्य सः स्वकीयाङ्गीकारमहोद्भृत इत्यर्थ' । अर्थान्तरमुपन्यस्यते—हि स्फुट सर्व वस्तुजात पुण्यैकरूपेण कृत्वा वशमात्माधीन जायत इति सम्बन्ध' ।

भारतीयः—अत्रावसरे असौ कृष्णा द्रौपदी त लोकप्रसिद्ध कीचक निजग्राह निगृहीतवती । केन कृत्वा ? विलासभावेन कटाक्षपातेन । कथम्भूतम् ? विलम्बमान क्रीडा कर्त्तुं त्वरयन्तम् ? पुन. निस्त्रिश निर्दयम् । कथम्भूतम् ? आहृतसूर्यहासमाहृतः लुप्त ( लोपित ) सूर्यस्य हासो दीप्तिर्येनासौ आहृतसूर्यहासः तम् आहृतसूर्यहासम् तिरस्कृतरविप्रतापमित्यर्थ. । कथम्भूता महोद्धृति ? महेनोत्सवेन उद्धृतिर्यस्या सा महोद्धृति. उत्सवोद्धृतेत्यर्थ । युक्तमेतत्, हि स्फुट पुण्यैकरूपेण मनोहररूपेण सर्वं वश स्यात् । अर्थान्तरन्यासालङ्कार' ॥४॥

**इच्छातिभङ्गेन न रन्तुकामं तं तेन निघ्नन्नियमेन सक्तम् ।**
**स्वस्थं परं ज्योतिरसौ चकार नश्यन्ति वाऽस्थानकृतप्रयासाः ॥५॥**

इच्छेति—असौ लक्ष्मणस्त नर रामायणीयकथाप्रसिद्ध विमुक्तजटाजूटधारिण शम्बुकुमाराख्य पर केवल स्वस्थ स्वर्गस्थ चकार । कथम्भूतो लक्ष्मण ? तु पुनः ज्योति. द्विरुक्त क्षात्र तेज. स्वयमेवेत्यर्थ' । कथम्भूतम् ? सक्त सम्बद्धम् । केन ? नियमेन व्रतेन । कथम् ? कामम(त्य)र्थम् । किं कुर्वाणो लक्ष्मण. ? त शम्बुकुमार स्वस्थ स्वर्गस्थ चकार ? तेन सूर्यहासाभिधानेन खड्गेन त वशजाल निघ्नन् सभिन्दन् । केन कृत्वा ? पुन इच्छातिभङ्गेन, मूलावशेषमिद वशजालमेतेन खड्गेन छिनद्मीति वाञ्छातिभञ्जनेनेति भाव । अर्थान्तरमभिधीयते—वा एवार्थसूचकः । अस्थानकृतप्रयासा नश्यन्त्येव ।

भारतीय'—असौ कृष्णा द्रौपदी तेन विलासभावेन कृत्वा त कीचक नृपतिं स्वस्थ सुखिन न चकार न कृतवती । कथम्भूता सती ? पर केवल ज्योति स्वयमेव परमार्थत पतिव्रतलक्षण तेज. । कथम्भूत कीचकम् ? न सक्तमनियन्त्रितपरिणामम् । क ? नियमे व्रते । पुन निघ्न परदाररतम् । पुन. रन्तुकाम भोक्तुकामम् । केन कृत्वा ? इच्छातिभङ्गेन इन्द्रियाणा यथेष्ट तृप्तिर्भवतात् तावदिमा भोक्ष्यामि पश्चाद्धिरस्यामीति वाञ्छाभञ्जनभयेनेत्यर्थ । अर्थान्तर प्राग्वत्[1] ॥५॥

**सुरासुरातिक्रमविक्रमस्य दशास्यनामोद्वहतः स्वसारम् ।**
**सुतापयोगादभवत्सुदुःखा कामेषु भग्नेषु कुतः सुखं वा ॥६॥**

---

अन्वय—विलासभावेन विलम्बमान आहृतसूर्यहास निस्त्रिंश त महोद्धृति असौ निजग्राह हि पुण्यैकरूपेण सर्वं वश ।

इस अवसरपर भोगविलासकी इच्छासे पीछे-पीछे दौड़नेवाले, सूर्यकी हँसीसे भी तीक्ष्ण और उद्वेजक हँसी हँसते उस निर्दय कीचकको अत्यन्त उद्धत इस द्रौपदीने झिड़क दिया था । पुण्यमय आचरणके द्वारा सब कुछ सम्भव है ॥ ४ ॥

अन्वय—पर ज्योतिरसौ इच्छातिभङ्गेन तेन काम त निघ्नन् नियमेन सक्त नरं स्वस्थ चकार । हि अस्थानकृतप्रयासाः नश्यन्ति ।

अत्यन्त तेजस्वी लक्ष्मणने इच्छामात्रसे विपुल संहारकर्ता उस चन्द्रहास खड्ग-द्वारा यों ही वंशवन को काटते हुए वहीं परम तपस्यामें लीन शम्बुकुमारको भी स्वर्गीय कर दिया था । अस्थानपर किये गये प्रयत्न विनाशका ही कारण होते हैं ।

अन्वय– नियमेन सक्त रन्तुकाम, निघ्न त तेन इच्छातिभंगेन स्वस्थ न चकार ।

पतिव्रतके तेजसे भासमान द्रौपदी व्रत नियमादिके भंगकर्त्ता, रमण करनेके लिए व्याकुल, परस्त्रीगामी और अधम कीचकको, उक्त प्रकारसे तर्जनापूर्वक मनोरथ भंग करके सदाचारी या शान्त नहीं किया था । ठीक ही है अपात्रके साथ किये गये सत्कर्म निष्फल ही होते हैं ॥ ५ ॥

अन्वय–सुरासुरातिक्रमविक्रमस्य दशास्यनामोद्वहतः स्वसा सुतापयोगात् अरम् सुदु खा अभवत् । वा कामेषु भग्नेषु सुख कुत ?

---

१. श्लेषालङ्कार –प०, द० ।

सुरासुरेति—सुतापयोगात् सुतस्यापयोगः सुतापयोगः तस्मात् पुत्रवियोगात् स्वसा भगिनी शूर्पणखा-नामधेया अरमत्यर्थं सुदुःखाऽभवत् सञ्जाता। कस्य (स्वसा ?) पुरुषस्येत्यध्याहार्यम्। किं कुर्वतः ? दशास्यनाम दशमुखाभिधान रावणसञ्ज्ञामुद्वहतः दधानस्य। कथम्भूतस्य ? सुरासुरातिक्रमविक्रमस्य सुराश्चा-सुराश्च सुरासुरास्तानतिक्रामति विक्रमो यस्य स तस्य तथोक्तस्य देवदानवोल्लङ्घितपराक्रमस्य। अर्थान्तरमाह—कामेष्वभिलाषेषु भग्नेषु नष्टेषु कुतो वा सुख स्यादिति सम्बन्धः।

भारतीयः—सुतापयोगात् सुतापसम्बन्धात् अस्य विराटभूपतिश्यालकस्य दशावस्था सुदुःखाऽतिदुःखा-ऽभवत्। किं कुर्वतः ? उद्वहत.। किम् ? नाम। कथम्भूतम् ? स्वसार सु अतिशयेनासार कीचकमित्यर्थः। कथम्भूतस्य ? सुरासुरातिक्रमविक्रमस्य सुराः "रै शब्दे" इति धातोर्विचि रूप सुराण सुराः सुराश्च सुरा च सुरासुरे सुरासुराभ्या सकाशादतिक्रमो यस्यासो सुरासुरातिक्रमः तादृक् विक्रमो यस्य स तस्य प्रलापमदिरा-निरस्तविक्रमस्येति भाव.। अथवा सुरा सु अतिशयेन राः प्रलापो यस्याः सकाशात्सा सुराः अतिप्रलापेति भावः। सुरा मदिरा। अतिक्रम. भार्यायामिव पुत्रीसावित्रीभगिनीषु सुरताभिलापरूपः। विक्रमः विगतक्रमः यदृच्छाप्रवृत्तिरित्यर्थ.। सुराश्चासौ सुरा च सुरासुरा सुरासुराया' सकाशादतिक्रमो यस्य स तस्य सुरासुराति-क्रमस्येव विक्रमो यस्य स सुरासुरातिक्रमविक्रमस्तस्य अतिप्रमत्तस्य मद्यपस्येव यदृच्छाप्रवृत्तिनिष्ठस्येति भावः। अर्थान्तर न्यस्यति, कामेषुभग्नेषु कामस्य ये इषवो वाणास्तैर्भग्नेषु कन्दर्पशरजर्जरीभूतेषु विषये कुतो वा सुख स्यादिति सम्बन्धः[1] ॥ ६ ॥

**वैरं तु कामं समुपेत्य रूपं तदीयमालोक्य च विभ्रमन्तम्।**
**इयाय संमोहनमन्तरेऽस्मिन्विव्याध वाणैर्मकरध्वजोऽपि ॥ ७ ॥**

वैरमिति—सा स्वसा शूर्पणखा समोहन वैचित्यमियाय गतवती। कि कृत्वा ? पूर्व समुपेत्य सम्प्राप्य। किम् ? वैर शत्रुत्वम्। कथम् ? काममत्यर्थम्। कि कृत्वा ? पुनरालोक्य निरीक्ष्य। किम् ? रूपम्। कथम्भूतम् ? तदीय तस्येद तदीयम्। चकारः समुच्चयार्थ. आलोक्य च, क त लक्ष्मणमित्यध्याहार्यमिद पदम्। कथम्भूतम् ? विभ्रमन्तमितस्तत. पर्यटन्तम्। तु पुन. अन्तरेऽस्मिन्प्रस्तावे ता रावणभगिनीं मकरध्वजोऽपि कन्दर्पोऽपि विव्याध हतवान्। कै कृत्वा वाणै. शरैरिति सम्बन्ध.।

---

**देवों तथा दैत्योंके सम्मिलित पराक्रमसे भी अधिक पराक्रमी दशानन नाम धारक लंकेश्वरकी वहिन शूर्पणखा अपने पुत्र शम्बुकुमारकी अपमृत्युके समाचारसे अत्यन्त दुःखी हो गयी थी। मनोरथोंका भंग हो जानेपर सुख कहाँसे हो सकता है ?**

अन्वय—सुतापयोगात् सुरा-सुरातिक्रमविक्रमस्य स्वसार नामोद्वहत अस्य दशा सुदुःखा अभवत्। वा कामेषुभग्नेषु कुत सुखम् ?

**अपमान और कामजन्य भीषण तापके कारण मदिरा पीकर प्रलाप और यदृच्छा आचरण-द्वारा ही अपने पराक्रमके प्रदर्शनमें लीन अत्यन्त भावहीन नाम कीचकसे ख्यात इस विराट् नृपतिके सालेकी अवस्था अत्यन्त निन्दनीय हो गयी थी। कामदेवके वाणोंका लक्ष्य वन जानेपर सुख कैसे मिल सकता है ॥ ६ ॥**

अन्वय—कामं वैरं समुपेत्य च विभ्रमन्त तदीयं रूप विलोक्य तु संमोहनम् इयाय अस्मिन् अन्तरे मकरध्वजोऽपि वाणै विव्याध।

**वह सूर्पणखा उत्कृष्ट वैरसे प्रेरित हो लक्ष्मणके पास गयी और इधर-उधर भ्रमण करते उसके लोकोत्तर सौन्दर्यको देखकर, आश्चर्य है कि उस ( सूर्पणखा ) पर संमोहन हो गया। इसी रमें कामदेवने भी उस राक्षसीको अपने वाणोंसे घायल कर दिया।**

अन्वय—तदीय रूपमालोक्य रन्तुकामं विभ्रम त समुपेत्य अस्मिन् अन्तरे मकरध्वजोऽपि वाणै विव्याध च समोहन इयाय।

---

१. अर्थान्तरन्यासालङ्कार—प०, द०।

भारतीय'—त विराटभूपतिश्यालक कीचक समोहन कर्तुं इयाय जगाम । कथम्भूतम् ? त रन्तुकाम समोक्तुकामम् । कथम् ? वै स्फुटम् । किं कृत्वा ? पूर्वं समुपेत्य प्राप्य । किम् ? तदीय रूपम् । पुन. किं कृत्वा ? आलोक्य च । क विभ्रम भ्रूविकारम् । अन्तरेऽस्मिन् बाणै कृत्वा मकरध्वजोऽपि विव्याध । उक्तञ्च—

"हावो मुखविकार स्याद्भाव स्याच्चित्तसम्भव ।
विलासो नेत्रजो ज्ञेयो विभ्रमो भ्रूयुगान्तयो[1] ॥ ७ ॥ [ ]

**निश्वासमुष्णं वचनं निरुद्धं म्लानं मुखाब्जं हृदयं सकम्पम् ।**
**श्रमादिवाङ्गं पुलकप्रसङ्गं पदे पदेऽसौ विभरांबभूव ॥ ८ ॥**

निश्वासमिति—उष्ण निश्वास नासावात तथा निरुद्ध गद्गद वचन वाच तथा म्लान सकुचित मुखाब्ज वदनकमल तथा सकम्प हृदय हृत् तथा पुलकप्रसङ्ग रोमाञ्चसम्बन्धि अङ्ग शरीर पदे पदे श्रमादिव असौ रावणभगिनी कीचको वा विभरांबभूव बभार । पूर्वोक्तनिश्वासादिक कर्मेति सम्बन्ध । उत्प्रेक्षालङ्कार. ॥ ८ ॥

**श्वासानुबन्धात्परितापहेतोर्बाष्पानुपा दनस्य पौष्पाः ।**
**शरा नु वाताग्निजलात्मकाः स्युरिति क्षणं चिन्तयति स्म ञ्चित् ॥ ९ ॥**

श्वासेति—असौ रावणभगिनी कीचको वा क्षण मुहूर्त्तं तावत् किञ्चित् चिन्तयति स्म चिन्तितवती चिन्तितवाश्च । कथमिति श्वासानुबन्धात् नासावातानुपङ्गात् परितापहेतो. सन्तापहेतो. बाष्पानुपातादश्रुजलप्रपतनात् एतेभ्यस्त्रिभ्य कारणेभ्य. नु अहो मदनस्य कन्दर्पस्य पौष्पा कुसुममया. शरा बाणा वाताग्निजलात्मका अनिलानलजलस्वभावा स्यु भवेयुरिति सम्बन्ध । स्वभावाख्यानम् ॥ ९ ॥

**विश्लेषणं वेत्ति न सन्धिकार्यं स विग्रहं नैव समस्तसंस्थाम् ।**
**प्रागेव वेवेक्ति न तद्धितार्थं शब्दागमे प्राथमिकोऽभवद्वा ॥१०॥**

विश्लेषणमिति—विश्लेषण वियोजन वेत्ति जानाति, सन्धिकार्य परस्परसयोगविधान न वेत्ति विग्रह कलह वेत्ति समस्तसस्था सकलव्यवस्था नैव वेत्ति प्रागेव प्रथमत एव हितार्थं स्वार्थं तल्लोकप्रसिद्ध न वेत्ति ( वेवेक्ति ) [ न जानाति ] न विचारयति इत्यनया युक्त्या स मदन शब्दागमे शब्दश्चागमश्च शब्दागम समाहारापेक्षयैकत्वमत्र ध्वनौ सामस्त्यगतौ च । उपमार्थे प्रयुज्यते—प्राथमिक इवाभवत् सजात शब्दागमे

---

द्रौपदीके लोकोत्तर सौन्दर्यको देखकर रमण करनेके लिए व्याकुल अतएव विवेक पराङ्मुख उस कीचकको लक्ष्य बनाकर कामदेवने अपने बाणोंसे छेद दिया था तथा उसे संमोहन (मूर्च्छा) में डाल दिया था ॥ ७ ॥

पद-पदपर इस सूर्पणखा अथवा कीचककी उष्ण श्वासें ती थीं, वचन गद्गद अथवा असम्बद्धसे निकलते थे, मुखकमल मुरझा गया था, हृदय धड़क रहा था, सारे शरीरमें वैसा ही रोमाञ्च तथा पसीना हो रहा था जैसा कि परिश्रमसे होता है ॥ ८ ॥

वह एक क्षण पर्यन्त कुछ ऐसा सोचते थे-अहो कामदेवके पुष्पमय बाण भी वायु, अग्नि और जलमय होने चाहिये क्योंकि इनके लगते ही दीर्घ श्वासें चलती हैं, सारे शरीरमें भीषण दाह होता है तथा आँखोंसे अश्रु टपकने लगते हैं ॥ ९ ॥

वह कामदेव वियोग कराना जानता है संयोग नहीं कराता है। विपरीत आचरण करता है अनुकूल रूपसे नहीं रहता है, प्रारम्भसे ही भला करनेका प्रयत्न नहीं करता है अतएव वह व्याकरण अथवा आगमके अल्पज्ञके समान है—[ व्याकरण शास्त्रका प्रारम्भिक छात्र भी अलग-अलग (विसन्धि) पदोंका प्रयोग करता है क्योंकि संधि करना नहीं जानता है। केवल विग्रह (पदोंका अर्थ) करता है कृदन्तादि अन्य कार्य नहीं जानता और न 'तद्धित'

1 अत्र श्लेषालङ्कार –प०, ट० ।

व्याकरणे कश्चित् पुमान् प्राथमिको जायते अनया वक्ष्यमाणापेक्षया विश्लेपण विसन्धि वेत्ति सन्धिकार्य मन्योन्यवर्णाश्लेषलक्षण विधान न वेत्ति, विग्रह समास ( वृत्त्यर्थबोधक वाक्य ) वेत्ति सकलसस्था समस्तनाम क्रियादिस्थितिं प्रागेव पूर्वत एव तद्धितार्थं च न वेवेक्तीति सम्बन्धः[1] ॥१०॥

**स रोपणान्पञ्च मयि प्रयुज्य शेषं जनं हन्ति तु चापयष्ट्या ।**
**संतापको नो घटको मनोभूरयस्कृतो बाल[2] इवेति दध्यौ ॥११॥**

स इति—अहो स मदनः रोपणान् मदनोन्मादनमोहनसन्तापनवशीकरणलक्षणोपलक्षितान् वाणान् पञ्च मयि प्रयुज्य सस्थाप्य तु पुन' शेष जन चापयष्ट्या धनुर्लतया हन्ति हिनस्ति। अतएव मनोभूः मकरध्वजः सन्तापको नो घटकः । क इव यथाऽयस्कृतो लोहकारस्य बालः शिशुः इव यथा । इति दध्यौ चिन्तितवती चिन्तितवाश्च रावणस्वसा कीचकश्चेति[3] ॥११॥

**तस्या विशेषेण कृताभिलाषात्तापेन गण्डूषविमुक्तमम्भः ।**
**शुचौ करेणोरिव दारुणेन[4] मूषागतं ताम्रमिवोष्णमासीत् ॥१२॥**

तस्या इति—तस्याः शूर्पणखाया विशेषेण अतिशयेन कृताभिलाषात् लक्ष्मणविषयकातिरागात् दारुणेन उग्रेण तापेन सन्तापेन शुचौ ग्रीष्मे काले करेणोर्हस्तिन्या इव गण्डूषविमुक्त कुल्लिकाच्युतमम्भ. सलिल-मुष्णमासीत् सञ्जातम् । तत् किमिव ? ताम्रमिव । कथम्भूतम् ? मूषागत सदिति सम्बन्धः ।

भारतीयः—तस्य कीचकस्य अविशेषेण सामान्येन शेष [5]प्राग्वत् ॥१२॥

**तस्यावतंसोत्पलपत्रमैत्री गतैः कटाक्षैर्विवशान्तरात्मा ।**
**नाजीगणन्मानमसौ कुलञ्च कामातुराणां हि कुतो विवेकः ॥१३॥**

तस्या इति—असौ रावणस्वस्वा शूर्पणखा मान कुलञ्च नाजीगणत् न गणयाञ्चकार । कथभूता सती ? अवतसोत्पलपत्रमैत्रीं कर्णभूषणीभूतकुवलयदलसखित्व गतै' तस्य लक्ष्मणस्य कटाक्षैः विवशान्तरात्मा विह्वलचेतस्का । अर्थान्तरमाह—कामातुराणा हि स्फुट विवेकः कुत' ?

---

ही जानता है । आगमोंका अभ्यासी भी कार्य विशेषका विचार-कर्ता व्यापक सामान्यको भूलता है, विवाद करता है, समन्वय नहीं सोचता और अभ्युदय निश्रेयसके लिए प्रयत्न नहीं करता है ] ॥ १० ॥

अपने पाँचो ही बाणोंका मेरे ऊपर प्रहार करके समस्त लोकोंको यह कामदेव धनुष-की लकड़ीसे ही मारता है। फलतः लुहारके बालकके समान यह जलन पैदा करता है मिलाता नहीं है [ लुहारका बच्चा धौंकनीको चलाकर आग ही प्रज्वलित करता है वस्तुओं-को गढ़ता नहीं है ] ॥ ११ ॥

लक्ष्मणके ऊपर विशेष रूपसे अत्यासक्ति होनेके कारण सूर्पणखाको गर्मीमें हथिनीके समान दारुण विरह ताप हो रहा था अतएव कुल्ला करके जो पानी वह मुखसे फेंकती थी वह गलानेके साँचेमें पड़ी ताम्र धातुके समान होता था ।

द्रौपदीपर अत्यन्त मोह होनेके कारण कीचककी भी वही अ । हो गयी थी जो गर्मी-में हथिनीकी होती है । मुखसे वैसा ही उष्ण पानी निकलता था जैसा कि घरियामें तपाया गया धातु होता है ॥ १२ ॥

कर्णके भूषण नीलकमलोंकी पंखुड़ियोंके मित्र उस लक्ष्मणके दीर्घ कटाक्षोंसे आत्म-विस्मृत रावणकी बहिनको न तो अपने मानका विचार था और न अपने पुलस्त्य कुलका ही ध्यान था । उचित ही है क्योंकि कामातुर लोगोंको विवेक नहीं होता है ।

---

१ श्लेषोपमालङ्कार.—प द. । २ बात—द० । ३ श्लेषोपमालङ्कार —प द । ४. दारुणेनेति पाठ. प्रतिभाति । ५ श्लेषोपमाऽलङ्कार —प०, द० ।

भारतीयः—तस्याः द्रौपद्याः वतंसोत्पलपत्रमैत्रीं गतैः कटाक्षैः, शेष प्राग्वत्, असौ कीचक. । अर्थान्तर-न्यासालङ्कार. ॥१३॥

**तत्रैव चेतोनयनेन्द्रियेषु स्थितेषु दूतेष्विव लोभितेषु ।**
**जातेषु चान्तःप्रकृतिक्षतेषु देहावशेषेण कथञ्चिदस्थात् ॥१४॥**

तत्रेति—असौ रावणस्वसा कथञ्चिन्महता कष्टेन देहावशेषेण शरीरमात्रेणास्थात् स्थितवती । केषु सत्सु ? चेतोनयनेन्द्रियेषु मनःस्पर्शनरसनानासानेत्रश्रवणेषु षट्सु तत्र लक्ष्मणे स्थितेषु सत्सु । कथम्भूतेषु ? लोभितेषु । केष्विव ? दूतेष्विव । चकारः समुच्चयार्थः । अन्त प्रकृतिक्षतेषु अन्तरङ्गस्वभावनाशेषु च जातेषु सत्स्विति सम्बन्धः ।

भारतीयः—तत्रैव द्रौपद्यामेव लोभितेषु दूतेष्विव चेतःप्रभृतिषु स्थितेषु अन्तःप्रकृतिक्षतेषु स्वाम्यादि-प्रकृतिनाशेषु जातेषु सत्सु देहावशेषेण कथञ्चिदस्थात् तस्थौ कीचक इति सम्बन्धः[१] ॥१४॥

**ततश्चकाङ्क्ष स्मरमोहहेतुं दुग्रहीतुं सविशीर्णचेताः ।**
**तान्तापयुक्तस्थितिरेत्य सान्तं नाशे हि जन्तुं मतिरप्यपैति ॥१५॥**

तत इति—तत चिन्तयाऽस्थिचर्मावशेषशरीरावस्थानन्तर सा रावणस्वसा बलाद्धठेन स्मरमोहहेतु कन्दर्पवैचित्यकारण लक्ष्मण चकाक्ष वाञ्छति स्म । किं कर्तुम् ? ग्रहीतुमङ्गीकर्तुम् । किं कृत्वा ? पूर्वमेत्यागत्य प्राप्येत्यर्थ । कम् ? सान्त साया लक्ष्म्या अन्त विनाश सान्त तमङ्गलावण्यग्लानिम् । कथम्भूता सती ? सविशीर्णचेता. विशीर्णञ्च तच्चेतश्च विशीर्णचेत. विशीर्णचेतसा सह वर्त्तमाना सविशीर्णचेता. कामोद्रेकनष्ट-चित्तेत्यर्थ । पुनः तान्ता क्षीणा । पुन अपयुक्तस्थितिरपयुक्ता स्थितिर्यस्या अन्यायमार्गप्रवृत्ति. । 'अर्थान्तरमाह—हि स्फुट जन्तु प्राणिन नाशे मरणकाले मतिरपैति त्यजति का वार्ताऽन्येषामिति सम्बन्ध ।

भारतीय—स कीचक बलात् स्मरमोहहेतु ता द्रौपदीं ग्रहीतु चकाक्ष । कथम्भूत ? तापेन युक्ता स्थितिर्यस्य स तापयुक्तस्थिति कामज्वरजनितावस्थ । शेष पूर्ववत्[२] ॥१५॥

---

कर्णके भूषण नीलकमलोंके दलों तक फैली द्रौपदीकी चंचल आँखोंकी चितवनने कीचकके मनको अभिभूत कर लिया था अतएव उस कामीको अपने स्वाभिमान या कुलका ख्याल न था ॥ १३ ॥

सूर्पणखा अथवा कीचकके मन, नयन आदि इन्द्रियाँ लोभी दूतोंके समान लक्ष्मण अथवा द्रौपदीमें ही लीन हो जानेसे उसका अन्तरंग स्वभाव ( चेतना ) खण्डित हो गयी थी अतएव वह किसी प्रकार शरीरसे ही जी रहे थे।

कामिनी काञ्चन पदादिके लोभके कारण दूत रूपी इन्द्रियाँ शत्रुके वशमें हो जानेपर तथा अपनी प्रकृतिके विरुद्ध हो जानेपर राजाका राज्य भी उसके शरीरमें ही सीमित हो जाता है ॥ १४ ॥

अन्वय—तत सविशीर्णचेता, तान्ता, अपयुक्तस्थिति सा अन्त एत्य स्मरमोहहेतु बलाद्ग्रहीतुं चकाक्ष । नाशे मतिरपि जन्तु अपैति ।

इसके बाद दुर्बल शरीरधारिणी तथा अमार्गमें प्रवृत्त उस सूर्पणखाने मनके अत्यन्त विक्षिप्त हो जानेसे अन्तमें अपने काम-ज्वरके कारण लक्ष्मणको बलपूर्वक पकड़नेकी इच्छा की । विनाशके समय प्राणीकी बुद्धि भी बिगड़ जाती है।

अन्वय—सान्त एत्य विशीर्णचेता तापयुक्तस्थिति स ।

इसके अनन्तर अनहोनीके आ जानेके कारण दुर्बल मन तथा विरह तापमें धंधकते उस कीचकने द्रौपदीको जबरदस्ती पकड़ बुलानेको ठानी थी क्योंकि 'विनाशकाले विपरीत-बुद्धि.' ॥ १५ ॥

---

१. श्लेषालङ्कार—प०, द० । २ अर्थान्तरन्यासालङ्कार—प०, द० ।

**आकारमादाय विनीतवेषं शृङ्गारमारोप्य यथाभिजातम् ।**
**कथञ्चिदभ्येत्य कृतावगूढं प्रचक्रमे वक्तुमिति प्रसन्नम् ॥१६॥**

आकारमिति–इति वक्ष्यमाणापेक्षया शूर्पणखा कीचकश्च वक्तु भापितु प्रचक्रमे प्रारेभे । कथ यथा प्रसन्नम् । किं कृत्वा ? पूर्वमभ्येत्यागत्य । कथम् ? कथञ्चिन्महता कष्टेन । कथम् ? यथा कृतावगूढ किञ्चिल्लोचने चरणौ च वहि. कृत्वा कृतशरीरावरण यथा भवति । कि कृत्वा ? पूर्वमारोप्य गृहीत्वा । कम् ? शृङ्गारम् । कथम्भूतम् ? विनीतवेप विनीतो वेपो यत्र तम् । कथम् ? यथाऽभिजातमवसरोचितम् । किं कृत्वा ? पूर्वमाकार कोपप्रसादजनितशरीरप्रकृतिमादाय गृहीत्वा ॥१६॥

**जानामि किञ्चिन्त्रपया न वक्तुं विवक्षितं सूचयति व्यवस्था ।**
**सत्यां कियत्यामपि संवृतौ हि दुःखं सुखं वा निगदन्ति चेष्टाः ॥१७॥**

जानामीति–त्रपया लज्जया किञ्चिद्वक्तु न जानामि न वेद्मि विवक्षित वक्तुमिष्ट व्यवस्था दशा कर्त्री सूचयति कथयति । हि स्फुट कियत्यामपि सवृतौ कल्पनायां सत्या सुख दु.ख वा कर्म चेष्टा. प्रवर्त्तनाः निगदन्ति कथयन्ति[1] ॥१७॥

**श्रव्याणि वाचालतयैव तन्व्या त्वया मयोक्तानि मनीषितानि ।**
**गवाक्षजालीकृतचेतसो मे स्मरस्य वाणैः शरणं भव त्वम् ॥१८॥**

श्रव्याणीति–तन्व्या कृशाङ्ग्या मया शूर्पणखया वाचालतयैव मुखरतयैव उक्तान्यभिहितानि मनीषितानि अभिलपितानि त्वया लक्ष्मणेन श्रव्याणि अतएव स्मरस्य मदनस्य वाणै. गवाक्षजालीकृतचेतसः सच्छिद्रीकृतमनस. मे त्व शरण भव ॥१८॥

**शार्ङ्गं पिनाकं धनुरिन्द्रचापं दिव्यं वहन्तोऽपि न जेतुमीशाः ।**
**शरासनं पौष्पमयं दधानस्त्रैलोक्यमालीढगतं करोति ॥१९॥**

शार्ङ्गमिति–शार्ङ्ग शृङ्गविकार धनु. नारायण., पिनाकम् अपि समन्तात् नाके स्वर्गे भव पिनाक पृष्ठोदरादित्वादाद्यस्य अकारस्य लोप । लोकप्रसिद्ध पिनाक धनुरीश्वर., इन्द्रचाप दिव्य दिवि भव गगनसमुद्भव धनु' इन्द्र, एवमेते हरिहरसुरेन्द्रा. स्वकीय स्वकीय धनु. कर्मभूत वहन्तोऽपि त्रैलोक्य त्रिभुवन कर्म-

---

शिष्ट वेप बनाकर, कुलीनोंके उपयुक्त शृङ्गार करके तथा प्रसन्न मुखादिकी मुद्रा करके अपने वास्तविक रूपको सर्वथा छिपाकर किसी प्रकारसे लक्ष्मण अथवा द्रौपदीके पास पहुँचकर उस सूर्पणखा अथवा कीचकने निम्न प्रकारसे बातें कहनी प्रारम्भ की थीं ॥ १६ ॥

मैं लज्जाके कारण कुछ भी कहना नहीं जानती (ता) हूँ। मेरी शारीरिक दशा ही मेरे भावोंको स्पष्ट कर रही है। कितना भी छिपानेका भगीरथ प्रयत्न करनेपर प्राणीकी चेष्टाएँ उसके सुख अथवा दु खको प्रकट कर देती हैं ॥ १७ ॥

कामवेदनासे कृश शरीर मुझ सूर्पणखा-द्वारा वाचालता पूर्वक प्रकट किये गये मनके भाव तुम्हें सुनना ही चाहिये। कामदेवके वाणोंने मेरे मनको छलनी बना दिया है अतएव आप मुझे शरण देवें।

पुरुप सुलभ वावदूकता पूर्वक मुझ ॱ -द्वारा कही गयी मनकी वातको कृशांगी तुम्हें ध्यानसे सुनना चाहिये ॱॱ॥ १८ ॥

लोकोत्तर (शाङ्ग) सींगसे बने धनुषका धारी तथा स्वर्गीय इन्द्र धनुपधारी देवेन्द्र भी त्रिलोकको जीतनेमें समर्थ नहीं होते हैं किन्तु यह कामदेव केवल फूलोंसे बने धनुपको ही उठाकर तीनों लोकोंको अपने एकतन्त्रमें मिला लेता है ॥ १९ ॥

1 अर्थान्तरन्यासाऽलंकार.–प०, द० ।

भूत जेतुमभिभवितु न ईशा न समर्थाः। अय स्मर, "कर्त्ता" पौष्प पुष्पाणामिद पौष्प कुसुममय शरासन धनु "कर्म" दधानः धरन् त्रैलोक्यमालीढगतम् आलीढ, स्थानविशेष, तद्गत करोति आलीढमव्यवर्त्ति विदधाति ॥१९॥

**त्वं जीविकाकृत्य निदेशमिच्छुं प्रतीच्छ मां भक्तियुजं दयात्मा।**
**तवास्मि दासी वशवर्त्तिनी मे त्वयि स्थितं जीवितमित्यवेहि ॥२०॥**

त्वमिति–हे लक्ष्मण त्व भवान् प्रतीच्छ स्वीकुरु। काम्? माम्। कथम्भूतस्त्वम्? दयात्मा कारुण्यमूर्त्ति। कथम्भूता माम्? भक्तियुज सेवापरिणताम्। पुन, इच्छुमिच्छन्तीम्। कम्? निदेशमादेशम्। किं कृत्वा? पूर्वं जीविकाकृत्य जीविकामिव कृत्वा। कम्? त्वा भवन्तम्। उत्तरार्द्धे सोपस्कारतया व्याख्यायते–यस्मात्कारणात् तव भवत दासी चेटी अस्मि भवामि। कथम्भूता? वशवर्त्तिनी आज्ञाविधायिनी। तस्मान्मे मम सम्बन्धित्वेन जीवित प्राणन त्वयि भवति स्थितमित्यवेहि जानीहि त्वमिति सम्बन्ध.।

भारतीयः–हे द्रौपदि त्व भवती मा कीचकनामधेय नृप प्रतीच्छ। कथम्भूता सती? दयात्मा। कथम्भूत माम्? भक्तियुजम्। पुन इच्छुमिच्छुक निदेशमन्यत्पूर्ववत्[1] ॥२०॥

**सम्भाषणेनापि न मे विषादं विषादभावेन जिहीर्षसि त्वम्।**
**नाभाषणं कल्पतरोस्तवापि फलान्तरायाय हि कल्पयन्ति ॥२१॥**

सभाषणेनेति–हे लक्ष्मण त्व भवान् मे मम विषाद मनोग्लानिं सम्भाषणेन कृत्वा जिहीर्षसि हर्त्तुमिच्छसि। नापि विपादभावेन क्रूरपरिणामेन। युक्तमेतत्। हि स्फुट कल्पतरो कल्पवृक्षस्य तव भवत, अभाषणमपि न कल्पयन्ति न आमनन्ति विद्वज्जना, कस्मै फलान्तरायाय फलविघ्नायेति सम्बन्ध।

भारतीय–पूर्वार्धे हे द्रौपदि, त्व भवती मे मम कीचकस्येति ज्ञेयम्। अस्योत्तरार्द्धे भवत्या इति बोद्धव्यम्। अर्थवशाद्विभक्तिविपरिणामत्वादिति सम्बन्ध ॥२१॥

**कथां तदीयां स निशम्य भीमः प्रभाव्य सौमित्र्यभिधानरूढः।**
**राजाग्रजादर्शितकार्यसिद्धिरन्तर्मदोऽन्तःकुपितः करीव ॥२२॥**

कथामिति–स लोकप्रसिद्ध राजा नृप तथा कुपितवान्। कथम्? अन्त (अन्त) करणे। कथम्भूतः? सौमित्र्यभिधानरूढ सौमित्रिनामप्रसिद्ध लक्ष्मण इत्यर्थ। पुन कथम्भूत? अन्तर्मद, त्रैलोक्यमध्ये न कश्चिन्ममोपरि तिष्ठतितरामिति गर्विष्ठ। पुन[2] अग्रजादर्शितकार्यसिद्धि अग्रजस्य रामस्य आदर्शिता

हे दयालु लक्ष्मण! भक्तिपूर्वक सेवामें उपस्थित तथा आजीविका करनेवाली दासीके समान और तुम्हारी आज्ञाकी प्रतीक्षामें खड़ी मुझको स्वीकार करो। मैं तुम्हारी अत्यन्त अनुगत दासी हूँ। यही समझो कि मेरा जीवन तुमपर आश्रित है।

अन्वय–वशवर्तिनी दासी दयात्मा त्व भक्तियुज निदेशमिच्छुं मा प्रतीक्ष तव जीविका कृत्यास्मि।

विराटके यहाँ आज्ञाकारिणी दासी तुम कृपामूर्ति द्रौपदी प्रेमसे प्रेरित और तुम्हारे संकेतकी प्रतीक्षामें खड़े मुझे कृतार्थ करो मैं तुम्हारी दासताका अन्त कर दूँगा क्योंकि मेरा जीवन इस तुम्हारे हाथमें है ॥ २० ॥

कुपित अथवा दुःखी होकर तुम (लक्ष्मण अथवा द्रौपदी) चार बातें कहकर भी मेरे मनके शोकको दूर नहीं करते (करती) हो [कोई बात नहीं] कल्प वृक्षके समान आपका भी मौन मेरी इच्छित वर-प्राप्तिमें वाधक न होगा [अभाषण (गाली) देनेपर भी कल्पवृक्ष इच्छित फल देते हैं] ॥ २१ ॥

अन्वय–सौमित्र्यभिधानरूढ स तदीयां कथां निशम्य भीम राजाग्रज-आदर्शित कार्यसिद्धि अन्तर्मद करीव अन्त कुपित।

सौमित्र्य (सुमित्राका पुत्र) नामसे ख्यात वह लक्ष्मण सूर्पणखाकी वीभत्स प्रेम-चर्चाको

१. श्लेषालङ्कार–प०, द०। २ अर्थान्तरन्यासालङ्कार–प०, द०।

**आकारमादाय विनीतवेपं शृङ्गारमारोप्य यथाभिजातम् ।**
**कथञ्चिदभ्येत्य कृतावगूहं प्रचक्रमे वक्तुमिति प्रसन्नम् ॥१६॥**

आकारमिति–इति वक्ष्यमाणापेक्षया शूर्पणखा कीचकश्च वक्तु भाषितु प्रचक्रमे प्रारेभे । कथ यथा प्रसन्नम् । किं कृत्वा ? पूर्वमभ्येत्यागत्य । कथम् ? कथञ्चिन्महता कष्टेन । कथम् ? 'यथा कृतावगूढ किञ्चि-ल्लोचने चरणौ च बहि. कृत्वा कृतशरीरावरण यथा भवति । कि कृत्वा ? पूर्वमारोप्य गृहीत्वा । कम् ? शृङ्गारम् । कथम्भूतम् ? विनीतवेप विनीतो वेपो यत्र तम् । कथम् ? यथाऽभिजातमवसरोचितम् । किं कृत्वा ? पूर्वमाकार कोपप्रसादजनितशरीरप्रकृतिमादाय गृहीत्वा ॥१६॥

**जानामि किञ्चिन्त्रपया न वक्तुं विवक्षितं सूचयति व्यवस्था ।**
**सत्यां कियत्यामपि संवृतौ हि दुःखं सुखं वा निगदन्ति चेष्टाः ॥१७॥**

जानामीति–त्रपया लज्जया किञ्चिद्वक्तु न जानामि न वेद्मि विवक्षित वक्तुमिष्ट व्यवस्था दशा कर्त्री सूचयति कथयति । हि स्फुट कियत्यामपि सवृतौ कल्पनाया सत्या सुख दु.ख वा कर्म चेष्टाः प्रवर्त्तनाः निगदन्ति कथयन्ति[1] ॥१७॥

**श्रव्याणि वाचालतयैव तन्व्या त्वया मयोक्तानि मनीपितानि ।**
**गवाक्षजालीकृतचेतसो मे स्मरस्य बाणैः शरणं भव त्वम् ॥१८॥**

श्रव्याणीति–तन्व्या कृशाङ्ग्या मया शूर्पणखया वाचालतयैव मुखरतयैव उक्तान्यभिहितानि मनीपितानि अभिलपितानि त्वया लक्ष्मणेन श्रव्याणि अतएव स्मरस्य मदनस्य बाणै गवाक्षजालीकृतचेतसः सच्छिद्रीकृतमनस मे त्व शरण भव ॥१८॥

**शार्ङ्गं पिनाकं धनुरिन्द्रचापं दिव्यं वहन्तोऽपि न जेतुमीशाः ।**
**शरासनं पौष्पमयं दधानस्त्रैलोक्यमाली तं करोति ॥१९॥**

शार्ङ्गमिति–शार्ङ्गं शृङ्गविकार धनुः नारायण, पिनाकम् अपि समन्तात् नाके स्वर्गे भव पिनाक पृष्ठोदरादित्वादाद्यस्य अकारस्य लोप । लोकप्रसिद्ध पिनाक धनुरीश्वर., इन्द्रचाप दिव्य दिवि भव गगन-समुद्भव धनु इन्द्र, एवमेते हरिहरसुरेन्द्रा. स्वकीय स्वकीय धनु' कर्मभूत वहन्तोऽपि त्रैलोक्य त्रिभुवन कर्म-

---

शिष्ट वेप बनाकर, कुलीनोंके उपयुक्त शृङ्गार करके तथा मुखादिकी मुद्रा करके अपने वास्तविक रूपको सर्वथा ि किसी प्रकारसे लक्ष्मण अथवा द्रौपदीके पास पहुँचकर उस सूर्पणखा अथवा कीचकने निम्न रसे बातें कहनी प्रारम्भ की थीं ॥ १६ ॥

मैं लज्जाके कारण कुछ भी कहना नहीं ा (ता) हूँ । मेरी शारीरिक दशा ही मेरे भावोंको स्पष्ट कर रही है । कितना भी छिपानेका भगीरथ ‍ करनेपर प्राणीकी चेष्टाएँ उसके सुख अथवा दु खको प्रकट कर देती हैं ॥ १७ ॥

कामवेदनासे कृश शरीर मुझ सूर्प - पूर्वक किये गये मनके भाव तुम्हें सुनना ही चाहिये । देवके बाणोंने मेरे मनको छलनी दिया है अतएव आप मुझे शरण देवें ।

पुरुष सुलभ वावदूकता पूर्वक - कही म बातको ंगी तुम्हें ध्यानसे सुनना चाहिये ॥ १८ ॥

लोकोत्तर (शार्ङ्ग) सींगसे बने स्वर्गीय धनुषधारी देवेन्द्र भी त्रिलोकको जीतनेमें समर्थ नहीं होते हैं वि कामदेव केवल फूलोंसे धनुषको ही उठाकर तीनों लोकोंको अपने एकतन्त्रमें है ॥ १९ ॥

1 अर्थान्तरन्यासाऽलंकार –प०, द० ।

मूढ जेतुमभिभवितु न ईशा न समर्था । अत्र स्मर "कर्ता" पौष्प पुष्पाणामिद पौष्प कुसुममय नागधनु "कर्म" दधान धरन् त्रैलोक्यमालीढगतम् आलीढ स्थानविशेष तद्गत करोति आलीढमध्यवर्ति विदधाति ॥१९॥

**त्वं जीविकाकृत्य निदेशमिच्छुं प्रतीच्छ मां भक्तियुजं दयात्मा ।**
**तवास्मि दासी वशवर्त्तिनी मे त्वयि स्थितं जीवितमित्यवेहि ॥२०॥**

त्वमिति–हे लक्ष्मण त्व भवान् प्रतीच्छ स्वीकुरु । काम ? माम् । कथम्भूतस्त्वम् ? दयात्मा कारुण्य-मूर्त्ति । कथम्भूता माम् ? भक्तियुज सेवापरिणताम् । पुन इच्छुमिच्छन्तीम् । कम् ? निदेशमादेशम् । किं कृत्वा ? पूर्व जीविकाकृत्य जीविकामिव कृत्वा । कम् ? त्वा भवन्तम् । उत्तरार्द्ध सोपस्कारतया व्याख्यायते–यस्मात्कारणात् तव भवत दासी चेटी अस्मि भवामि । कथम्भूता ? वशवर्त्तिनी आज्ञाविधायिनी । तस्मान्मे मम सम्बन्धित्वेन जीवित प्राणन त्वयि भवति स्थितमित्यवेहि जानीहि त्वमिति सम्बन्ध ।

भारतीय –हे द्रौपदि त्व भवती मा कीचकनामधेय नृप प्रतीच्छ । कथम्भूता सती ? दयात्मा । कथम्भूत माम् ? भक्तियुजम् । पुन इच्छुमिच्छुक निदेशमन्यत्पूर्ववत् ॥२०॥

**सम्भाषणेनापि न मे विषादं विषादभावेन जिहीर्षसि त्वम् ।**
**नाभाषणं कल्पतरोस्तवापि फलान्तरायाय हि कल्पयन्ति ॥२१॥**

सम्भाषणेनेति–हे लक्ष्मण त्व भवान् मे मम विषाद मनोग्लानिं सम्भाषणेन कृत्वा जिहीर्षसि हर्तु-मिच्छसि । नापि विषादभावेन क्रूरपरिणामेन । युक्तमेतत् । हि स्फुट कल्पतरो कल्पवृक्षस्य तव भवत अभाषणमपि न कल्पयन्ति न आमनन्ति विद्वज्जना कस्मै फलान्तरायाय फलविघ्नायेति सम्बन्ध ।

भारतीय –पूर्वार्धे हे द्रौपदि, त्व भवती मे मम कीचकस्येति ज्ञेयम् । अस्योत्तरार्द्धे भवत्या इति बोद्धव्यम् । अर्थवशाद्विभक्तिविपरिणामत्वादिति सम्बन्ध ॥२१॥

**कथां तदीयां स निशम्य भीमः प्रभाव्य सौमित्र्यभिधानरूढः ।**
**राजाग्रजादर्शितकार्यसिद्धिरन्तर्मदोऽन्तःकुपितः करीव ॥२२॥**

कथामिति–स लोकप्रसिद्ध राजा नृप तथा कुपितवान् । कथम् ? अन्त (अन्त ) करणे । कथ-म्भूत ? सौमित्र्यभिधानरूढ सौमित्रिनामप्रसिद्ध लक्ष्मण इत्यर्थं । पुन कथम्भूत ? अन्तर्मद त्रैलोक्यमध्ये न कश्चिन्ममोपरि तिष्ठतितरामिति गर्विष्ठ । पुन ? अग्रजादर्शितकार्यसिद्धि अग्रजस्य रामस्य आदर्शिता

---

हे दयालु लक्ष्मण ! भक्तिपूर्वक सेवामें उपस्थित तथा आजीविका करनेवाली दासीके समान और तुम्हारी आज्ञाको प्रतीक्षामें खड़ी मुझको स्वीकार करो । मैं तुम्हारी अत्यन्त अनुगत दासी हूँ । यही समझो कि मेरा जीवन तुमपर आश्रित है ।

अन्वय–वशवर्तिनी दासी दयात्मा त्व भक्तियुज निदेशमिच्छु मा प्रतीक्ष तव जीविका कृत्यास्मि ।

विराटके यहाँ आज्ञाकारिणी दासी तुम कृपामूर्ति द्रौपदी प्रेमसे प्रेरित और तुम्हारे संकेतकी प्रतीक्षामें खड़े मुझे कृतार्थ करो मैं तुम्हारी दासताका अन्त कर दूँगा क्योंकि मेरा जीवन इस समय तुम्हारे हाथमें है ॥ २० ॥

कुपित अथवा दुःखी होकर तुम ( लक्ष्मण अथवा द्रौपदी ) चार बातें कहकर भी मेरे मनके शोकको दूर नहीं करते (करती) हो [कोई बात नहीं] कल्प वृक्षके समान आपका भी मौन मेरी इच्छित वर-प्राप्तिमें बाधक न होगा [अभाषण (गाली) देनेपर भी कल्पवृक्ष इच्छित फल देते हैं] ॥ २१ ॥

अन्वय–सौमित्र्यभिधानरूढ स तदीया कथा निशम्य भीम राजाग्रज-आदर्शित कार्यसिद्धि अन्तर्मद करीव अन्त कुपित ।

सौमित्र्य (सुमित्राका पुत्र) नामसे ख्यात वह लक्ष्मण सूर्पणखाकी बीभत्स प्रेम-चर्चाको

---

१ श्लेषालङ्कार –प०, द० । २ अर्थान्तरन्यासालङ्कार –प०, द० ।

**आकारमादाय विनीतवेषं शृङ्गारमारोप्य यथाभिजातम् ।**
**कथञ्चिदभ्येत्य कृतावगूढं प्रचक्रमे वक्तुमिति प्रसन्नम् ॥१६॥**

आकारमिति—इति वक्ष्यमाणापेक्षया शूर्पणखा कीचकश्च वक्तु भाषितु प्रचक्रमे प्रारेभे। कथ यथा प्रसन्नम्। किं कृत्वा? पूर्वमभ्येत्यागत्य। कथम्? कथञ्चिन्महता कष्टेन। कथम्? यथा कृतावगूढ किञ्चिल्लोचने चरणौ च बहिः कृत्वा कृतशरीरावरण यथा भवति। किं कृत्वा? पूर्वमारोप्य गृहीत्वा। कम्? शृङ्गारम्। कथम्भूतम्? विनीतवेष विनीतो वेषो यत्र तम्। कथम्? यथाऽभिजातमवसरोचितम्। किं कृत्वा? पूर्वमाकार कोपप्रसादजनितशरीरप्रकृतिमादाय गृहीत्वा ॥१६॥

**जानामि किञ्चिन्त्रपया न वक्तुं विवक्षितं सूचयति व्यवस्था ।**
**सत्यां कियत्यामपि संवृतौ हि दुःखं सुखं वा निगदन्ति चेष्टाः ॥१७॥**

जानामीति—त्रपया लज्जया किञ्चिद्वक्तु न जानामि न वेद्मि विवक्षित वक्तुमिष्ट व्यवस्था दशा कर्त्री सूचयति कथयति। हि स्फुट कियत्यामपि सवृतौ कल्पनाया सत्या सुख दु ख वा कर्म चेष्टा प्रवर्त्तना निगदन्ति कथयन्ति[1] ॥१७॥

**श्रव्याणि वाचालतयैव तन्व्या त्वया मयोक्तानि मनीषितानि ।**
**गवाक्षजालीकृतचेतसो मे स्मरस्य बाणैः शरणं भव त्वम् ॥१८॥**

श्रव्याणीति—तन्व्या कृशाङ्ग्या मया शूर्पणखया वाचालतयैव मुखरतयैव उक्तान्यभिहितानि मनीषितानि अभिलषितानि त्वया लक्ष्मणेन श्रव्याणि अतएव स्मरस्य मदनस्य बाणै गवाक्षजालीकृतचेतस सच्छिद्रीकृतमनस मे त्व शरण भव ॥१८॥

**शार्ङ्गं पिनाकं धनुरिन्द्रचापं दिव्यं वहन्तोऽपि न जेतुमीशाः ।**
**शरासनं पौष्पमयं दधानस्त्रैलोक्यमालीढगतं करोति ॥१९॥**

शार्ङ्गमिति—शार्ङ्गं शृङ्गविकार धनु नारायण, पिनाकम् अपि समन्तात् नाके स्वर्गे भव पिनाक पृषोदरादित्वादाद्यस्य अकारस्य लोप। लोकप्रसिद्ध पिनाक धनुरीश्वर, इन्द्रचाप दिव्य दिवि भव गगनसमुद्भव धनु इन्द्र, एवमेते हरिहरसुरेन्द्रा स्वकीय स्वकीय धनु कर्मभूत वहन्तोऽपि त्रैलोक्य त्रिभुवन कर्म-

---

शिष्ट वेष बनाकर, कुलीनोंके उपयुक्त शृङ्गार करके तथा प्रसन्न मुखादिकी मुद्रा करके अपने वास्तविक रूपको सर्वथा छिपाकर किसी प्रकारसे लक्ष्मण अथवा द्रौपदीके पास पहुँचकर उस सूर्पणखा अथवा कीचकने निम्न प्रकारसे बातें कहनी प्रारम्भ की थीं ॥ १६ ॥

मैं लज्जाके कारण कुछ भी कहना नहीं जानती (ता) हूँ। मेरी शारीरिक दशा ही मेरे भावोंको स्पष्ट कर रही है। कितना भी नेका भगीरथ प्रयत्न करनेपर प्राणीकी चेष्टाएँ उसके सुख अथवा दुःखको प्रकट कर देती हैं ॥ १७ ॥

कामवेदनासे कृश शरीर मुझ सूर्पणखा-द्वारा वाचालता पूर्वक प्रकट किये गये मनके भाव तुम्हें सुनना ही चाहिये। कामदेवके बाणोंने मेरे मनको छलनी बना दिया है अतएव आप मुझे शरण देवें।

पुरुष सुलभ वावदूकता पूर्वक मुझ कीचक-द्वारा कही गयी मनकी बातको कृशांगी तुम्हें ध्यानसे सुनना चाहिये ॥ १८ ॥

लोकोत्तर (शार्ङ्ग) सींगसे बने धनुषका धारी तथा स्वर्गीय इन्द्र धनुषधारी देवेन्द्र भी त्रिलोकको जीतनेमें समर्थ नहीं होते हैं किन्तु यह कामदेव केवल फूलोंसे बने धनुषको ही उठाकर तीनों लोकोंको अपने एकतन्त्रमें लेता है ॥ १९ ॥

१ अर्थान्तरन्यासाऽलंकार—प०, द०।

भूत जेतुमभिभवितु न ईशा न समर्था । अथ स्मर "कर्त्ता" पौष्प पुष्पाणामिद पौष्प कुसुममय शरासन धनु "कर्म" दधान. धरन् त्रैलोक्यमालीढगतम् आलीढ स्थानविशेष तद्गत करोति आलीढमध्यवर्त्ति विदधाति ॥१९॥

**त्वं जीविकाकृत्य निदेशमिच्छुं प्रतीच्छ मां भक्तियुजं दयात्मा ।**
**तवास्मि दासी वशवर्त्तिनी मे त्वयि स्थितं जीवितमित्यवेहि ॥२०॥**

त्वमिति–हे लक्ष्मण त्व भवान् प्रतीच्छ स्वीकुरु । काम् ? माम् । कथम्भूतत्वम् ? दयात्मा कारुण्य-मूर्त्ति । कथम्भूता माम् ? भक्तियुज सेवापरिणताम् । पुन. इच्छुमिच्छन्तीम् । कम् ? निदेशमादेशम् । किं कृत्वा ? पूर्वे जीविकाकृत्य जीविकामिव कृत्वा । कम् ? त्वा भवन्तम् । उत्तरार्द्धे सोपस्कारतया व्याख्यायते–यस्मात्कारणात् तव भवत दासी चेटी अस्मि भवामि । कथम्भूता ? वशवर्त्तिनी आज्ञाविधायिनी । तस्मान्मे मम सम्बन्धित्वेन जीवित प्राणन त्वयि भवति स्थितमित्यवेहि जानीहि त्वमिति सम्बन्ध ।

भारतीय.–हे द्रौपदि त्व भवती मा कीचकनामधेय नृप प्रतीच्छ। कथम्भृता सती ? दयात्मा । कथम्भूत माम् ? भक्तियुजम् । पुन इच्छुमिच्छुक निदेशमन्यत्पूर्ववत्[1] ॥२०॥

**सम्भाषणेनापि न मे विषादं विषादभावेन जिहीर्षसि त्वम् ।**
**नाभाषणं कल्पतरोस्तवापि फलान्तरायाय हि कल्पयन्ति ॥२१॥**

सभाषणेनेति–हे लक्ष्मण त्व भवान् मे मम विषाद मनोग्लानि सम्भाषणेन कृत्वा जिहीर्षसि हर्तु-मिच्छसि । नापि विषादभावेन क्रूरपरिणामेन । युक्तमेतत् । हि स्फुट कल्पतरो कल्पवृक्षस्य तव भवत अभाषणमपि न कल्पयन्ति न आमनन्ति विद्वज्जना कस्मै फलान्तरायाय फलविघ्नायेति सम्बन्ध ।

भारतीय –पूर्वार्धे हे द्रौपदि, त्व भवती मे मम कीचकस्येति ज्ञेयम् । अस्योत्तरार्द्धे भवत्या इति बोद्धव्यम् । अर्थवशाद्विभक्तिविपरिणामत्वादिति सम्बन्ध ॥२१॥

**कथां तदीयां स निशम्य भीमः प्रभाव्य सौमित्र्यभिधानरूढः ।**
**राजाग्रजादर्शितकार्यसिद्धिरन्तर्मदोऽन्तःकुपितः करीव ॥२२॥**

कथामिति–स लोकप्रसिद्ध राजा नृप. तथा कुपितवान् । कथम् ? अन्त (अन्त) करणे । कथ-म्भूत ? सौमित्र्यभिधानरूढ सौमित्रिनामप्रसिद्ध. लक्ष्मण इत्यर्थ. । पुन कथम्भूत. ? अन्तर्मद त्रैलोक्यमध्ये न कश्चिन्ममोपरि तिष्ठतितरामिति गर्विष्ठ. । पुन ? अग्रजादर्शितकार्यसिद्धि' अग्रजस्य रामस्य आदर्शिता

---

हे दयालु लक्ष्मण ! भक्तिपूर्वक सेवामें उपस्थित तथा आजीविका करनेवाली दासीके समान और तुम्हारी आज्ञाकी प्रतीक्षामें खड़ी मुझको स्वीकार करो । मैं तुम्हारी अत्यन्त अनुगत दासी हूँ । यही समझो कि मेरा जीवन तुमपर आश्रित है ।

अन्वय–वशवर्तिनी दासी दयात्मा त्व भक्तियुज निदेशमिच्छुं मा प्रतीक्ष तव जीविका कृत्यास्मि।

विराटके यहाँ आज्ञाकारिणी दासी तुम कृपामूर्ति द्रौपदी प्रेमसे प्रेरित और तुम्हारे संकेतकी प्रतीक्षामें खड़े मुझे कृतार्थ करो मैं तुम्हारी दासताका अन्त कर दूँगा क्योंकि मेरा जीवन इस तुम्हारे हाथमें है ॥ २० ॥

कुपित अथवा दु.खी होकर तुम ( लक्ष्मण अथवा द्रौपदी ) चार बातें कहकर भी मेरे मनके शोकको दूर नहीं करते (करती) हो [कोई बात नहीं] कल्प वृक्षके समान आपका भी मौन मेरी इच्छित वर-प्राप्तिमें बाधक न होगा [अभाषण (गाली) देनेपर भी कल्पवृक्ष इच्छित फल देते हैं] ॥ २१ ॥

अन्वय–सौमित्र्यभिधानरूढ स तदीया कथा निशम्य भीम राजाग्रज-आदर्शित कार्यसिद्धि' अन्तर्मद करीव अन्त कुपित ।

सौमित्र्य (सुमित्राका पुत्र) नामसे ख्यात वह लक्ष्मण सूर्पणखाकी वीभत्स प्रेम-चर्चाको

---

१ श्लेषालङ्कार –प०, द० । २ अर्थान्तरन्यासालङ्कार –प०, द० ।

कार्यसिद्धिर्येन स तथोक्तः। पुनः भीमः भयोत्पादकः। किं कृत्वा ? पूर्वं प्रभाव्य पर्यालोच्य। पुनः कथा वार्ता निशम्य श्रुत्वा। कथम्भूता कथाम् ? तदीया शूर्पणखीयाम्। उपमार्थं प्रदर्श्यते करीव। इव यथार्थे। यथा करी हस्ती कुप्यति। कथम् ? अन्तः। कथम्भूतः ? अन्तर्मदः बहुमूत्रस्रवणादिमान्। पुनः राजाग्रजादर्शितकार्यसिद्धिः राज्ञोऽग्रजः राजाग्रजः राजपट्टयोग्य' आदर्शिता कार्यसिद्धिर्येन स आदर्शितकार्यसिद्धि' प्रकटितशत्रुजयप्राप्तिः राजाग्रजश्चासौ आदर्शितकार्यसिद्धिश्च राजाग्रजादर्शितकार्यसिद्धि'। पुनः भीम' रौद्र' सन्। पुनः सौमित्र्यभिधानरूढ. शोभन मित्र यस्य स. सुमित्र. तस्य भाव. सौमित्री सौमित्र्येवाभिधान सौमित्र्यभिधान तस्मिन् रूढ. अव्यभिचारितया वीरसन्तर्जनसहाय इत्यर्थः। किं कृत्वा ? पूर्वं प्रभाव्य समर्थो भूत्वा। पुनस्तदीया हस्तिसबन्धित्वेन लोकप्रसिद्धः स. महामात्रक. तस्येमा तदीया यन्तृसम्बन्धिनीं शिक्षालापादिलक्षणा कथा सङ्केत निशम्याकर्ण्य।

भारतीयः—स लोकविख्यातः राजा भीम द्वितीयपाण्डवो भीमसेन. कुपितः। किं कृत्वा ? पूर्व तदीया कीचकसम्बन्धिनी कथा निशम्य। कथम्भूतो भीम. ? प्रभावी माहात्म्यवान् प्रतापी च। पुन मित्र्यभिधानरूढः मित्रमस्यास्तीति मित्रि मित्रि च तदभिधानश्च मित्र्यभिधान रूढ यस्य स मित्र्यभिधानरूढ. मैत्रीं प्राप्त इत्यर्थ.। क्व असौ कृपाणे। पुनः कथम्भूतः ? अग्रजस्य युधिष्ठिरस्य आदर्शितकार्यसिद्धिरित्यभिप्रायो धनञ्जयस्य कवेः। अथवा राज्ञो युधिष्ठिरस्य परेषा राज्ञा वाऽग्रजा भाविनी आदर्शिता कार्यसिद्धिर्येन स तथोक्त इति विशेषो नेमिचन्द्रमुनेः। पुनरन्तर्मदोऽहङ्कारी। अत्र करीवोपमार्थः पूर्वोपन्यासोपक्षिप्तः पूर्ववद्बोद्धव्य इति सम्बन्धः। श्लेषोपमा ॥ २२ ॥

**अभ्येत्य निर्भर्त्स्य जगाद वाचं स्त्रीत्वं परागच्छ न वध्यवृत्तिः।**
**प्रेङ्खोलिताङ्गं रसनाकरेण मृत्योर्द्विजान्दोलनमिच्छसीव ॥२३॥**

अभ्येत्येति—स लक्ष्मणः वाच वचन जगाद उक्तवान्। कि कृत्वा ? पूर्वं निर्भर्त्स्य सन्तर्ज्य। किं कृत्वा ? पूर्वमभ्येत्य सम्मुखीभूय। सोपस्करतया व्याक्रियते कस्मात्कारणात् परा परकीया भार्या। अतः कारणात् गच्छ याहि। तथा सति न जायसे त्वम्। कथ भूता ? वध्यवृत्ति मारणयोग्येत्यर्थ। यत इच्छसीव वाञ्छसीव त्वम्। किम् ? द्विजान्दोलन 'दन्तोत्पाटनम्। कस्य मृत्योर्यमस्य। कथम्भूतम् ? प्रेङ्खोलिताङ्ग प्रेङ्खोलित दोलितमङ्ग यत्र तत् दोलायितशरीरम्। केन कृत्वा ? रसनाकरेण जिह्वाहस्तेनेति सम्बन्ध'।

---

सुनकर रुद्र हो गया था तथा राजा बड़े भाई (राम) की सेवा तथा सफलता ही एकमात्र आदर्श होनेके कारण स्वाभाविक मनस्वी वह हाथीके समान वास्तवमें कुपित हो उठा था।

अन्वय—अन्तर्मद, राजाग्रजादर्शितकार्यसिद्धि, भीम करी तदीया संकथा निशम्य प्रभाव्य सौमित्र्यभिधानरूढ इव अन्त कुपित।

मदावस्थाको प्राप्त अतएव भयंकर तथापि राजाकी सेनाके आगे-आगे चलनेवाला तथा विजय और सफलताका प्रतीक हाथी हस्तिपकके (व्यर्थ) उपदेशको सुनकर तथा उसपर विचार करके लक्ष्मणके समान मन ही मन रुष्ट हो गया था।

अन्वय—अन्तर्मद, प्रभावी, असौ मित्र्यभिधानरूढ, राजाग्रजादर्शितकार्य-सिद्धि स भीम. तदीयां कथा निशम्य करीव अन्त कुपित।

स्वभावसे ही अहंकारी, अत्यन्त प्रभावशाली, खड्गसे प्रीतिके लिए आख्यात अर्थात् गदा-चालक ज्येष्ठ भ्राता राजा युधिष्ठिर अथवा भविष्यमें होनेवाले न्यायी राजाओंकी सफलताको ही आदर्श माननेवाला वह भीम कीचकके नीच प्रस्तावको सुनकर उन्मत्त हाथीके समान क्रोधसे जल उठा था ॥ २२ ॥

अन्वय—अभ्येत्य, निर्भर्त्स्य वाच जगाद, त्वं परा-स्त्री, गच्छ, न वध्य-वृत्ति रसनाकरेण प्रेङ्खोलिताङ्गं मृत्यो द्विजान्दोलनम् इच्छसि।

सूर्पणखाकी ओर मुड़ते हुए लक्ष्मणने भर्त्सनाके साथ कहा था—परायी स्त्री हो इसलिए " जाओ। तुम स्त्री हो इसीलिए तुम्हें मारता नहीं हूँ, यद्यपि तुमने जिह्वारूपी हाथके द्वारा मौतके शरीरको हिलाकर उसके दांत तोड़ते ऐसी मूर्खता की है।

भारतीय.–स भीमः वाच जगाद। किं कृत्वा ? पूर्वं निर्भर्त्स्य। पुनरभ्येत्य। रे पर हे शत्रो रे कीचक आगच्छ किम् ? स्त्रीत्व स्त्रीस्वरूप तेन स्त्रीत्वेन न वध्यवृत्ति। रसनाकरेण कृत्वा प्रेङ्खोलिताग्र मृत्यो. सम्बन्धित्वेन द्विजान्दोलनमिच्छसीवेति सम्बन्ध ॥२३॥

**स्वजीविते निर्विजसे यदि त्वं विशानलं वा गिल कालकूटम्।**
**तेनाहतेयं महिलेति मे मा कृथा जनोदाहरणं दुरन्तम् ॥२४॥**

स्वजीवित इति–यदि निर्विजसे निर्विण्णा जायसे त्वम्। क्व ? स्वजीविते। तदा विश प्रविश। कम् ? अनलमग्निं वा। अथवा कालकूट विष गिल खाद। मा माकृथा मा कुरु त्वम्। किम् ? जनोदाहरण लोकदृष्टान्तम्। कीदृशम् ? दुरन्त दुर्निवार्यम्। कस्य ? मे मम। कथमिति ? तेन लक्ष्मणेन तेन भीमेन च आहता इय महिला स्त्रीति सम्बन्ध। स्वभावाख्यानमिदम् ॥२४॥

**आशङ्कसे चेत्परिभावमर्य्यस्तवास्ति यद्यानय तं वलिष्ठम्।**
**अतो मुखेनाहितवान्पदं स्यान् महारथः साहसिकः स एव ॥२५॥**

आशङ्कस इति–चेद्यदि आशङ्कसे मन्यसे त्वम्। कम् ? परिभावम्। यदि तव अर्य स्वामी अस्ति विद्यते तदा त वलिष्ठमर्यमानय त्वम्। युक्तमेतत्। अत' कारणाद्य आहितवानारोपितवान्। किम् ? पद पदवीम्। केन कृत्वा ? मुखेन वदनेन। स महारथ' सत्पुरुष' साहसिक एव धैर्यवानेव स्यादिति सम्बन्ध.। अर्थान्तरन्यासालङ्कार' ॥२५॥

**महीं समूहन्तमिवाक्षिपन्तं ब्रध्नं प्रतापाग्निमिवोद्गिरन्तम्।**
**ब्रुवाणमाक्षिप्य गिरं तथाऽसौ निर्घातपातोपहतं जगर्ज ॥२६॥**

महीमिति–स्व स्वकथापेक्षया यथा लक्ष्मणभीमौ भाषितवन्तौ तेनैव प्रकारेण रामायणीयभारतीय-कथापेक्षया असौ शूर्पणखा कीचकश्च जगर्ज गर्जितवती गर्जितवांश्च। कथम् ? यथा भवति। निर्घातपातोपहत विद्युल्लतापातसमर्दितम्। किं कृत्वा ? पूर्वमाक्षिप्य दुर्वचनशस्त्रैर्निहत्य। कम् ? लक्ष्मण भीमञ्च। कथम्भूतम् ? गिर वाणीं ब्रुवाण भाषमाणम्। किं कुर्वाणमिव ? महीं पृथ्वी समूहन्तमिव गिलन्तमिव, ब्रध्न सूर्यमाक्षि-पन्तमिव उल्लिखन्तमिव प्रतापाग्नि वीरविपक्षभयोत्पादनवार्त्तादहनमुद्गिरन्तमिव। उक्तञ्च—"प्रतापो यस्य वार्त्ताऽपि राज्ञा स्याद्भयकारिणी" इति सम्बन्ध। उत्प्रेक्षालङ्कार ॥२६॥

---

कीचकके पास जाकर गर्जते हुए भीमने कहा था–दूसरेकी पत्नीके पास कुभावसे जाकर भी तुम अपनेको अवध्य समझते हो। अरे मूर्ख, यमके शरीरको झकझोर करके जिह्वा-रूपी हाथसे उसके दाँत उखाड़ने-ऐसी नीचता क्यों करता है ॥ २३ ॥

यदि तुम्हें अपने जीवनसे घृणा हो गयी है तो आगमें जल मरो या कालकूट विषका पान कर लो। उस लक्ष्मण अथवा भीमने एक स्त्रीको भी मार डाला था ऐसा निन्दनीय मेरा उदाहरण भविष्यके लिए मत होने दो ॥२४॥

यदि इसमें अपना अपमान समझते हो और तुम्हारा स्वामी कोई है तो उसी बलवान-को बुला लाओ। क्योंकि जिसने अपने वचनों-द्वारा तुम्हें किसी पदपर बैठाया है उसी महा-रथी और साहसीसे निपट लिया जायगा ॥२५॥

पृथ्वीको निगलते हुए-से, सूर्यको आकाशसे नोचकर फेंकते से, प्रतापकी अग्निको उगलते हुए-से और पूर्वोक्त प्रकारसे बोलते हुए लक्ष्मण अथवा भीमकी बातको काटती हुई सूर्पणखा अथवा कीचक ऐसे जोरसे बोला था जैसे बिजली ऊपर गिरनेपर कोई चिंघाड़ता है ॥२६॥

---

१. अत्रोत्प्रेक्षाऽलङ्कार –प०, द०।

**काष्ठां गिलन्तीव भुवं वियच्च भित्वा व्रजन्तीव मनो जनानाम् ।**
**विदारयन्तीव वचांस्यवोचत् सामान्यवृत्तिः स महानियोगात् ॥ २७ ॥**

काष्ठामिति–सा रावणस्वसा वचास्यवोचत् । कथम्भूता ? अमान्यवृत्तिः न मान्या वृत्तिर्यस्या असौ निन्द्याचारेति । कस्मात् ? समहानियोगात् शम्बुकुमारविरहो लक्ष्मणसम्भोगवैयर्थ्यमिति युगपद्धानिसम्बन्धात् । किं कुर्वाणेव ? काष्ठा दिश गिलन्तीव व्रजन्तीव । गच्छन्तीव । किं कृत्वा ? पूर्वं भित्वा विदार्य । काम् ? भुव पृथ्वी वियच्च गगनञ्च । पुनः जनाना मनः विदारयन्तीव ।

भारतीयः–स कीचक' वचास्यवोचत् । कथम्भूतः ? सामान्यवृत्तिः साम्नोऽन्यो दण्डः तस्मिन् वृत्तिः वर्त्तन यस्य सः । कस्मात् ? महानियोगात् गुरुतरनिबन्धात् । किं कुर्वन्तीव वचासि ? काष्ठा गिलन्तीवेत्यादि द्वितीयाबहुवचनान्तानि वचासीत्यस्य विशेषणानि समानार्थानि प्राग्वत्[1] ॥ २७ ॥

**नापत्यघातं प्रतियुज्य वाचा बहुप्रलापिन्नपयाति जीवन् ।**
**भवानभिज्ञः खरदूषणस्य नाद्यापि युद्धेषु पराक्रमस्य ॥ २८ ॥**

नेति– हे बहुप्रलापिन् लक्ष्मण जीवन्नापयाति नापसरति । कया ? वाचा वचनेन । किं कृत्वा ? पूर्वं प्रतियुज्य प्रविधाय । कम् ? अपत्यघात पुत्रवधम् । यतोऽद्यापि साम्प्रतमपि अभिज्ञो न कुशलो न भवति भवान् । केषु खरदूषणस्य युद्धेषु रणेषु । खरदूषण समाहारापेक्षयैकत्वम् । कथम्भूतस्य ? पराक्रमस्य परान्, शत्रून् आक्रमतीति पराक्रमः तस्य ।

भारतीयः–हे बहुप्रलापिन् हे भीम वाचा कृत्वा जीवन्नापयाति । कि कृत्वा ? पूर्वं प्रतियुज्य सम्बध्य । कम् ? घात वधम् । किं कृत्वा ? पूर्वमापत्यागत्य । यस्मात्कारणात् अद्यापि नाभिज्ञ. न प्रगल्भ. ।

---

**अन्वय—अमान्यवृत्ति. 'काष्ठा गिलन्तीव, भुवं वियच्च भित्वा व्रजन्तीव जनानां मनो विदारयन्तीव सा समहानियोगात् वचांसि अवोचत् ।**

**निन्दनीय आचरणमें लीन वह सूर्पणखा दिशाओंको निगलती हुई के समान, पृथ्वी और आकाशको नष्ट करके भागती हुई के तुल्य तथा लोकोंके मनोंको फाड़ती हुई सी एक ही साथ दो-दो (पुत्र-मरण, प्रिय-द्वारा तिरस्कार) हानि होनेके कारण लक्ष्मणसे बोली थी ।**

**अन्वय—सामान्यवृत्ति स महानियोगात्. . ।**

**राजाके द्वारा भी दण्डनीय आचरणशील वह कीचक अत्यन्त आसक्त होनेके कारण दिशाओंमें व्याप्त, पृथ्वी और आकाशको एकमेक करनेवाले तथा लोकोंके हृदयोंको दहलाते बोला था ॥२७॥**

**अन्वय—बहुप्रलापिन् अपत्यघात प्रतियुज्य वाचा जीवन् नापयाति । युद्धेषु अद्यापि पराक्रमस्य खरदूषणस्य भवान् अभिज्ञ. न ।**

**अरे बहुत बोलनेवाले लक्ष्मण ! मेरे पुत्र शम्बुकुमारको मारकर केवल बातें बनाकर ही जीवित वापस न जा सकोगे । युद्धोंमें आज भी शत्रुओंपर टूटनेवाले खरदूषणको आप जानते नहीं हैं !**

**अन्वय—बहुप्रलापिन् ! आपत्य वाचा घातं प्रतियुज्य जीवन् न अपयाति भवान् अद्यापि युद्धेषु खरदूषणस्य अभिज्ञ न ।**

**अरे व्यर्थ ही बड़बड़ानेवाले ! अकस्मात् आकर कोलाहल-द्वारा मेरे इष्ट कार्यमें बाधा डालकर जीवित वापस नहीं जा सकते हो । आज भी आप नहीं जानते हैं कि**

१. श्लेषाऽलङ्कार –प०, द० ।

केषु ? युद्धेषु । कस्य ? पराक्रमस्य पौरुषस्य । कथम्भूतस्य ? खरदूषणस्य खर दूषण यस्मात् यस्मिन्वा तस्य तथोक्तस्य तीव्रापराधस्येत्यर्थ । श्लेषालङ्कार ॥ २८ ॥

**वैरायते मे मतिरस्ति शक्तिरागच्छ सम्पादय सम्परायम् ।**
**वेत्सि प्रतापं रिपुवंशदावं कथं न मत्तो दशकन्धरोत्थम् ॥ २९ ॥**

वैरायत इति– हे लक्ष्मण मे मम मतिर्बुद्धि. वैरायते वैर करोति । यदि शक्तिर्बलमस्ति तदागच्छ एहि सम्पराय युद्ध सम्पादय देहि । मत्त सन् दशकन्धरोत्थ दश कन्धरा ग्रीवा यस्य तस्माद् रावणादुत्थ प्रताप पौरुष कथ न वेत्सि न जानासि । कथम्भूत रावणीयप्रतापम् ? रिपुवंशदाव विपक्षान्वयदावानलम् ।

भारतीय –हे भीम मे मम मतिर्वैरायते । शक्तिरस्ति चेत् आगच्छ । मत्त मत्सकाशात् सम्पराय सम्पादय । प्रताप कथ न वेत्सि । कथम्भूत प्रतापम् ? रिपुवशदाव रिपु वश घ्नन्ति छिन्दन्ति रिपुवशदाः शत्रुकुलोच्छेदका पुरुषास्तान् अवति रक्षतीति रिपुवशदावस्तम् । पुन. दशक दश अवयवा यस्य त दशकम् । पुन. धराया उत्था उत्थान यस्मादसौ धरोत्थस्त धरोत्थ धरोद्धरणसमर्थमित्यर्थ. । दशकलक्षणम्–

"सत्यं शौचं तथा शौर्यं स्थैर्यं धैर्यं सुधी(धी)रता ।
क्षमा गम्भीरता चैव नैष्ठुर्यं चापि मन्त्रिता ॥
एतैरवयवैर्युक्तो विजिगीषु[1]र्महीपत्ति ।
प्रतापेन[2] विपक्षाणा दुर्निवार्यो भवेद्ध्रुवम् ॥"

श्लेषालङ्कार. ॥ २९ ॥

**इतीरयित्वाऽहितकम्पवेगं दष्टाधरं स्फारितरक्तनेत्रम् ।**
**भ्रूभङ्गजिह्मं कृतसिंहनादं जग्राह कायं भरतान्वयस्य ॥ ३० ॥**

इतीति–असौ शूर्पणखा काय शरीर जग्राह गृहीतवती । कस्य ? भरतान्वयस्य लक्ष्मणस्येत्यर्थ । किं कृत्वा ? पूर्वमित्युक्तप्रकारेण ईरयित्वा अभिधाय । कथम्भूत कायम् ? आहितकम्पवेगमारोपितकम्पवेगम् । पुन दष्टाधर चर्वितोष्ठम् । पुन स्फारितरक्तनेत्र प्रसारितारुणलोचनम् । पुनः भ्रूभङ्गजिह्म भ्रूभङ्गमन्दम् । पुन कृतसिंहनाद वितीर्णपञ्चाननध्वनिम् ।

---

युद्धोंमें किस प्रकार दूसरेपर आक्रमण किया जाता है और किस प्रकार उसकी सब सामग्रीको दूषित किया जाता है ॥२८॥

अन्वय—मे मति ते वैराय, शक्तिरस्ति आगच्छ 'सम्पराय सम्पादय रिपुवंशदावं दशकन्धरोत्थं प्रताप मत्त कथ न वेत्सि ।

तुम्हारी शत्रुता करनेका ही मेरा संकल्प है। यदि बल है तो आगे बढ़ो और युद्ध करो। शत्रुओंके कुलोंको जलानेवाले दशाननके प्रतापको अहंकारी तुम क्या नहीं जानते हो ?

अन्वय—मे मति वैरायते, शक्तिरस्ति सम्पराय सम्पादय । रिपुवंशद आवं दशक धरोत्थ प्रताप मत्त कथ न वेत्सि ।

हे भीम ! मेरे प्रति तुम्हारे मनमें वैर हो गया है। यदि बल हो तो मेरे अभीष्टमें बाधा डालो। शत्रुओंके कुलोंके भञ्जकोंके संरक्षक, सत्य,शौच, आदि दश अङ्गों युक्त तथा पृथ्वीको पालनेमें समर्थ पुरुषार्थको क्या मुझसे नहीं सीखोगे ? ॥२९॥

उक्त प्रकारके कटु शब्द कहकर क्रोधसे कांपती (ता), ओठोंको चबाती (ता), लाल-लाल आखोंको नटेरती (ता), भ्रकुटि टेढ़ी करनेके कारण अत्यन्त डरावनी (ना) तथा सिंहके

---

१ जिगीषो पृथ्वीपते –द० । २ प्रतापो हि–द० ।

भारतीयः–असौ कीचकः काय जग्राह। कस्य ? भरतान्वयस्य भरतस्य चक्रवर्त्तिनोऽन्वयो यस्य तस्य सोमवशस्य भीमस्येत्यर्थः। किं कृत्वा ? पूर्वमित्युक्तप्रकारेण ईरयित्वा। आहितकम्पवेगमित्यादीनि क्रियापद-विशेषणानि बोद्धव्यानि[1] ॥ ३० ॥

**चकम्पिरे किंपुरुषा भयेन दिशां विनेशुर्न । गजाश्च ।**
**मर्मप्रहारैः परुषैर्वचोभिस्तयोरभूत्तत्र महान्विमर्दः ॥३१॥**

चकम्पिर इति–किंपुरुषाः देवविशेषाः चकम्पिरे कम्पिताः। (केन) भयेन। नगजाः पर्वतजाताः गजाः हस्तिनः विनेशुः विनष्टाः। नकारेण समुच्चयो गृह्यते, तेनायमर्थ दिशा सम्बन्धित्वेन गजाश्च विनष्टाः। तयोः लक्ष्मणशूर्पणखयोः–परुषैः कठिनैः वचोभिर्महान् विमर्दो युद्धमभूत्। क्व ? तत्र दण्डकारण्ये। कथ-भूतैः ? मर्मप्रहारैः मर्मघातैः।

भारतीयः—भयेन किम् पुरुषाः युधिष्ठिरादयः चकम्पिरे अपि तु न। मर्मप्रहारैः कृत्वा, दिशा गजा नगजा गजाश्च कि विनेशुः ? अपि तु न। कैः तयोः कीचकभीमयोर्वचोभिः। तत्र विराटभूमौ। महान् विमर्दोऽभूदिति सम्बन्धः[2] ॥३१॥

**असंस्तुतं प्राप्य ततो निकारं भीमेन तेनोपहतात्मवृत्तिः।**
**देशादयासीन्नियमेन कर्त्तुं क्षणादसौ विग्रहपीडितानि ॥३२॥**

असस्तुतमिति। असौ रावणभगिनी अयासीत् गतवती। कस्मात् ? देशात् दण्डकारण्यप्रदेशात्। किं कर्तुम् ? कर्तुं विधातुम्। कानि ? विग्रहपीडितानि युद्धमर्दनानि। कथम् ? क्षणात् अन्तर्मुहूर्त्तात्। केन-कृत्वा ? नियमेन निश्चयेन। कथभूता सती ? उपहतात्मवृत्ति उपहतस्वप्रवर्तना। केन कृत्वा ? तेन लक्ष्मणेन। कथम्भूतेन ? भीमेन भयङ्करेण। किं कृत्वा ? पूर्वं प्राप्य। कम् ? निकार पराभवम्। कथम्भूतम् ? असस्तुतम् अपरिचितम्। कस्याः ? ततः तस्याः शूर्पणखायाः सकाशादिति सम्बन्धः।

---

समान गर्जती (ता) उस सूर्पणखा अथवा कीचकने भरतके वंशमें उत्पन्न लक्ष्मण अथवा भीमके शरीरको बलपूर्वक पकड़ लिया था ॥३०॥

किंपुरुष आदि व्यन्तर देव डरसे काँप उठे थे, दशो दिशाओंके पार्वतीय विशाल हाथी भी भाग चले थे तथा उस सूर्पणखा और लक्ष्मणका हृदयको छेदनेवाले कठोर शब्दों-द्वारा महान् वाक्‌युद्ध हुआ था।

लोकोत्तर पुरुष युधिष्ठिर आदि उक्त बातको सुनकर आश्चर्यसे क्या काँप उठे थे ? अर्थात् नहीं काँपे थे। क्योंकि कितने ही मर्मभेदी आघात किये जानेपर दिग्गजोंके समान उत्तम पार्वतीय हाथी पलायन नहीं करते हैं। इस प्रकार विराट् भूमिमें कीचक और भीमका कठोर और लम्बा संघर्ष हुआ था ॥३१॥

अन्वय—भीमेन तेनोपहतात्मवृत्ति तत असंस्तुत निकारं प्राप्य असौ क्षणात् नियमेन विग्रह-पीडितानि कर्त्तुं देशात् अयासीत्।

अत्यन्त उग्र लक्ष्मणके द्वारा मनोरथ विफल कर दिये जानेके बाद अत्यन्त निन्दनीय रूपसे अपमानित की गयी वह सूर्पणखा तुरन्त ही, युद्धके द्वारा इसे निश्चित रूपसे सर्वथा कष्ट देनेके संकल्पपूर्वक दण्डक वनसे चली गयी थी।

अन्वय—तत असंस्तुतं निकारं प्राप्य तेन भीमेन उपहतात्मवृत्तिः असौ क्षणात् नियमेन विग्रह-पीडितानि कर्त्तुं देशात् अयासीत्।

---

१. श्लेषाऽलङ्कार –प., द०। २ श्लेषाऽलङ्कार.–प०, द०।

अधुना भारतीय' पक्ष'—असौ कीचक. देशात् विराटविषयात् अयासीत् गतवान्। किं कर्तुम्? कर्तुम्। कानि? विग्रहपीडितानि शरीरकदर्थनानि। केन कृत्वा? नियमेन तपसा। कथम्? क्षणात्। कथम्भूतोऽयासीत् कीचक? उपहतात्मवृत्ति। केन? कर्त्रा भीमेन वृकोदरेण। किं कृत्वा? पूर्वं प्राप्य। कम्? निकार परिभवम्। कथम्भूतम्? असस्तुतम्। कस्मात्? तत' कीचकादिति सम्बन्ध'। श्लेषालङ्कार।

**तथावधूतोऽपकृतिं गतोऽपि जित्वा रुषं संयममेत्य राजा।**
**स वैरसन्देहमयं विहाय न्यायानुवृत्तिं पदवीं प्रपेदे ॥३३॥**

तथेति—तथा तेनैव प्रकारेण सोऽय राजा लक्ष्मण न्यायानुवृत्ति नीत्यनुयायिनी पदवीं मार्गं प्रपेदे प्राप्तवान्। किं कृत्वा? वैरसन्देह वैरसशय विहाय परित्यज्य। किं कृत्वा? पूर्वं सयममेत्य प्राप्य। पुन किं कृत्वा? रुष क्रोध जित्वा उपगम्य। कथम्भूत सन्? वधूत शूर्पणख्या (खाया) सकाशात्, पुन अपकृतिमपकार गतोऽपि।

भारतीय—तथाऽवधूत. जटाजूटधारी लिङ्गी भूत्वा। किं कृत्वा? पूर्वमेत्य प्राप्य। कम्? सयम तपश्चरणम्। किं कृत्वा? रुष जित्वा। स कीचक राजा न्यायानुवृत्ति पदवीं प्रपेदे प्राप्तवान्। किं कृत्वा? देहमय शरीरहेतुं रस दुग्धदधिघृतादि विहाय विमुच्य। कथम्? वै स्फुटम्। कथम्भूत कीचक? अपकृतिं गतोऽपि ॥३३॥

**स्वजानि कार्याणि निरूप्य हत्यां बलीयसस्तस्य च कौरवेण।**
**जिहीर्षता मानधनं बलेन सम्प्रेरितेनाभ्युदितं खरेण ॥ ३४ ॥**

स्वजानीति—बलेन सैन्येनाभ्युदित प्रस्तुतम्। कथम्भूतेन खरेण दूषणज्येष्ठभ्राता सम्प्रेरितेन। किं विशिष्टेन? कौ पृथिव्या रवेण नादेन मानधनमभिमानधन जिहीर्षता हर्तुमिच्छता। किं कृत्वा? पूर्वं स्वजानिकार्याण्यात्मीयभार्याकृत्यानि निरूप्य निवेद्य। कस्या सत्याम्? तस्य प्रसिद्धस्य शम्बुकुमारस्य हत्या वधे सति। कथम्भूतस्य तस्य? बलीयस बलिष्ठस्य।

---

उक्त प्रकारसे कीचकके द्वारा अवमानित किये जानेपर उस भयंकर भीमने कीचकके प्राण ही संकटमें डाल दिये थे। फलतः उसने एक क्षणभरमें ही तपस्या-द्वारा अपने शरीरको कष्ट देनेकी प्रतिज्ञा करके विराट देशको ही त्याग दिया था ॥३२॥

अन्वय—तथा वधूतोऽप्रकृति गतोऽपि सोऽय राजा रुष जित्वा सयम एत्य वैरसदेह विहाय न्यायानुवृत्तिं पदवीं प्रपेदे।

उक्त प्रकारकी पुंश्चली वधूसे विराधना किये जानेपर भी इस राजा लक्ष्मणने क्रोधको वशमें किया था, संयमसे काम किया था और शत्रुता तथा सन्देहको त्यागकर नीतिमार्गके अनुसार आचरण किया था।

अन्वय—तथा अपकृतिं गतोऽपि स अवधूत राजा रुष जित्वा संयम एत्य, देहमय रसं वै विहाय ।

उक्त प्रकारसे भीमके द्वारा अपकार किये जानेपर भी उस संन्यासी राजा कीचकने क्रोधको जीतकर संयम धारण किया था तथा देहकी पुष्टि और स्थितिके निमित्त दुग्ध, घी, आदि रसोंको भी त्यागकर धर्मशास्त्रानुकूल रसपरित्यागादि तपोंके आचरणमें लग गया था ॥३३॥

अन्वय—स्व-जानि-कार्याणि बलीयस तस्य हत्या च निरूप्य रवेण कौ मानधन जिहीर्षता खरेण सम्प्रेरितेन बलेन अभ्युदितम्।

अपनी पत्नी पर बीती घटनाओं तथा अत्यन्त बलवान् उस शम्बुकुमारकी हत्याको जानकर आक्रमणके लिए आह्वत सेनाके द्वारा समस्त पृथ्वीपर घोषणापूर्वक सबके स्वाभिमान रूपी धनके अपहरणके लिए उद्यत वह खर तमतमा उठा था।

भारतीयः—असौ कीचकः काय जग्राह । कस्य ? भरतान्वयस्य भरतस्य चक्रवर्त्तिनोऽन्वयो यस्य तस्य सोमवशस्य भीमस्येत्यर्थः । किं कृत्वा ? पूर्वमित्युक्तप्रकारेण ईरयित्वा । आहितकम्पवेगमित्यादीनि क्रियापद-विशेषणानि वोद्धव्यानि[1] ॥ ३० ॥

**चकम्पिरे किंपुरुषा भयेन दिशां विनेशुर्नगजा गजाश्च ।**
**मर्मप्रहारैः परुषैर्वचोभिस्तयोरभूत्तत्र महान्विमर्दः ॥३१॥**

चकम्पिर इति—किपुरुषाः देवविशेषाः चकम्पिरे कम्पिताः । (केन) भयेन । नगजा. पर्वतजाता. गजाः हस्तिनः विनेशु विनष्टा' । नकारेण समुच्चयो गृह्यते, तेनायमर्थ दिशा सम्बन्धित्वेन गजाश्च विनष्टा. । तयोः लक्ष्मणशूर्पणखयोः—परुषैः कठिनै. वचोभिर्महान् विमर्दो युद्धमभूत् । क ? तत्र दण्डकारण्ये । कथ-भूतैः ? मर्मप्रहारैः मर्मघातै' ।

भारतीयः—भयेन किम् पुरुषा. युधिष्ठिरादयः चकम्पिरे अपि तु न । मर्मप्रहारै. कृत्वा, दिशा गजा नगजा गजाश्च कि विनेशु. ? अपि तु न । कै. तयोः कीचकभीमयोर्वचोभि. । तत्र विराटभूमौ । महान् विमर्दोऽभूदिति सम्बन्ध[2] ॥३१॥

**असंस्तुतं प्राप्य ततो निकारं भीमेन तेनोपहतात्मवृत्तिः ।**
**देशादयासीन्नियमेन कर्त्तुं क्षणादसौ विग्रहपीडितानि ॥३२॥**

असस्तुतमिति । असौ रावणभगिनी अयासीत् गतवती । कस्मात् ? देशात् दण्डकारण्यप्रदेशात् । किं कर्तुम् ? कर्तुं विधातुम् । कानि ? विग्रहपीडितानि युद्धमर्दनानि । कथम् ? क्षणात् अन्तर्मुहूर्त्तात् । केन-कृत्वा ? नियमेन निश्चयेन । कथभूता सती ? उपहतात्मवृत्तिः उपहतस्वप्रवर्तना । केन कृत्वा ? तेन लक्ष्मणेन । कथम्भूतेन ? भीमेन भयङ्करेण । किं कृत्वा ? पूर्वं प्राप्य । कम् ? निकार पराभवम् । कथम्भूतम् ? असस्तुतम् अपरिचितम् । कस्याः ? तत. तस्याः शूर्पणखायाः सकाशादिति सम्बन्ध. ।

---

**ान गर्जती (ता) उस सूर्पणखा अथवा कीचकने भरतके वंशमें उत्पन्न लक्ष्मण अथवा भीमके शरीरको बलपूर्वक . लिया था ॥३०॥**

**आदि व्यन्तर देव डरसे ˘ उठे थे, दशों दिशाओंके पार्वतीय विशाल हाथी भी चले थे उस सूर्पणखा और लक्ष्मणका हृदयको छेदनेवाले कठोर शब्दों-द्वारा ˎ हुआ था ।**

**लोकोत्तर पुरुष युधिष्ठिर आदि को सुनकर आश्चर्यसे क्या कॉप उठे थे ? अर्थात् नहीं पे थे । क्योंकि कितने ही मर्मभेदी त किये जानेपर दिग्गजोंके उत्तम पार्वतीय नहीं करते हैं । र विराट् भूमिमें कीचक और भीमका कठोर और संघर्ष हुआ था ॥३१॥**

**अन्वय— तेनोपहतात्मवृत्ति ततः असंस्तुतं निकारं प्राप्य असौ क्षणात् नियमेन विग्रह-पीडितानि कर्त्तुं देशात् अयासीत् ।**

**लक्ष्मणके मनोरथ दिये जानेके बाद अत्यन्त निन्दनीय रूपसे अपमानित सूर्पणखा ; युद्धके . इसे निश्चित रूपसे सर्वथा कष्ट देनेके संकल्पपूर्वक ।**

**: . असौ नियमेन विग्रह-पीडितानि कर्त्तुं देशात् ।**

---

1. श्लेषा

अधुना भारतीय' पक्ष'—असौ कीचकः देशात् विराटविपयात् अयासीत् गतवान्। किं कर्तुम् ? कर्त्तुम्। कानि ? विग्रहपीडितानि शरीरकदर्थनानि। केन कृत्वा ? नियमेन तपसा। कथम् ? क्षणात्। कथम्भूतोऽयासीत् कीचक ? उपहतात्मवृत्ति। केन ? कर्त्रा भीमेन वृकोदरेण। किं कृत्वा ? पूर्वं प्राप्य। कम् ? निकार परिभवम्। कथम्भूतम् ? असस्तुतम्। कस्मात् ? तत कीचकादिति सम्बन्ध। श्लेषालङ्कार।

**तथावधूतोऽपकृतिं गतोऽपि जित्वा रुषं संयममेत्य राजा।**
**स वैरसन्देहमयं विहाय न्यायानुवृत्तिं पदवीं प्रपेदे ॥३३॥**

तथेति—तथा तेनैव प्रकारेण सोऽय राजा लक्ष्मण न्यायानुवृत्ति नीत्यनुयायिनीं पदवीं मार्ग प्रपेदे प्राप्तवान्। किं कृत्वा ? वैरसन्देह वैरसशय विहाय परित्यज्य। किं कृत्वा ? पूर्व सयममेत्य प्राप्य। पुन' किं कृत्वा ? रुप क्रोध जित्वा उपशम्य। कथम्भूत सन् ? वधूत शूर्पणख्या. (खाया) सकाशात्, पुन अपकृतिमपकार गतोऽपि।

भारतीय —तथाऽवधूत जटाजूटधारी लिङ्गी भूत्वा। किं कृत्वा ? पूर्वमेत्य प्राप्य। कम् ? सयम तपश्चरणम्। किं कृत्वा ? रुप जित्वा। स कीचक राजा न्यायानुवृत्ति पदवीं प्रपेदे प्राप्तवान्। किं कृत्वा ? देहमय शरीरहेतुं रस दुग्धदधिघृतादि विहाय विमुच्य। कथम् ? वै स्फुटम्। कथम्भूत कीचक' ? अपकृतिं गतोऽपि ॥३३॥

**स्वजानि कार्याणि निरूप्य हत्यां बलीयसस्तस्य च कौरवेण।**
**जिहीर्षता मानधनं बलेन सम्प्रेरितेनाभ्युदितं खरेण ॥ ३४ ॥**

स्वजानीति—बलेन सैन्येनाभ्युदित प्रसृतम्। कथम्भूतेन खरेण दूषणज्येष्ठभ्राता सम्प्रेरितेन। किं विशिष्टेन ? कौ पृथिव्या रवेण नादेन मानधनमभिमानधन जिहीर्षता हर्त्तुमिच्छता। कि कृत्वा ? पूर्वं स्वजानिकार्याण्यात्मीयभार्याकृत्यानि निरूप्य निवेद्य। कस्या सत्याम् ? तस्य प्रसिद्धस्य शम्बुकुमारस्य हत्या वधे सति। कथम्भूतस्य तस्य ? बलीयस बलिष्ठस्य।

---

उक्त प्रकारसे कीचकके द्वारा अवमानित किये जानेपर उस भयंकर भीमने कीचकके प्राण ही संकटमें डाल दिये थे। फलतः उसने एक क्षणभरमें ही तपस्या-द्वारा अपने शरीरको कष्ट देनेकी प्रतिज्ञा करके विराट देशको ही त्याग दिया था ॥३२॥

अन्वय—तथा वधूतोऽपकृतिं गतोऽपि सोऽय राजा रुष जित्वा सयम एत्य वैरसंदेह विहाय न्यायानुवृत्तिं पदवीं प्रपेदे।

उक्त प्रकारकी पुंश्चली वधूसे विराधना किये जानेपर भी इस राजा लक्ष्मणने क्रोधको वशमें किया था, संयमसे काम किया था और शत्रुता तथा सन्देहको त्यागकर नीतिमार्गके अनुसार आचरण किया था।

अन्वय—तथा अपकृतिं गतोऽपि स अवधूत राजा रुष जित्वा सयम एत्य, देहमय रसं वै विहाय ।

उक्त प्रकारसे भीमके द्वारा अपकार किये जानेपर भी उस संन्यासी राजा कीचकने क्रोधको जीतकर संयम धारण किया था तथा देहकी पुष्टि और स्थितिके निमित्त दुग्ध, घी, आदि रसोंको भी त्यागकर धर्मशास्त्रानुकूल रसपरित्यागादि तपोंके आचरणमें लग गया था ॥३३॥

अन्वय—स्वजानि-कार्याणि बलीयस तस्य हत्या च निरूप्य रवेण कौ मानधन जिहीर्षता खरेण सम्प्रेरितेन बलेन अभ्युदितम्।

अपनी पत्नी पर बीती घटनाओं तथा अत्यन्त बलवान् उस शम्बुकुमारकी हत्याको जानकर आक्रमणके लिए आहूत सेनाके द्वारा समस्त पृथ्वीपर घोषणापूर्वक सबके स्वाभिमान रूपी धनके अपहरणके लिए उद्यत वह खर तमतमा उठा था।

भारतीयः—कौरवेण दुर्योधनेन सम्प्रेरितेन सम्प्रेषितेन बलेन अभ्युदित प्रसृतम् । कथम्भूतेन कौरवेण ? खरेण तीव्रेण । किं कुर्वता ? अमानधन प्रचुरगोधन जिहीर्षता हर्तुमिच्छता । कि कृत्वा ? पूर्वं स्वजानि कार्याण्यात्मीयानि कार्याणि निरूप्य निवेद्य । कस्या सत्याम् ? बलीयसः तस्य कीचकस्य हत्या वधे सति । श्लेषालङ्कारः ॥ ३४ ॥

**आवारितो मध्यगतैः प्रबन्धैराहन्यमानोऽपि कृतावलेपः ।**
**शब्दायमानः कलहायमानस्तूर्योत्करो दुर्जनमन्वियाय ॥ ३५ ॥**

आवारित इति—तूर्योत्कर. तूर्यसमूहः दुर्जनमसज्जनम् अन्वियायानुचकार । कथम्भूतः ? मध्यगतै-रुदरस्थितै. प्रबन्धैर्वध्रीभिः आवारितो नियन्त्रित. । पुन. आहन्यमानोऽपि सन् कृतावलेप. । य. किल आहन्यमानः स कथ कृतावलेपो विहितगर्वो जायत इति विरुद्धम् । परिह्रियते—कृततैलसम्पर्क. । कथम्भूतः ? शब्दायमानः ध्वनिं कुर्वाणः । पुनः कलहायमान' कलह कुर्वाणः । एवंविधो दुर्जनोऽपि भवति । कथम्भूत. ? आवारितः निषिद्धः कैः कर्तृभिः मध्यगतैः मध्यस्थै. पुरुषै. । कैः कृत्वा ? प्रबन्धैर्निर्बन्धै. । पुनः कृतावलेप. विहिताहङ्कारः । शेष प्राग्वत्[1] ॥ ३५ ॥

**उन्मग्नशङ्खं श्रमफेनयुक्तमावर्तशुद्धं शफराजिलोलम् ।**
**अश्वीयमुल्लङ्घनशीलमुद्यच्चक्राम कल्लोल इवाम्बुराशेः ॥३६॥**

उन्मग्नेति—अश्वीयमश्वाना बल चक्राम चचाल । कथम्भूतम् ? उन्मग्नसङ्खमक्ष्णो' प्रान्तप्रदेशाः शङ्खा. उन्मग्ना. शङ्खा यस्य तत् प्रव्यक्तचक्षु'समीपप्रदेशम् । पुन. श्रमफेनयुक्त श्रमोत्पन्नफेनपिण्डयुक्तम् । आवर्त्तशुद्धमावर्त्तै. ध्रुवशुभनामधेयै शुद्ध समीचीनम् । पुन' शफराजिलोल खुरपङ्क्तिचञ्चलम् । पुनरुल्लङ्घनशीलमुत्प्लवनधर्माढ्यम् । किं कुर्वत् ? उद्यत् ऊर्ध्वं गच्छत् । उपमार्थ प्रदर्श्यते । क इव चक्राम कल्लोल इव । यथा कल्लोलः तरङ्ग' क्रामति । कस्य ? अम्बुराशे समुद्रस्य । कथभूत ? उन्मग्नशङ्ख. उच्छलित-

---

**अन्वय—बलीयस तस्य हत्या च स्वजानि कर्माणि निरूप्य अमानधनं जिहीर्षता खरेण कौरवेण सम्प्रेरितेन बलेन अभ्युदितम् ।**

**बलवान् कीचक राजाकी मृत्यु हो जानेपर अपने स्वार्थोकी सिद्धिको देखकर विपुल गोधनको चुरा लेनेके लिए तत्पर उस निर्दय कौरव दुर्योधनके द्वारा भेजी गयी सेना चारों ओर फैल गयी थी ॥३४॥**

**बीचमें डाली गयी तांतकी डोरियोंसे खूब कसा गया शुद्ध क्षेत्रमें मनमाने रूपसे बजाया गया तेल स्याही अथवा आटे आदिके लेप युक्त, एक दूसरेकी स्पर्द्धासे ही जोरोंसे बजते हुए बाजोंका समूह खलगोष्ठीके समान प्रतीत होता था। [क्योंकि दुर्जन भी हितैषी मध्यस्थ पुरुषोंके द्वारा अकार्यसे रोका जाता है, शासक मनचाही ताड़ना करते हैं। यह सब होनेपर भी वह अहंकार नहीं छोड़ता, बड़-बड़के बोलता है तथा झगड़ा करता फिरता है] ॥३५॥**

**अन्वय—उन्मग्नशखं, श्रमफेनयुक्तं, आवर्तशुद्धं, शफराजिलोलं, उल्लङ्घनशील, उद्यत् अश्वीयं अम्बुराशे कल्लोल इव चक्राम ।**

**आँखोंके पासका स्थान उठा तथा सुन्दर था, परिश्रमके झाग मुखसे टपक रहे थे, आवर्त आदि शुभ लक्षणोंसे युक्त थे, टापें अत्यन्त चंचल थीं, फलांग मारनेमें पटु थे तथा उचकते हुए घोड़ोंकी सेना समुद्रकी लहरोंके समान आगे बढ़ती जा रही थी [ समुद्रकी लहरोंपर भी शंख बहते जाते हैं, थकानसे आनेवाले झागोंके समान झाग उठते हैं, उत्तम भौंरें**

१ श्लेषोपमाऽलङ्कारः प०, द० ।

कम्बुः। पुन' श्रमफेनयुक्त' श्रमवत्फेन श्रमफेनस्तेन युक्त। पुनरावर्त्तशुद्ध आवर्त्ता पयसा भ्रमास्तैः शुद्ध। पुन' शफराजिलोल. मीनगणचञ्चल'। पुनरुल्लङ्घनशील. उत्प्लवनधर्म। कि कुर्वाण ? उद्यन्नूर्ध्वं गच्छन्। श्लेष. ॥३६॥

**स्नेहाद्वहन्ती क्षणमुत्कटाक्षा वेश्येव शल्यं हृदये दधाना।**
**उच्चाल्यमानातुरगैः परैश्च स्थानाद्विरोधेन चचाल रथ्या ॥३७॥**

स्नेहादिति—रथ्या रथश्रेणी चचाल चलितवती। कस्मात् ? स्थानात् प्रदेशात्। केन कृत्वा ? विरोधेन। कथम्भूता ? 'परै' जातिश्रेष्ठै तुरगैः हयै. उच्चाल्यमाना प्रेर्यमाणा। पुन क्षण मुहूर्त्तमेक स्नेहात्तैलादित. वहन्ती प्रवर्त्तमाना। पुनरुत्कटाक्षा उत्कटोऽक्षो यस्या सा निष्ठुरचक्रभ्रमणकाष्ठा। पुन शल्य शक्तितोमरादिशस्त्र दधाना। अथवा तुन्दवल्यम्। क्व ? हृदये मध्ये। उपमार्थ केव ? वेश्येव पण्याङ्गना यथा स्थानाच्चलति। केन कृत्वा ? विरोधेन कलहव्याजेन। कथम्भूता ? स्नेहादनुरागात् वहन्ती प्रवर्तमाना। कथम् ? क्षणम्। पुन परै. धूर्त्तैरुच्चाल्यमाना। कथम्भूतैः ? आतुरगैरातुर गच्छन्ति तै' चपलगतिभिरित्यर्थ। पुन शल्य कौटिल्य कषायरूप हृदये मनसि दधाना। पुनरुत्कटाक्षा उत्क्षिप्तलोचनाञ्चला। श्लेषोपमालङ्कार ॥३७॥

**उदात्तवंशं बहुधातुरङ्गै रूढं समुत्कङ्कटकप्रधानम्।**
**युयुत्सु गच्छत् प्रकटोत्थदानं तद्धास्तिकं कावचिकञ्च रेजे ॥ ३८ ॥**

उदात्तवशमिति—तल्लोकविख्यात हास्तिक हस्तिना समूह गजसमुदाय रेजे शुशुभे। किं कुर्वाणम् ? गच्छत् व्रजत्। कथम्भूतम् ? युयुत्सु योद्धुमिच्छु। पुन प्रकटोत्थदान प्रकर्षेण कटाभ्या कपोलाभ्यामुत्था उत्पत्तिर्यस्य तत् प्रकटोत्थ दान मदो यस्य तत्। पुनरुदात्तवशमुच्चपृष्ठवशाम्। धातूनामनेकार्थत्वात् रूढ विभक्तम्। कै कृत्वा ? बहुधातुरङ्गै धातव हरितालगैरिकादिलक्षणा बहवश्च ते धातवश्च बहुधातव. बहुधातूना रङ्गा बहुधातुरङ्गास्तै। पुन. कटकप्रधान कटके स्कन्धावारे प्रधान कटकप्रधानम्। चकार. समुच्चयार्थ। तच्च कावचिक कवचिना समूह गच्छत् सत् रेजे दिदीपे। कथम्भूतम् ? उदात्तवशमुदारा-

---

पड़ती हैं, चंचल मछलियाँ कूदती रहती हैं, उछलना तो उनका स्वभाव ही है और एकके बाद दूसरी उठती ही चली आती है ] ॥३६॥

घोड़ोंके द्वारा खींची गयी, क्षण भरके लिए कठोर धुरा युक्त, आँगन या तैल लगे रहनेके कारण जोरोंसे चलती, शक्ति, तोमर आदि अस्त्रोंसे सुसज्जित तथा शत्रुओंके साथ लड़नेके लिए उद्यत फलतः वेश्याके समान रथसेनाने अपने स्थानसे प्रयाण किया था।

अन्वय—क्षण उत्कटाक्षा, स्नेहाद्वहन्ती, हृदये शल्य दधाना परै विरोधेन आतुरगै स्थानात् उच्चाल्यमाना रथ्या इव वेश्या चचाल।

क्षणभरके लिए कटाक्ष करती तथा प्रेममय आचरणोंमें लीन किन्तु मन ही मन शंका या कपट करती, दूसरोंसे झगड़कर चंचल कामातुरोंके द्वारा भगायी गयी रथसेनाके समान वेश्या भी चली जाती है ॥३७॥

अन्वय—उदात्तवश, प्रकटोत्थदान, बहुधातुरङ्गै रूढं, समुत्कं कटक-प्रधान युयुत्सु तत् गच्छत् हास्तिकं कावचिक च रेजे।

उन्नत रीढ़की हड्डी युक्त, पुष्ट कपोलोंपरसे मदजलको बहाते हुए, हरिताल गेरु आदि धातुओंसे चित्रित, उद्धत अतएव सेनाके प्रधान अंग, लड़नेके लिए उद्यत कवचधारियोंको ले जाते हुए हाथियोंकी सेना बड़ी सुन्दर लगती थी।

उत्तम वंशमें उत्पन्न विख्यात महादानी, नाना जातियोंके घोड़ों और हाथियोंपर सवार

न्वयम् । पुनः तुरङ्गैरश्वैरूढ धृतम् । कथम् ? बहुधा बहुप्रकारैः पुनः समुत् सानन्दम् । पुनः कङ्कटकप्रधान सन्नाहसन्नद्धम् । पुनः युयुत्सु योद्धुमिच्छत् पुनः प्रकटोत्थदान प्रव्यक्तनैसर्गिकदातृत्वमिति¹ ॥ ३८ ॥

**शार्ङ्गाणि चापानि समुत्क्षिपन्तस्ते कञ्चुकं कार्दमिकं प्रविष्टाः ।**
**धनुर्भृतोऽभ्युद्ध ॥लश्रृङ्गाः कृष्णाः पशूनां समजा इवाभुः ॥ ३९ ॥**

शार्ङ्गाणीति–ते प्रसिद्धा धनुर्भृतः धन्विनोऽभुः भान्ति स्म । कथम्भूताः ? कञ्चुक सन्नाह प्रविष्टाः । कथम्भूतम् ? कार्दमिक कर्दमेन रक्तम् । किं कुर्वन्तः ? चापानि धनूषि समुत्क्षिपन्तः विस्फारयन्त. । कथम्भूतानि चापानि ? शार्ङ्गाणि श्रृङ्गविकाराणि । अथोपमार्थः क ( इ ) व ? समजा इव केषा पशूना गोमहिष्यादीनाम् । कथम्भूताः ? कृष्णाः श्यामाः । पुनरभ्युद्धतनीलश्रृङ्गाः सामस्त्येनोत्कटनीलविषाणा. । उपमालङ्कारः ॥ ३९ ॥

**नृणामसीनां वसुनन्दकानां पार्श्वोपरोधं स्फुरतां प्रवाहाः ।**
**स्विन्दारुणानां विरराजिरेऽमी द्रुता इव त्रापुषजातुषौघाः ॥४०॥**

नृणामिति–अमी प्रत्यक्षीभूता असीना खङ्गाना वसुनन्दकाना हस्तस्फुराणाञ्च प्रवाहाः विरराजिरे । किं कुर्वताम् ? पार्श्वोपरोधमुभय पार्श्वमुपरुध्य स्फुरता शोभमानानाम् । केषाम् ? नृणा पुसाम् । कथभूतानाम् ? उभयेपाम् असीना वसुनन्दकानाञ्च ? स्विन्दारुणाना श्वेतशोणानाम् । असयस्तावत्श्वेता. वसुनन्दकाश्च लोहिताः । अतएव साहचर्यादेवोभयेषा युगपद्विशेषणमिति सुस्थम् । इदानीमुत्प्रेक्षार्थ' । क इवोत्प्रेक्ष्यन्ते त्रापुषजातुषौघा इव सीसकयावकपूरा इव । कथभूताः ? द्रुता. द्रवीभूता ॥४०॥

**भूर्जद्रुमस्येव विहायसश्चेत्त्वचश्च्युताः स्युर्विधुता मरुद्भिः ।**
**तथा भवेयुः पथि वैजयन्त्यः कालस्य जिह्वा इव वा ललन्त्यः ॥ ४१ ॥**

भूर्जेति–पथि मार्गे चेद्यदि त्वच. स्युर्भवेयु । कथम्भूता. ? च्युता । कथम्भूता. सत्य. ? विधुता. कम्पिताः । कै. मरुद्भिर्वातै । कस्य ? विहायस गगनस्य । कस्येव ? भूर्जद्रुमस्येव यथा वैजयन्त्य. चीरपताकाः भवेयु' वाऽथवा वैजयन्त्य ललन्त्यश्चलन्त्य' सत्य भवेयु. का इव जिह्वा ( इव ) रसना यथा । कस्य कालस्य यमस्येति² ॥ ४१ ॥

**प्रभा विमानं समुपेत्य यातां कौक्षेयकैस्तिग्मकरैः स्फुरद्भिः ।**
**केषाञ्चिदभ्रोदरमुत्पतन्त्या लीलोन्नतालम्भि तडिल्लतायाः ॥ ४२ ॥**

---

युद्धके लिए उत्सुक अतएव उत्तम, जोरसे बजते पटहादि वाजोंसे युक्त लड़नेके लिए निकले कवचधारियोंकी सेना मनमोहनी लगती थी ॥३८॥

सींगसे बने धनुषोंको फटकारते हुए तथा धूल कीचड़से लथपथ कञ्चुकधारी वे धनुषधारी योद्धा, ऊपर तक उठे हुए नील ' धारी काले हिरण पशुओंके सजातीयोंके समान प्रतीत होते थे ॥ ३९॥

सैनिकोंकी चमचमाती श्वेत तलवारों तथा उन्हें घुमाते हुए लाल हाथोंकी श्वेत तथा कान्तिके प्रवाह दोनों बगलोंको व्याप्त करते हुए ऐसे लगते थे मानो शीशा और लाह पिघल करके बहे जा रहे है ॥४०॥

भोजपत्रके पेड़ोंका पतला वकला आकाशमार्गमें गिर जाय और यदि वायुके द्वारा खूब उड़ाया जाय इसी प्रकारसे चीनांशुककी ध्वजाएँ हो रही थीं अथवा लपलपाती यमकी जिह्वाओंके समान प्रतीत होती थीं ॥४१॥

१. श्लेषाऽलङ्कार –प०, द० । २. उत्प्रेक्षाऽलङ्कार.–प०, द० । ३. उपमाऽलङ्कार –प०, द० ।

प्रभेति–अलम्भि प्राप्ता। का कर्मतापन्ना ? लील शोभा। कथम्भूता ? उन्नता उच्चा। कस्या' ? तडिल्लताया' विद्युल्लताया। किं कुर्वाणाया ? उत्पतन्त्या। किम् ? अभ्रोदर जलधरमध्यम् ? कै कर्त्तृभिरलम्भि ? कौक्षेयकै खड्गै। कथम्भूतै ? तिग्मकरै तिग्मा करा येषा तै तीव्रदीप्तिभिरित्यर्थ। स्फुरद्भिः शूल्कायमानै। केषाञ्चित् कियता भटानाम्। किं कुर्वताम् ? प्रभा दीप्ती· याता प्राप्ताना (प्राप्नुवताम्)। किं कृत्वा ? पूर्वं समुपेत्य प्राप्य। कम् ? विमान विशिष्ट मान समीचीन सत्कारम्। अत्र स्व स्व स्वामिभ्य इति सम्बन्धेन भवितव्यमिति' ॥ ४२ ॥

**सिन्दूररेणुः करिकर्णतालैरुद्धूयमानो दिशि विप्रकीर्णः।**
**रुद्धार्यमाभ्याधित तापसानां सन्ध्यासमाधौ नियमैकबुद्धिम् ॥ ४३ ॥**

सिन्दूरेति–सिन्दूररेणु सिन्दूरधूली अभ्याधित कारितवान्। काम् ? नियमैकबुद्धिमनुष्ठानैकमतिम्। कस्मिन् ? सन्ध्यासमाधौ सन्ध्याकर्मणि। केषाम् ? तापसाना व्रतिनाम्। कथम्भूत ? विप्रकीर्ण प्रसृत। कस्याम् ? दिशि आशायाम्। कथम्भूत सन् ? उद्धूयमान उत्क्षिप्यमाण। कै ? करिकर्णतालै· प्रशस्ता कर्णा कर्णताल करिणा गजाना कर्णताल करिकर्णतालास्तै। अथवा करिकर्णव्यजनै·। पुन कथम्भूत सिन्दूररेणु ? रुद्धार्यमा प्रच्छादितरवि। भ्रान्तिरलङ्कार ॥ ४३ ॥

**अभूत्प्रकाशं विपिनं प्रचारैः कूलङ्कषाणां न्यपतंस्तटानि।**
**निपीतनीरप्रतिदित्सयेव द्विपा मदाम्भो ववृषुः सरःसु ॥ ४४ ॥**

अभूदिति–विपिनमरण्य प्रचारैश्चरणघट्टनाभि प्रकाशमभूत् सञ्जातम्। विरल विरलमासीदित्यर्थः। तथा कूलङ्कषाणा नदीना तटानि कूलानि न्यपतन्। तथा द्विपा· हस्तिन सरस्सु अधिकरणभूतेषु सरोवरेषु मदाम्भ· मदजल ववृषु। उत्प्रेक्षते–कयेव कृत्वा निपीतनीरप्रतिदित्सयेव निपीतम् कर्दमावशेष पय पीत निपीतमुच्यते। निपीतञ्च तन्नीरञ्च निपीतनीर निपीतनीरस्य प्रतिदातुमिच्छा तया इव[2] ॥ ४४ ॥

**सौदामिनीदामचितेव शस्त्रैरभ्राकुलेव द्विरदैर्दिगासीत्।**
**समुद्रवेलेव चलैस्तुरङ्गैस्त्रैलोक्ययात्रेव जनैश्चलद्भिः ॥ ४५ ॥**

सौदामिनीति–दिगाशा शस्त्रै तोमरादिभि सौदामिनीदामचितेव विद्युन्मालावगुण्ठितेव आसीत्। तथा द्विरदै गजै अभ्राकुलेव मेघमालासङ्कुलेव आसीत्। तथा चलैश्चञ्चलैस्तुरङ्गै· वाजिभि समुद्रवेलेव

---

विमानोंमें आरूढ़ होकर युद्धके लिए जाते हुए कतिपय योद्धाओंकी तीक्ष्ण किरणोंके द्वारा जगमगाती तलवारोंने आकाशके मध्यको चीरकर फैलती हुई विद्युल्लताकी उत्कृष्ट तथा अत्यन्त चमत्कारी कान्तिको प्राप्त किया था ॥४२॥

हाथियोंके विशाल कानोंके द्वारा उड़ायी गयी फलतः सब दिशाओंमे व्याप्त अतएव सूर्यके प्रकाशको भी रोककर लाल करनेवाली सिन्दूरकी धूलिने तपस्वियोंको सन्ध्या-समयके नियमोंके अनुष्ठान तथा समाधि लगानेके लिए निश्चित रूपसे प्रेरित कर दिया था ॥४३॥

सेनाके निरन्तर आने जानेके कारण गहन वन विरल हो गया था, विशाल नदियोंके किनारे टूट गये थे तथा तालावोंमें पिये गये पानीको वापस देनेकी भावनासे ही हाथियोंने अपने मदजलको तालावोंमें वरसा दिया था ॥४४॥

उभयपक्ष-द्वारा चलाये गये शस्त्रोंके कारण युद्धकी दिशा बिजलीकी माला पहिने सी लगती थी, उन्मत्त हाथियोंकी भीड़से मेघाच्छन्नके समान दिखती थी, चंचल घोड़ोंकी

---

1 उपमाऽलङ्कार –प०, द०। २. समुच्चयाऽलङ्कार –प०, द०।

न्वयम् । पुनः तुरङ्गैरश्वैरूढ धृतम् । कथम् ? बहुधा बहुप्रकारैः पुनः समुत् सानन्दम् । पुनः कङ्कटकप्रधान सन्नाहसन्नद्धम् । पुनः युयुत्सु योद्धुमिच्छत् पुनः प्रकटोत्थदान प्रव्यक्तनैसर्गिकदातृत्वमिति[1] ॥ ३८ ॥

**शार्ङ्गाणि चापानि समुत्क्षिपन्तस्ते कञ्चुकं कार्दमिकं प्रविष्टाः ।**
**धनुर्भृतोऽभ्युद्धतनीलशृङ्गाः कृष्णाः पशूनां जा इवाशुः ॥ ३९ ॥**

शार्ङ्गाणीति–ते प्रसिद्धा धनुर्भृतः धन्विनोऽशुः भान्ति स्म । कथम्भूता. ? कञ्चुक सन्नाह प्रविष्टाः । कथम्भूतम् ? कार्दमिक कर्दमेन रक्तम् । किं कुर्वन्तः ? चापानि धनूषि समुत्क्षिपन्तः विस्फारयन्तः । कथम्भूतानि चापानि ? शार्ङ्गाणि शृङ्गविकाराणि । अथोपमार्थं क ( इ ) व ? समजा इव केषा पशूना गोमहिष्यादीनाम् । कथम्भूताः ? कृष्णाः श्यामा' । पुनरभ्युद्धतनीलशृङ्गाः सामस्त्येनोत्कटनीलविषाणा. । उपमालङ्कारः ॥ ३९ ॥

**नृणामसीनां वसुनन्दकानां पार्श्वोपरोधं स्फुरतां प्रवाहाः ।**
**स्विन्दारुणानां विरराजिरेऽमी द्रुता इव त्रापुषजातुषौघाः ॥४०॥**

नृणामिति–अमी प्रत्यक्षीभूता असीना खड्गाना वसुनन्दकाना हस्तस्फुराणाञ्च प्रवाहाः विरराजिरे । किं कुर्वताम् ? पार्श्वोपरोधमुभय पार्श्वमुपरुध्य स्फुरता शोभमानानाम् । केषाम् ? नृणा पुसाम् । कथभूतानाम् ? उभयेषाम् असीना वसुनन्दकानाञ्च ? स्विन्दारुणाना श्वेतशोणानाम् । असयस्तावच्छ्वेता. वसुनन्दकाश्च लोहिताः । अतएव साहचर्यादेवोभयेषा युगपद्विशेषणमिति सुस्थम् । इदानीमुत्प्रेक्षार्थ. । क इवोत्प्रेक्ष्यन्ते त्रापुषजातुषौघा इव सीसकयावकपूरा इव । कथभूताः ? द्रुता. द्रवीभूता ॥४०॥

**भूर्जद्रुमस्येव विहायसश्चेत्त्वचश्च्युताः स्युर्विधुता मरुद्भिः ।**
**तथा भवेयुः पथि वैजयन्त्यः कालस्य जिह्वा इव वा ललन्त्यः ॥ ४१ ॥**

भूर्जेति–पथि मार्गे चेद्यदि त्वच स्युर्भवेयु । कथम्भूता. ? च्युता । कथम्भूताः सत्य. ? विधुता. कम्पिताः । कै मरुद्भिर्वातै । कस्य ? विहायस गगनस्य । कस्येव ? भूर्जद्रुमस्येव यथा वैजयन्त्य चीरपताका' भवेयु वाऽथवा वैजयन्त्य ललन्त्यश्चलन्त्य' सत्य. भवेयु का इव जिह्वा ( इव ) रसना यथा । कस्य कालस्य यमस्येति[2] ॥ ४१ ॥

**प्रभा विमानं समुपेत्य यातां कौक्षेयकैस्तिग्मकरैः स्फुरद्भिः ।**
**केषाञ्चिदभ्रोदरमुत्पतन्त्या लीलोन्नतालम्भि तडिल्लतायाः ॥ ४२ ॥**

---

युद्धके लिए उत्सुक अतएव उत्तम, जोरसे बजते पटहादि बाजोंसे युक्त लड़नेके लिए निकले कवचधारियोंकी सेना मनमोहनी लगती थी ॥३८॥

सींगसे बने धनुषोंको फटकारते हुए तथा धूल कीचड़से लथपथ कञ्चुकधारी वे धनुषधारी योद्धा, ऊपर तक उठे हुए नील सींगधारी काले हिरण पशुओंके सजातीयोंके समान प्रतीत होते थे ॥ ३९॥

सैनिकोंकी चमचमाती श्वेत तलवारों तथा उन्हें घुमाते हुए लाल हाथोंकी श्वेत तथा लाल कान्तिके प्रवाह दोनों बगलोंको व्याप्त करते हुए ऐसे लगते थे मानो शीशा और लाह पिघल करके बहे जा रहे हैं ॥४०॥

भोजपत्रके पेड़ोंका पतला वकला आकाशमार्गमें गिर जाय और यदि वायुके द्वारा खूब उड़ाया जाय इसी प्रकारसे चीनांशुककी ध्वजाएँ हो रही थीं अथवा लपलपाती यमकी जिह्वाओंके समान प्रतीत होती थीं ॥४१॥

---

१. श्लेषाऽलङ्कार –प०, द० । २. उत्प्रेक्षाऽलङ्कार –प०, द० । ३ उपमाऽलङ्कार –प०, द० ।

प्रमेति–अलम्भि प्राप्ता। का कर्मतापन्ना ? लील शोभा। कथम्भूता ? उन्नता उच्चा। कस्या ? तडिल्लताया' विद्युल्लताया। कि कुर्वाणाया. ? उत्पतन्त्या। किम् ? अभ्रोदर जलधरमध्यम् ? कैः कर्त्तृ-भिरलम्भि ? कौक्षेयकै खड्गै। कथम्भूते ? तिग्मकरै तिग्मा. करा येपा ते तीव्रदीप्तिभिरित्यर्थ। स्फुरद्भि. शूलकायमानै। केषाञ्चित् कियता भटानाम्। कि कुर्वताम् ? प्रभा. दीप्ती याता प्राप्ताना (प्राप्नुवताम्)। किं कृत्वा ? पूर्वं समुपेत्य प्राप्य। कम् ? विमान विशिष्ट मान समीचीन सत्कारम्। अत्र स्व स्व स्वामिभ्य इति सम्बन्धेन भवितव्यमिति' ॥ ४२ ॥

**सिन्दूररेणुः करिकर्णतालैरुद्धूयमानो दिशि विप्रकीर्णः।**
**रुद्धार्यमाभ्याधित तापसानां सन्ध्यासमाधौ नियमैकबुद्धिम् ॥ ४३ ॥**

सिन्दूरेति–सिन्दूररेणु सिन्दूरधूली अभ्याधित कारितवान्। काम् ? नियमैकबुद्धिमनुष्ठानैकमतिम्। कस्मिन् ? सन्ध्यासमाधौ सन्ध्याकर्मणि। केषाम् ? तापसाना व्रतिनाम्। कथम्भूत. ? विप्रकीर्ण. प्रसृत.। कस्याम् ? दिशि आशायाम्। कथम्भूत' सन् ? उद्धूयमान उत्क्षिप्यमाण.। कै ? करिकर्णतालै. प्रशस्ता. कर्णा कर्णताला करिणा गजाना कर्णताला करिकर्णतालास्तै.। अथवा करिकर्णव्यजनै.। पुन कथम्भूत. सिन्दूररेणु ? रुद्धार्यमा प्रच्छादितरवि। भ्रान्तिरलङ्कार. ॥ ४३ ॥

**अभूत्प्रकाशं विपिनं प्रचारैः कूलङ्कषाणां न्यपतंस्तटानि।**
**निपीतनीरप्रतिदित्सयेव द्विपा मदाम्भो ववृषुः सरःसु ॥ ४४ ॥**

अभूदिति–विपिनमरण्य प्रचारैश्चरणघट्टनाभि प्रकाशमभूत् सञ्जातम्। विरल विरलमासीदित्यर्थ.। तथा कूलङ्कषाणा नदीना तटानि कूलानि न्यपतन्। तथा द्विपा. हस्तिन सरस्सु अधिकरणभूतेषु सरोवरेषु मदाम्भः मदजल ववृषु.। उत्प्रेक्षते–कयेव कृत्वा निपीतनीरप्रतिदित्सयेव निपीतम् कर्दमावशेष पय पीत निपीतमुच्यते। निपीतञ्च तन्नीरञ्च निपीतनीर निपीतनीरस्य प्रतिदातुमिच्छा तया इव[1] ॥ ४४ ॥

**सौदामिनीदामचितेव शस्त्रैरभ्राकुलेव द्विरदैर्दिगासीत्।**
**समुद्रवेलेव चलैस्तुरङ्गैस्त्रैलोक्ययात्रेव जनैश्चलद्भिः ॥ ४५ ॥**

सौदामिनीति–दिगाशा शस्त्रै तोमरादिभि सौदामिनीदामचितेव विद्युन्मालावगुण्ठितेव आसीत्। तथा द्विरदै गजै अभ्राकुलेव मेघमालासङ्कुलेव आसीत्। तथा चलैश्चञ्चलैस्तुरङ्गै वाजिभिः समुद्रवेलेव

---

विमानोंमे आरूढ़ होकर युद्धके लिए जाते हुए कतिपय योद्धाओंकी तीक्ष्ण किरणोंके द्वारा जगमगाती तलवारोंने आकाशके मध्यको चीरकर फैलती हुई विद्युल्लताकी उत्कृष्ट तथा अत्यन्त चमत्कारी कान्तिको प्राप्त किया था ॥४२॥

हाथियोंके विशाल कानोंके द्वारा उड़ायी गयी फलतः सब दिशाओंमें व्याप्त अतएव सूर्यके प्रकाशको भी रोककर लाल करनेवाली सिन्दूरकी धूलिने तपस्वियोंको सन्ध्या-समयके नियमोंके अनुष्ठान तथा समाधि लगानेके लिए निश्चित रूपसे प्रेरित कर दिया था ॥४३॥

सेनाके निरन्तर आने जानेके कारण गहन वन विरल हो गया था, विशाल नदियोंके किनारे टूट गये थे तथा तालाबोंमें पिये गये पानीको वापस देनेकी भावनासे ही हाथियोंने अपने मदजलको तालाबोंमें बरसा दिया था ॥४४॥

उभयपक्ष-द्वारा चलाये गये शस्त्रोंके कारण युद्धकी दिशा बिजलीकी माला पहिने सी लगती थी, उन्मत्त हाथियोंकी भीड़से मेघाच्छन्नके समान दिखती थी, चंचल घोड़ोंकी

---

१. उपमाऽलङ्कार –प०, द०। २. समुच्चयाऽलङ्कार –प०, द०।

पयोनिधिपालिन्दीव आसीत्। तथा चलद्भिः गच्छद्भिः जनैः मनुष्यैः त्रैलोक्ययात्रेव आसीत्। समुच्चयालङ्कारः ॥ ४५ ॥

**वंशावतारं जगतीपतीनां ववन्दिरे वन्दिजना गुणांश्च।**
**श्वेतातपत्राणि समुल्लसन्ति क्षीरार्णवस्योत्कलिकाः प्रजिग्युः ॥ ४६ ॥**

वंशेति—वन्दिजनाः जागरिकाः जगतीपतीना राज्ञा गुणान् शौर्यादीन् वंशावतार वंशस्यान्वयस्यावतारो यस्मिन् कर्मणि तद्यथा तथा, तथा ववन्दिरेस्तुवन्ति स्म। च समुच्चयार्थे तथा समुल्लसन्ति श्वेतातपत्राणि शुभ्रच्छत्राणि क्षीरार्णवस्य क्षीरपयोनिधेरुत्कलिकास्तरङ्गान् प्रजिग्यु जयन्ति स्म[1] ॥ ४६ ॥

**सङ्क्रीडितं स्यन्दनचक्रजातं वने मयूरा विनिशम्य रम्यम्।**
**घनारवोत्काः पतिता इवौघैः पिच्छातपत्रप्रकरा विरेजुः ॥ ४७ ॥**

सङ्क्रीडितमिति—पिच्छातपत्रप्रकराः विरेजुः शोभन्ते स्म। क इव? उत्प्रेक्ष्यन्ते—मयूरा इव शिखण्डिनो यथा। कथम्भूताः सन्तः? पतिताः। कैः? ओघैः प्रवाहैः। पुनः कथम्भूताः सन्तः? घनारवोत्काः मेघध्वनिसमुत्कण्ठिताः सन्तः। किं कृत्वा? पूर्वं स्यन्दनचक्रजात रथरथाङ्गसमुत्पन्न सङ्क्रीडित चीत्कृत विनिशम्य श्रुत्वा। कथभूत सङ्क्रीडितम्? रम्य मनोहरम्। क? अतिरम्ये वनेऽरण्ये। उत्प्रेक्षालङ्कारः ॥४७॥

**शङ्खानकारावमयी पतीनां दिशां श्रुतिः सैन्यमयी च दृष्टिः।**
**रजोमयी कामविमानभूमिः शङ्काऽऽत्मसंहारमयी बभूव ॥४८॥**

शङ्खेति—बभूव सञ्जाता। का? श्रुतिराकर्णनम्। कथभूता? शङ्खानकारावमयी कम्बुपटहशब्दनिर्वृत्ता। केषां श्रुतिः? दिशाम्पतीना लोकपालानाम्। चकारः समुच्चयार्थस्तथा तेषां दृष्टिः बभूव सञ्जाता। कथम्? सैन्यमयी चमूनिर्वृत्ता च तथा कामविमानभूमि गगन रजोमयी धूलिनिर्वृत्ता तथा शङ्का भयमात्मसंहारमयी स्वमरणनिर्वृत्ता बभूव[2] ॥४८॥

**इत्यद्रिकुञ्जान्सरितः सरांसि स्वपच्छयूच्छ्वासचलं वनञ्च।**
**विप्लावयन्ती तमियाय देशमक्षौहिणी वारिधिमापगेव ॥४९॥**

इतीति—इति पूर्वोक्तप्रकारेण त दण्डकारण्याख्य देशमियाय गतवती। का? अक्षौहिणी सेना। किं कुर्वती सती? अद्रिकुञ्जरान् शैलकटकसमूहान् तथा सरित नदी सरासि सरोवराणि तथा स्वपच्छयूच्छ्वा-

---

बढ़ती हुई पंक्तियोंके कारण समुद्रके तीर सदृश थी तथा चलते-फिरते मनुष्योंको देखकर ऐसा लगता था मानो तीनों लोक यात्रापर चल पड़े है ॥४५॥

चारण लोग पृथ्वीपतियोंकी वंशावली तथा उनके उदात्त कार्योका व्याख्यान करके स्तुति पढ़ते थे। समस्त युद्ध-भूमिपर शोभायमान श्वेत राजछत्रोंने अपनी कान्तिके द्वारा क्षीरसमुद्रकी उठती हुई लहरोंको जीत लिया था ॥४६॥

वनमें जाते हुए रथोंके पहियोंसे उत्पन्न गम्भीर तथा मधुर नादको सुनकर मयूर वैसे ही उत्कण्ठित हो गये थे जैसे मेघोंकी गर्जनोंको सुनकर होते है, झुण्ड के झुण्ड बाहर निकल आते है और पंख फैलाकर नाचते हैं। ये सब मयूरकी पूँछके बने छत्रोंके समूहके समान शोभित हो रहे थे ॥४७॥

समस्त दिक्पालोंके कान शंख, पटह आदि बाजोंके तार स्वरसे व्याप्त थे, आँखें सेना ही सेना देखती थीं, इच्छा मात्रसे चलने वाले विमानोंका मार्ग धूलिसे आच्छन्न था तथा कल्पनामें अपना ही विनाश आता था ॥४८॥

इस प्रकारसे पर्वतों, तरुलताके गुल्मों, नदियों, तालावों तथा सोते हुए अजगरकी

1 समुच्चयाऽलङ्कार –प०, द०। 2 समुच्चयाऽलङ्कार –प०, द०।

सचल निद्रापरिणताजगरघोणानिर्गतवातचञ्चल वन कान्तार च विप्लावयन्ती क्षोभ नयन्ती। केव ? आपगेव नदीव। कम् ? वारिधि समुद्रम्।

भारतपक्षे—त देश विराट शेष पूर्ववत्समानम् ॥४९॥

[ इदानीं चतुर्भिर्वृत्तै कुलकेन सम्बन्धो बोद्धव्य — ]

**ततो गभीरश्चरितैरगाधैर्ज्वलन्निवान्तःकरणेन कुप्यन्।**
**स्पृष्टानुमेयस्फुरितोदराग्निरुच्चैरुदन्वानिव दीप्यमानः ॥५०॥**

तत इति—तत अक्षौहिणीगमनान्तर दाशरथिर्भीमदत्त कुप्यन् कोप गच्छन् अन्त करणेन हृदयेन ज्वलन्निव कथभूतश्चरितै चेष्टाभि गभीर.। कथभूतै चरितै.? अगाधैर्गम्भीरैरलब्धैरित्यर्थ.। कथभूत. ? दीप्यमान' प्रज्वलन्। कथम् ? उच्चैरतिशयेन। कथभूत. सन् ? स्पृष्टानुमेयस्फुरितोदराग्नि स्पृष्ट स्पर्शन तेनानुमेयोऽनुमानप्रमाणगोचर स्फुरित विजृम्भित' उदराग्निर्जठरानलो यस्य स.। क इव ? उदन्वानिव समुद्र इव। कथम्भूत उदन्वान् ? स्पृष्टानुमेयस्फुरितवडवाग्निरिति ॥५०॥

**पतिर्मृगाणां गजबृंहितेन कल्पान्तमेघेन च सुप्रतीकः।**
**यथा सुधांश्वभ्युदयेन वार्धिः क्षोभं रिपूणां निनदेन गच्छन् ॥५१॥**

पतिरिति—पुन कि कुर्वन् ? रिपूणा निनदेन ध्वनिना क्षोभ गच्छन् भजन्। यथा शब्देनोपमार्थो गम्यते। क इव क्षोभ गच्छन् ? सुप्रतीक. यथा इव ईशानाशागज इव। केन ? कल्पान्तमेघेन प्रलयकालजलदेन। पुन' क इव ? सुधांश्वभ्युदयेन पीयूषांशूद्गमेन वार्द्धिरिव। पुन' क इव ? गजबृंहितेन गजचीत्कृतेन मृगाणा पति. सिंह इव ॥ ५१ ॥

**स सञ्जिहीर्षन्निव जीवलोकं यमेन कुर्वन्निव दृष्टियुद्धम्।**
**वमन्निव क्रोधहुताशराशिं गिलन्निवाशाः स्थगयन्निवार्कम् ॥५२॥**

स इति—स किं कुर्वन्निव ? सञ्जिहीर्षन्निव संहर्तुमिच्छन्निव। कम् ? जीवलोक प्राणिवर्गम्। पुन. किं कुर्वन्निव ? विदधदिव। किम् ? दृष्टियुद्ध विलोचनरणम्। कथम् ? सह। केन ? यमेन। कृतान्तेन सह कृतान्तमाहूयमान इव। वमन्निव उद्गिरन्निव। कम् ? क्रोधहुताशराशिं क्रोधानलावलीम्। पुन. किं कुर्वन्निव ? गिलन्निव उदरमध्ये कुर्वन्निव, का ? आशा दिश। पुन किं कुर्वन्निव ? स्थगयन्निव प्रच्छादयन्निव, कम् ? अर्क सूर्यमिति ॥५२॥

---

श्वाससे चंचल वनको, समुद्रकी ओर जाती बाढ़पूर्ण नदीके समान अक्षौहिणी प्रमाण वह सेना भी उस दण्डकारण्य अथवा विराटदेश तक जा पहुँची थी ॥४९॥

अक्षौहिणी सेनाके आगमनका समाचार सुननेके बाद गूढ तथा निर्दोष चेष्टाओंके कारण अज्ञेय, मन ही मन अत्यन्त कुपित, संघर्ष होनेपर ही अपनी आन्तरिक रौद्रताका प्रकाशक अतएव समुद्रके समान प्रतापी, [ समुद्र भी तलमें चलनेवाले जन्तुओंके होनेपर भी शान्त रहता है, भीतर ही भीतर बड़वानल जलती रहती है, तथा उसके मुखमें जलादि जानेपर भीषण विस्फोट होता है ] ॥ ५०॥

हाथियोंकी चिंघाड़से चिढ़े मृगराज, प्रलयकालके जलदोंसे उद्दीपित ईशान दिशाके दिग्गज, सुप्रतीक तथा पूर्णिमाके चन्द्रोदयसे ज्वार-भाटापूर्ण समुद्रके समान शत्रुओंकी सेनाके कोलाहलसे अत्यन्त क्षुभित ॥५१॥

मनुष्य लोकके विनाश करनेके संकल्पसे अथवा यमराजके ही साथ नेत्रयुद्ध करता हुआ, समस्त दिशाओंको निगलता सा, सूर्यके प्रताप और प्रकाशको तिरोहित करता हुआ-सा ॥५२॥

**आदित्सया मानधनस्य सैन्यमभ्यर्णमाकर्ण्य विकीर्णनादम् ।**
**द्विषः सदो दाशरथी रयेण व्यापत्सहेनावरजेन भीमः ॥५३॥**

आदित्सयेति—स दाशरथिः दशरथस्यापत्य पुमान्दाशरथिः रामः व्यापत् व्याप्तवान् । किम् ? सदः सभाम् । कस्य ? द्विषः खरदूषणस्य । केन कृत्वा ? रयेण वेगेन । कथम्भूत. सन् ? भीमः रौद्रः । केन ? अवरजेन लघुभ्रात्रा लक्ष्मणेन । कथम्भूतेन ? सहेन समर्थेन । किं कृत्वा पूर्वं व्यापत् ? आकर्ण्य श्रुत्वा । किम् ? सैन्य वल्म् । कथम्भूतम् ? अभ्यर्णे निकटम् । पुनः विकीर्णनादम् विकीर्ण. विक्षिप्तो नादो ध्वनिर्येन तत् । कया आदित्सया ग्रहीतुमिच्छया । कस्य मानधनस्य मान एव धन मानधन तस्य गर्वद्रव्यस्येत्यर्थः ।

भारतीयः—स प्रसिद्धः भीमः वृकोदरः उदाश जग्राह भक्षितवानित्यर्थ. । कान् ? द्विषः शत्रून् । केन कृत्वा ? अवरजेन लघुभ्रात्राऽर्जुनेन । कथम्भूतेन ? व्यापत्सहेन विपत्सहिष्णुना । केन कृत्वा ? रयेण वेगेन । कथम् ? यथा भवति विकीर्णनाद विकीर्णो नादो यस्मिन् तत् क्रियाविशेषणमेतत् । कि कृत्वा ? पूर्वमाकर्ण्य श्रुत्वा । किम् ? सैन्य वल्म् । कथम्भूतम् ? अभ्यर्णे समीपम् । कया ? आदित्सया । कस्य ? अमानधनस्य प्रचुरगोधनस्य । अथवा हे अमान हे अगाध श्रेणिक ! इति सम्बन्धः । अन्तकुल्कम् ॥ अन्तदीपकालङ्कारः ॥ ५३ ॥

**शङ्खा निनेदुः पटहाश्चुकूजुर्गजा जगर्जुस्तुरगा जिहेषुः ।**
**वीरा ववल्गुः शकटा विरेसुरासीदकूपाररवः समन्तात् ॥ ५४ ॥**

शङ्खा इति— शङ्खा निनेदु ध्वनन्ति स्म, पटहा आनकाश्चुकुजुः कूजितवन्तस्तथा गजा जगर्जुस्तथा तुरगा जिहेषुर्हेषितवन्तः वीरा. भटा. ववल्गु. वल्गितवन्त. शकटा विरेसु. रसितवन्तः इत्यनया युक्त्या अकूपाररवः समुद्रघोषः सामस्त्येन आसीत्सञ्जात. । समुच्चयालङ्कार ॥ ५४ ॥

**बभ्रुः पुराणाः स्फुटिता भटानां व्रणा रणानन्दथुनिर्भरेण ।**
**स्वामिप्रसादानसहा निरोद्धुं देहाः स्वयं भेदमिवाभ्युपेयुः ॥ ५५ ॥**

बभुरिति—भटाना पुराणाः पुरातना व्रणा. रणानन्दथुनिर्भरेणा सङ्ग्रामहर्षोत्कर्षेण स्फुटिता विदीर्णा. सन्तो बभु रेजु । तथा देहा' काया आत्मना स्वयमेव भेद स्फुटनमभ्युपेयुरिव । कथम्भूता ? असहा असमर्थाः । किं कर्तुम् ? निरोद्धुमावरितुम् । कान् ? स्वामिप्रसादान् प्रभुसत्कारानिति । उत्प्रेक्षालङ्कारः ॥५५॥

---

अन्वय—भीम दाशरथी सहेन अवरजेन आदित्सया मानधनस्य विकीर्णनादं अभ्यर्णं सैन्यं आकर्ण्य द्विष सद रयेण व्यापत् ।

दशरथके ज्येष्ठ पुत्र अत्यन्त भयंकर उस रामने परम सहिष्णु छोटे भाईके द्वारा वन्दी बनानेकी इच्छासे निकट आ पहुँची अत्यन्त अहंकारी शत्रुओंकी सेनाके विस्तीर्ण कोलाहल को सुनकर बड़ी तेजीसे खरदूषणके स्कन्धावारपर आक्रमण कर दिया था ।

अन्वय—अमानधनस्य आदित्सया विकीर्णनादं अभ्यर्णम् आकर्ण्य रथी भीम सदा व्यापत्सहेन अवरजेन द्विष सैन्यं रयेण उदाश ।

प्रचुर गोधनको लूटकर ले भागनेकी इच्छासे निकट हीमें होनेवाले कोलाहलको जानकर रथी योद्धाओंके श्रेष्ठ भीमने सदैव विपत्ति सहनेमें दृढ अनुज अर्जुनके द्वारा उस समस्त शत्रु सेनाका क्षणोंमें ही संहार करा दिया था ॥५३॥

शंखोंकी तार ध्वनि हो रही थी, पटह आदि बाजे पीटे जा रहे थे, हाथी चिंघाड़ रहे थे, घोड़े हिनहिना रहे थे, रथ तथा गाड़ियोंके पहियोंसे चेंचाहट हो रही थी तथा योद्धा भी बड़बड़ा रहे थे । इस प्रकार चारों ओरसे समुद्रका आराव हो रहा था ॥५४॥

पुन युद्धका अवसर मिलनेसे उत्पन्न योद्धाओंके अतिशय दर्पके कारण उनके प्राचीन घाव अपने आप फट पड़े थे, मानो स्वामीके अनुग्रहोंको अपनेमें न समा सकनेके कारण ही उन योद्धाओंके शरीर अपने आप फट पड़े थे ॥५५॥

सूता नृपाणां युधि नामधेयं वृत्तं निपेठुः कृतवृत्तबन्धम् ।
दग्धानि कर्पूररजांसि भूयाः स्ववर्मणोऽन्तश्चक्रुः श्रमार्त्ताः ॥५६॥

सूता इति–सूता बन्दिजना. युधि रणे नृपाणा राज्ञा वृत्त चरित निपेठु पठितवन्त । कथम्भूतम् ? नामधेय नाम्ना धेय नामगर्भितम् । पुन कृतवृत्तवन्धम् "एकाक्षरमारभ्य षड्विंशत्यक्षरं यावद्वृत्तमुच्यते" कृतो वृत्तैर्बन्धो रचना यस्य तत्तथोक्तम् । पुन श्रमार्त्ता सङ्ग्रामायासततगूर्त्तयो भूपा स्ववर्मणोऽन्त' आत्मीयसहननस्याग्रे दग्धानि चूर्णीकृतानि घनसाररजांसि कर्पूररेणून् चक्रुः विचिक्षिपु । समुच्चयालङ्कार ॥ ५६ ॥

विशुद्धवंशानि गुणानतानि प्रपीड्यमानान्यपि कार्मुकाणि ।
पर्यङ्कमारोप्य विलालितानि[1] मित्राणि मत्वेव कृतं विनेमुः ॥ ५७ ॥

विशुद्धेति–कार्मुकाणि धनूंषि विनेमु नम्रीबभूवु । किं कृत्वा ? पूर्वं मत्वा ज्ञात्वा । किम् ? कृतं करणीयमस्य कुले न नमनेव श्लाघ्य नो चेद्विशुद्धवंशत्वगुणानतत्वयोर्वैयर्थ्यमापनीपद्यत इति मत्वा नमन कार्यमिति भावोऽत्रोपन्यस्त । कथम्भूतानि ? विशुद्धवंशानि निर्गुणवेणूनि पुन. गुणानतानि गुणेन मौर्व्या आनतानि गुणानतानि । पुन प्रपीड्यमानान्यपि पुन. विलालितानि । कानीव ? मित्राणीव । किं कृत्वा ? पूर्वं पर्यङ्कमारोप्येति[2] ॥ ५७ ॥

वश्यानि मुष्टेरगतानि भेदं धनूंषि नम्राणि विपत्क्षमाणि ।
स्वदेहलीना स्थितिमत्यजन्ति नृणां कलत्राणि हितान्यतीयुः ॥ ५८ ॥

वश्यानीति—धनूंषि नृणा पुंसा कलत्राणि कुलकामिनी अतीयु अतिक्रान्तवन्ति । कथम्भूतानि ? हितानि । सुखप्रदानि पुन स्वदेहलीना स्थितिं मर्यादामत्यजन्ति, अजहति स्वकीयमन्दिरउदुम्बरेभ्यो बहिरनिर्गच्छन्तीत्यर्थ' । पुन कथम्भूतानि ? वश्यानि । कस्या ? मुष्टे मुष्टेरिति लक्षणयाऽऽज्ञा गृह्यते । मुष्टेराज्ञाया इत्यर्थ । पुन भेद पृथक्त्वमगतान्यप्राप्तानि । पुन वश्यानि । कस्या ? मुष्टे पाणिबन्धस्य करतलाङ्गुलीबन्धस्य । पुनर्भेद भङ्गमगतानि । पुन नम्राणि । पुनर्विपत्क्षमाणि आपत्समर्थानि । पुन स्वदेहलीनामात्मशरीरश्लिष्टा स्थितिमत्यजन्ति । श्लेषालङ्कार ॥ ५८ ॥

---

वन्दी लोग राजाओं-द्वारा युद्धस्थलोंपर किये वीरतापूर्ण कार्यो तथा नाम गोत्रादिको छन्दोबद्ध करके गाते थे तथा परिश्रमसे क्लान्त राजा लोग भी जलाये गये कपूरकी धूलको अपने शरीरपर लेप करते थे ॥५६॥

उत्तम बांससे बनाये गये, मौर्वीके द्वारा ताने गये, गोदमें रखकर विधिपूर्वक ठीक किये गये तथा पूरी शक्तिके साथ खींचे गये धनुष मानो उस समयके कर्त्तव्यको समझकर ही मित्रके समान खिंचकर बाण वर्षा कर रहे थे [प्रशस्त कुलमें उत्पन्न, सुसंस्कारोंसे दीक्षित, पालनेमें झुलाया गया मित्र सताये जानेपर भी पूर्वके उपकारोंको याद करके विनम्रताका ही व्यवहार करता है ॥५७॥

प्रबल मुट्ठीसे पकड़े गये, पर्याप्त खींचे गये तथापि न टूटे शत्रुओंको कष्ट देनेमें कुशल अपने आकारकी स्वाभाविकताको न छोड़नेवाले तथा भलेमें साधक धनुषोंने मनुष्योंकी पतिव्रता पत्नियोंको भी मात कर दिया था [कुलवधुएं भी आज्ञाकारी होती हैं, कभी कलह नहीं करती है, नम्र होती हैं, विपत्तिको भी सहन करती है तथा अपने भवनके द्वारसे बाहर नहीं जाती हैं] ॥५८॥

---

1 विलोलितानि–प०, द० । 2 श्लेषोपमाऽलङ्कार–प०, द० ।

स्वयं समानम्य शरासनानि स्तम्भञ्च हित्वा मधुरं ध्वनन्ति ।
प्रारेभिरेऽन्यान्विनतान्विधातुं परान्विनम्राः खलु नामयन्ति ॥५९॥

स्वयमिति–प्रारेभिरे प्रारब्धवन्ति । कानि ? शरा अस्यन्ते क्षिप्यन्ते एभिरिति शरासनानि धनूंषि । किं कर्त्तुम् ? विनतान् नम्रान् विधातुम् । कथभूतानि ? मधुर यथा तथा ध्वनन्ति नदन्ति । किं कृत्वा ? समानम्य विनम्रीभूय । कथम् ? स्वयमात्मना । कि कृत्वा ? स्तम्भ स्तब्धत्व हित्वा परित्यज्य । अर्थान्तरमाह —खलु निश्चयेन स्वय विनम्रा. परान्नामयन्ति ॥५९॥

ऋजुप्रकारेषु गुणेषु बाणाः शल्यं वहन्तो दधतो विपक्षान् ।
क्षणं न तस्थुश्चपलाः स्थिरेषु व्राताः खलानामिव सज्जनेषु ॥६०॥

ऋज्विति–न तस्थु न स्थिता. । के ? बाणा. शरा', कथम् ? क्षण मुहूर्त्तम्, कथम्भूता. ? चपलाश्चञ्चला', केषु मध्ये न तस्थु. ? गुणेषु मौर्वीषु, कथम्भूतेषु ? ऋजुप्रकारेषु प्राञ्जल्वृत्तिषु । पुन स्थिरेषु निश्चलेषु, किं कुर्वन्तः ? शल्य फलक वहन्तो वरन्त. । पुनर्विपक्षान् वीना पक्षिणा पक्षान् गरुत दधत धरन्त. । उपमार्थ, इव यथा खलाना दुर्जनाना व्राता' समूहाः सज्जनेषु क्षण न तिष्ठन्ति । केषु ? स्थिरेषु । पुन. ऋजुप्रकारेषु । कथम्भूताः व्राता ? चपलाः । श्लेषोपमालङ्कारः ॥६०॥

समुद्गिरन्तो नु शफान्मुखेभ्यश्छायां त्यजन्तः किमु पश्चिमार्धम् ।
देहान्क्षिपन्तो नु दृशां पुरस्ताद्विश्वेऽपि तेऽश्वल्लिपुरश्ववर्याः ॥६१॥

समुद्गिरन्त इति–ते लोकप्रसिद्धा अश्ववर्या अश्वल्लिपु आशुगतवन्त । कथम्भूता ? विश्वेऽपि सर्वेऽपि । अत्र नु शब्द उत्प्रेक्षाविषयी(य) धनञ्जयेनाङ्गीकृतोऽस्ति । तेनायमर्थ.-अश्ववर्या किमु कुर्वन्तो गतवन्त किन्त्वहो समुद्गिरन्तो नु समुद्गिलन्त इव समुद्गिरीतुमनस इवेत्यर्थ । कान् ? शफान् खुरान् । केभ्य. ? मुखेभ्य. वदनेभ्य' त्यजन्तो नु त्यक्तुमनस इव । काम् ? छाया भास्करादितेजसात्मीयशरीरोद्भवमाभासम् । कथम् ? पश्चिमार्द्धे पाश्चात्यभाग क्षिपन्तो नु क्षेप्तुमनस इव । कान् देहान् वपूंषि । कथम् ? पुरस्तात् पुरतः । कासा दृशा लोचनानामिति । वेगातिशयवचनविन्यासोऽत्राभिहित इति[1] ॥६१॥

रुद्धं शिलोत्कीर्णमिवावतस्थे मुक्तं चलं चित्तमिवाभ्यधावत् ।
अश्वीयमावर्त्तितमावृतत्तत्कुलालचक्रभ्रमलाघवेन ॥६२॥

रुद्धमिति–अवतस्थे स्थितम् । किम् ? तत् अश्वीय तुरङ्गसमूह । किमिव ? शिलोत्कीर्णमिव दृषद्घटितमिव । कथम्भूत सत् ? रुद्ध नियन्त्रित सत् । तथाऽभ्यधावत् सामस्त्येन त्वरते स्म । किम् ? अश्वीयम् ।

---

कठोरताको छोड़कर स्वयं नमनेवाले धनुषोंने मधुर ध्वनिके साथ शत्रुओंको विनम्र बनानेका कार्य प्रारम्भ कर दिया था । ठीक ही है क्योंकि स्वयं विनयशील व्यक्ति [जो कि अहंकारको छोड़ता है, मधुर बोलता है] अपने आप दूसरोंको शिष्ट बनाता है ॥५९॥

अत्यन्त सीधी तथा कसकर बँधी दृढ़ प्रत्यञ्चापर पक्षयुक्त अग्रिम भागमें धाराल और तीव्र गति युक्त बाण सज्जनोंके बीचमें दुर्जन-समूहके समान क्षणभर भी नहीं रुकते थे [सज्जन अत्यन्त सरल, स्थिर और गुणी होते हैं । दुर्जन शंकाशील अथवा स्वयं भी चंचल तथा विरोध करनेमें दक्ष होते हैं] ॥६०॥

अपनी टापोंको मुखसे छीलतेके समान [लम्बी फलांगमें मुँह और पैर बराबर फैल जाते हैं] अपने ही शरीरको अपनी नजरसे भी आगे दौड़ाते हुए सबके सब वे श्रेष्ठ घोड़े वेगसे आगे बढ़े चले जा रहे थे ॥६१॥

लगाम खींचनेपर वह अश्वसेना पत्थरके घोड़ेके समान रुक जाती थी, छोड़ते ही

१ उत्प्रेक्षाऽलङ्कार –प०, द० ।

कथम्भूत सत् ? मुक्त विसृष्टम् । पुनश्चल चपलम् । किमिव ? चित्तमिव मन इव । तथाऽऽवृतत् बभ्राम । कथम्भूत सत् ? आवर्तित भ्रमितम् । कथम् ? कुलालचक्रभ्रमलाघवेन कुम्भकारचक्रभ्रमणलाघवेनेति ॥६२॥

**रम्याः पदार्था इव मानसानि स्वान्तानि जीवानिव जन्तवोऽपि ।**
**देहानि वात्या चकृषुस्तुरङ्गाः स्कन्धान्तरन्यस्तयुगा रथौघान् ॥६३॥**

रम्या इति—अत्याचकृषुराकृष्टवन्त. । के ? तुरङ्गा अश्वा । कान् ? रथौघान् शकटसमूहान् । कथम्भूतास्तुरङ्गा ? स्कन्धान्तरन्यस्तयुगा असमध्यारोपितयूपा । क इवात्याचकृषु ? पदार्था इव यथा पदार्था बहिरङ्गवस्तुविषया मानसानि चेतासि अत्याकर्षयन्ति । कथम्भूता ? रम्या मनोहरा इव तथा स्वान्तानि जीवान् प्राणान् अत्याकृषन्ति तथा जन्तवोऽपि इव यथा जन्तव. प्राणिन देहान् शरीराणि अत्याकृषन्ति । उपमालङ्कृति ॥६३॥

**नामाददानैः परुषं परेषां निषादिभिः संख्यशिरस्यसंख्याः ।**
**प्रासाः पतन्तोऽत्यशुभन्विमुक्ता विन्ध्यस्य वंशा इव वातधूताः ॥६४॥**

नामेति—प्रासा सेल्ला (शला) यष्टय इत्यर्थ । अत्यशुभन् विरेजु । कथम्भूता ? असख्या' गणनातीता. । पुन सख्यशिरसि रणमध्ये पतन्त' । कथम्भूता ? निषादिभिरश्ववारै मुक्ताः । कथम्भूतै. ? परुष कर्कश यथा तथा परेषा शत्रूणा नामाददानै गृह्णद्भि । क इव ? वातधूता वायुकम्पिता विन्ध्यस्य वशा वेणव इव । उत्प्रेक्षालङ्कार ॥६४॥

**उत्कीर्णा इव कुलपर्वता गजानामाकारैर्मदजलनिर्झरं वहन्तः ।**
**धावन्ति प्रतिदिशमुन्नताः स्म नागाः क्रोधाग्निज्वलितदृशः सहैमकक्ष्याः ॥६५॥**

उत्कीर्णा इव (इति)—नागा हस्तिन प्रतिदिश धावन्ति स्म शीघ्रतया प्रसर्पन्ति स्म । किं कुर्वत ? मदजलनिर्झर वहन्त । पुनरुन्नता । पुन क्रोधाग्निज्वलितदृश कोपज्वलनज्वलितलोचना' । पुन. सहैमकक्ष्या ससुवर्णगण्डाः । पुन किंविशिष्टा इव ? गजानामाकारै प्रसादकोपाभ्या जनिताभि प्रकृतिभिरुत्कीर्णा उल्लिखिता कुलपर्वता इव[1] ॥६५॥

**सामजा मदवशान्मतिहीना वक्रमङ्कुशमृजुं युधि चक्रुः ।**
**प्रायशः परिजहाति जनोऽयं तीव्रमेव समुपेत्य शठत्वम् ॥६६॥**

सामजा इति—सामजा गजा युधि रणे वक्रमनृजुम् अङ्कुश सृणिमृजु प्राञ्जल चक्रु कृतवन्त. । कथ-

---

वे चंचल मनके समान दौड़ते थे, तथा कुम्हारके चक्रके समान तेजी तथा स्वाभाविकताके साथ वे दायें-बायें मुड़ते तथा चक्कर काटते थे ॥६२॥

कंधोंके मध्यमें जुएको बंधवाकर वे घोड़े रथसमूहको उसी प्रकार वेगसे खींचते थे जैसे संसारके मनोहर पदार्थ मनको लुभाते हैं, अथवा अन्तरंग चेतना जीवोंको वहन करती है अथवा जैसे जीव शरीरोंको लिये फिरते हैं ॥६३॥

संघर्षकी उत्कट अवस्थामें, कर्कश स्वरसे शत्रुओंको नाम लेकर चुनौती देते हुए अश्वारोहियोंके द्वारा छोड़े गये असंख्य गिरते हुए फरसे ऐसी भीषण ध्वनि करते थे, जिसे सुनकर आँधीसे कँपाये गये विन्ध्य पर्वतके बाँसोंकी ध्वनिकी याद आती थी ॥६४॥

मदजलके झरनोंको गण्डस्थलसे बहाते, क्रोधकी अग्निसे अरुण नेत्र तथा सोनेकी शृंखलासे बद्ध विशाल हाथी सब दिशाओंमें दौड़ते हुए ऐसे लगते थे मानो हाथियोंके आकारके कुलाचल ही विधिने खोदे हैं [कुलपर्वतोंसे भी परागयुक्त पानीके झरने बहते हैं, ऐसे साँप रहते हैं जिनकी आँखें क्रोधसे भी जलती हैं तथा सोनेके पार्श्व या खानें होती हैं] ॥६५॥

मदोन्मत होनेके कारण विवेकहीन हाथियोंके द्वारा युद्धमें टेढ़े अंकुश सीधे कर

---

१. उत्प्रेक्षाऽलङ्कार—प०, द० ।

म्भूताः मतिहीनाः बुद्धिविकला. । कस्मात्मदवशात् मदाधीनत्वात् । युक्तमेतत् । अथ प्रत्यक्षो जनः प्रायशः बाहुल्येन शठत्व खल्गति पूर्वमेत्य परिजहाति परित्यजति । कथम्भूत शठत्वम् ? तीव्र सोढुमशक्यपरिणतमेव । अत्रोभयबलातिशयोक्तिरुक्ता[1] ॥६६॥

[2]मुखकृतकपटाः प्रमत्तचित्ताः परुपरुपश्चरणेषु सत्स्वखिन्नाः ।
गुरुकुलमतिचक्रमुः कुशिष्या हितमिव संयति संयतं गजेन्द्राः ॥ ६७ ॥

मुखेति–गजेन्द्रा. गुरुकुल महामात्रसमूहमतिचक्रमु' अतिक्रामन्ति स्म । क ? सयति सड ग्रामे । कथम्भूतम् ? हितम् अव्यभिचारि । पुनः सयत प्रयत्नायत्त वचनचरणसङ्केताङ कुशप्रहारव्यापारप्रवीणमित्यर्थः । कथम्भूताः ? मुखकृतकपटाः मुखे कृत कः हस्तिनीमूत्रार्द्र पटो येपा ते । पुनः प्रमत्तचित्ताः प्रकर्षेण मत्त प्रमादित चित्त येपा ते । उन्मादिचेतस्का इत्यर्थ । पुन परुपरुपः कठोररोपाः । पुनरखिन्ना अश्रान्ताः । केषु सत्सु ? रणेषु सत्सु विद्यमानेपु । उपमार्थ । कुशिष्या (इव यथा) दुष्टाभिप्राया. विनेयाः गुरुकुल सूरिसन्दोहमथवा गुरुवशमतिक्रामन्ति । क ? सयति तपसि । कथम्भूतम् ? हित सुखदम् । पुन. सयतमात्मनिष्ठम् । कथम्भूता. कुशिष्या. ? मुखकृतकपटा मुखे कृत कपट कौटिल्य यैस्ते । पुनः प्रमत्तचित्ता. सप्रमादहृदयाः । पुन. परुषरुप. । केषु ? चरणेपु चरित्रेषु । कथम्भूतेपु ? चरणेपु सत्सु शास्त्रोक्तेपु । कथम्भूताः ? अखिन्ना अप्रवीणा. । अत्र यथायोग्यमुपमानोपमेययोगो योज्य. । श्लेपालङ्कार. ॥ ६७ ॥

[3]उभयपार्श्वगतान्निशितान्शराञ्शयुसमेन करेण विपाटयन् ।
गजगणः शुशुभे व्रणगह्वरैः सपदि सौध इवामलजालकैः ॥ ६८ ॥

उभयेति– गजगण. व्रणगह्वरै अरुश्च्छिद्रै. शुशुभे बभौ । किं कुर्वन् ? शरान् बाणान् विपाटयन्नुत्पाटयन् । कथम्भूतान् ? निशितान् । कथम्भूतान् ? उभयपार्श्वगतान् वामदक्षिणकुक्षिप्रोतान् । केन कृत्वा ? करेण शुण्डादण्डेन । कथम्भूतेन ? शयुसमेनाजगरसदृशेन । कथम् ? सपदि शीघ्रम् ।

उपमार्थ.–यथा सौधो गेहोऽ(हम्र्य)मल्जालकैर्निर्मलगवाक्षजालकैर्भाति । उपमालङ्कार ॥ ६८ ॥

---

दिये गये थे। लौकिक प्राणी भी तीव्र दुख पाकर बहुधा अपनी शठताको स्वयमेव छोड़ देता है ॥६६॥

अन्वय—मुख-कृत-कपटा प्रमत्तचित्ता' परुपरुप च सत्सु रणेपु अखिन्ना गजेन्द्रा संयतं हितं गुरुकुल कुशिष्या इव सयति अतिचक्रमु ।

हथिनीके मूत्रसे आर्द्र मुख होनेके कारण अत्यन्त मद-विह्वल फलतः भीषण कुपित तथा चलते हुए युद्धमे कुछ-कुछ उदासीन हाथियोंने अत्यन्त अनुशासन प्रेमी तथा हितू अपने महान् वंशकी अथवा महावत-समूहकी भी कुशिष्यके समान युद्धस्थलमें ही अवज्ञा की थी [कुशिष्य भी कपटको सर्व प्रधान मानते हैं, इनका मन सदैव प्रमादी रहता है, वे कठोर और क्रोधी होते हैं तथा समीचीन आचरणके पालनेमें उदासीन होते हैं फलतः परम संयमी निश्रेयसदाता अपने गुरुसमूहकी संयमाचरणमें उपेक्षा करते हैं ] ॥६७॥

दोनों पार्श्वोंमें चुभे तीक्ष्ण, अजगरके समान बाणोंको विशाल सूंड से निकालते हुए हाथी अपने शरीरपर लगे विशाल घावोंके द्वारा वैसे ही दिखते थे जैसे स्वच्छ वातायनोंके द्वारा उन्नत भवन लगते हैं ॥६८॥

१ अर्थान्तरन्यासाऽलङ्कार –प०, द० । २ अत्र औपच्छन्दसिक नाम मात्रावृत्तम् । तथा च वृत्तरत्नाकरे–पर्यन्ते यौ तथैव शेषं त्वौपच्छन्दसिकं सुधीभिरुक्तम्" (२-१३) । ३ द्रुतविलम्बितवृत्तम् । यथा हि वृत्तरत्नाकरे–"द्रुतविलम्बितमाह नभौ भरौ ।" (३-५०) ।

[1]इति स पृतनां दृष्ट्वाऽविद्यामिव प्रतिबन्धिनीं
जलनिधिरिव क्षुभ्यँल्लक्ष्मीधरोऽनुगतोऽग्रजम् ।
धनुरपि दधत्त्रेपे जिष्णुः सहायविशङ्कया
न च भुजबलाद्वीरोऽन्यस्माद्धनं जयमिच्छति ॥ ६९ ॥

इति धनञ्जयविरचिते राघवपाण्डवीये महाकाव्ये तुमुलयुद्ध नाम पञ्चमः सर्ग ॥ ५ ॥

इतीति—स लक्ष्मीधर. लक्ष्मणः त्रेपे लज्जित । कया सहायविशङ्कया सहकारिभीत्या । कथम्भूतः ? जिष्णुर्जयनशील. । किं कुर्वाण ? दधत् । किमपि ? धनुरपि शरासनमपि । कथम्भूत ? अग्रज राममनुगत । पश्चाद्गत. । पुन जलनिधिरिव समुद्र इव क्षुभ्यन् क्षोभ गच्छन् । किं कृत्वा ? प्रतिबन्धिनीं प्रतिकूला पृतना सेना दृष्ट्वाऽवलोक्य । कामिव ? अविद्यामिव इन्द्रजालमिव । कथम् ? इत्युक्तप्रकारेण । अधुनाऽर्थान्तर प्रदर्श्यते । युक्तमेतत् । इच्छति । कोऽसो ? वीर । किम् ? धन द्रव्य जयञ्च । कस्मात् ? भुजबलात् बाहु-सामर्थ्यात् । यस्माद्वीरो नेच्छति धन जयञ्च । कस्मात् ? अन्यस्मात्सहायादे ।

भारतीय —स जिष्णुरर्जुन त्रेपे सहायविशङ्कया । किं कुर्वन् ? धनुरपि दधत् । कथम्भूत. ? अग्रजं युधिष्ठिरमनुगत. भीम वा । पुन कथम्भूत. ? लक्ष्मीं विभूति शरीरशोभा वा धरतीति लक्ष्मीधर. । शेष समानम् । अर्थान्तरन्यास. ॥६९॥

इति निरवद्यविद्यामण्डनमण्डितपण्डितमण्डलीमण्डितस्य षट्तर्कचक्रवर्तिन श्रीमद्विनयचन्द्रपण्डितस्य गुरोरन्तेवासिनो देवनन्दिनाम्न शिष्येण नेमिचन्द्रेण विरचिताया द्विसन्धानकवेर्धनञ्जयस्य राघवपाण्डवीयापरनाम्न काव्यस्य पदकौमुदी नाम दधानाया टीकाया तुमुलयुद्धव्यावर्णनो नाम पञ्चम सर्ग ॥५॥

---

अन्वय—अविद्यामिव प्रतिबन्धिनीं पृतना दृष्ट्वा लक्ष्मीधर जलनिधिरिव क्षुभ्यत्, अग्रजं अनुगत स जिष्णु धनुरपि दधत् सहायविशङ्कया त्रेपे । हि वीर भुजबलात् धन जय इच्छति च न अन्यस्मात् ।

अविद्याके समान कैवल्य-प्राप्तिमें बाधक विरोधियोंकी सेनाको देखकर लक्ष्मीके निवास क्षीर-समुद्रके समान बड़े भाई ( राम अथवा भीम )का परम भक्त विजयका इच्छुक वह लक्ष्मण अथवा अर्जुन धनुषको उठाते हुए भी इसलिए लजा गया था कि लोग कहेंगे कि उसने धनुषकी सहायता तो ली थी । क्योंकि वीर पुरुष केवल अपने भुजबलके द्वारा ही धन तथा विजयकी कामना करते है, किसी दूसरेके द्वारा नहीं ॥६९॥

निर्दोषविद्याभूषणभूषित, पण्डितमण्डलीके पूज्य, षट्तर्कचक्रवर्ती, श्रीमान् पण्डित विनयचन्द्र गुरुके शिष्य देवनन्दीके शिष्य, सकलकलाकी चातुर्यचन्द्रिकाके चकोर नेमिचन्द्र-द्वारा विरचित कवि धनञ्जयके राघवपाण्डवीय नामसे ख्यात द्विसधान-काव्यकी पदकौमुदी टीकामें तुमुलयुद्ध व्यावर्णन नामक पञ्चम सर्ग समाप्त ।

---

१ अत्र हरिणी वृत्तम् । तल्लक्षण हि—"रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा ।" [ वृ र. ३-९२ ] ।

# षष्ठः सर्गः

[1]ततः प्रयुक्तभ्रुकुटिं स दुर्धरो निजोद्धतं विक्रमकालसाधनः।
अरातिघाताय तमग्रजं व्रजन्नमर्षमुद्योग इवान्वगद्युतत् ॥१॥

तत इति–ततः पृतनादर्शनानन्तर स लक्ष्मणः त लोकविख्यातमग्रज राममन्वग् पश्चाद्गामी अरातिघाताय शत्रुवधाय व्रजन् गच्छन् अद्युतच्छोभते स्म। कथम्भूतम्? प्रयुक्तभ्रुकुटिं प्रयुक्ता प्रयोजिता भ्रुकुटिर्भ्रूग्रन्थिर्येन त पुनः निजोद्धतमात्मना गर्विष्ठम्। कथम्भूतः? दुर्द्धरः दु.खेन धर्त्तु शक्यः पुनः विक्रमकालसाधन. विक्रमकाल एव साधन यस्य स. पौरुषसमयसैन्य इत्यर्थः। अर्थान्तर प्रदर्श्यते–क इव, अमर्षं क्रोधमनुगामी उद्योग उद्यम इव।

भारतीयः—स अर्जुन त युधिष्ठिर भीम वा अन्वक् अद्युतत्, अन्यत्समानम्। उपमालङ्कारः ॥१॥

कृतातिपातावधिकौ समुद्धतौ हतावधी चापनयावलम्बिनौ।
उभौ न्यरुद्धां निवहं विरोधिनां तमर्थकामाविव धर्मसंग्रहम् ॥ २ ॥

कृतातिपाताविति–उभौ द्वौ रामलक्ष्मणौ त लोकप्रसिद्ध विरोधिना वैरिणा निवह समूह न्यरुद्धा निरुद्धवन्तौ। कथभूतौ? कृतातिपातौ विहितोपप्लवौ पुनः अधिकौ क्षात्रधर्मेण जगतामुपरि स्थितौ पुनः समुद्धतौ आत्मतेजसाऽत्ममन्यौ पुनः हतावधी अतिक्रान्तमर्यादौ रामलक्ष्मणयो. शौण्डीर्यादिगुणानामियत्ता न केनापि कर्त्तु शक्यत इति भावोऽत्र लक्ष्यते। पुन. चापनयावलम्बिनौ धनुर्विद्यावष्टम्भिनौ। कौ कमिव निरुद्ध. यथाऽर्थकामौ धर्मसग्रह पुण्यसञ्चयमिव। कथभूतौ? अपनयावलम्बिनौ नीतिमार्गं विहायानीतिमार्गे प्रविष्टौ।

भारतीय पक्षे–उभौ तौ भीमार्जुनौ, शेष समम्। उपमा ॥२॥

जयश्रियं दक्षिणमंसमंसलौ तनुं महावेगमहंयुतां मनः।
शरासनं ज्यां नृपती भयं रिपुं समं समारोपयतः स्म संयति ॥ ३ ॥

जयेति–नृपती नरेश्वरौ जयश्रिय दक्षिणमस स्कन्ध तथा तनु शरीर महावेग तथा अहयुतामहङ्कार मन. तथा ज्या मौर्वी शरासन तथा भय रिपु सयति सग्रामे समारोपयत' स्म। कथम्? सममेकहे (वे) ल्या। कथम्भूतौ? असलौ पीनभुजशिरसौ कूर्मोन्नतस्कन्धावित्यर्थ। अत्रासमहावेगमनः शरासनरिपुप्रयोगाणा

---

शत्रुसेनाको देखनेके बाद असह्य पराक्रमी, निजी पुरुषार्थ तथा अदृष्ट रूपी सेनासे युक्त वह लक्ष्मण अथवा अर्जुन स्वभावसे उग्र फलतः टेढ़ी भ्रुकुटियुक्त विख्यात बड़े भाई राम अथवा भीमके पीछे-पीछे शत्रुओंका संहार करनेके लिए जाता हुआ ऐसा शोभित हुआ था जैसा रोपके पीछे जाता पुरुषार्थ लगता है ॥१॥

उपद्रव अथवा संहारके कर्ता, समस्त क्षत्रियोमे श्रेष्ठ, अन्यायके कारण अत्यन्त उग्र, निस्सीम गुणोंके भण्डार, युद्धक्षेत्रमें केवव धनुप ( शस्त्र ) नीतिके अनुयायी वे राम तथा लक्ष्मण अथवा भीम तथा अर्जुन शत्रुओंकी सेनाको उसी तरह समाप्त कर रहे थे जिस प्रकार अर्थ तथा काम पुरुपार्थका सेवन पूर्व सचित धर्म ( पुण्य ) को समाप्त करता है [ पूर्वोपार्जित पुण्यके फलोन्मुख होनेपर ही अर्थ-कामोपयोगी साधन मिलते हैं। अर्थात् अर्थ कामके सेवनसे पुण्य समाप्त हो जाता है ] ॥२॥

पुष्ट तथा उन्नत स्कन्धधारी राम-लक्ष्मण अथवा भीमार्जुन युद्धक्षेत्रमें एक साथ ही आत्मगौरवपूर्ण मन, अत्यन्त वेगवान शरीर, दॉया कन्धा, धनुप तथा मौर्वी और शत्रुओंके

---

१. सर्गेऽस्मिन् वशस्थवृत्तम्। लक्षण हि–"जतौ तु वशस्थमुदीरितं जरौ।" [वृ० र० ३–४७]।

पश्चानामनुष्य ( रूय ) कर्मत्वम् । जयश्री तन्वहमनोयुतज्याभयप्रयोगाणा पश्चानाञ्च पुनर्द्वितीयकर्मकत्व बोद्धव्यम् । हेतुमद्भूताया. समारोपणक्रियाया द्विकर्मकत्वादिति । समुच्चयालङ्कारः ॥३॥

**तपःसमाधिष्विव तौ तपस्यतां प्रसज्य कर्णेष्विव दिक्षु दन्तिनाम् ।**
**दिगीश्वराणां हृदयेष्विवायतं विकृष्य मौर्वीं विनिजघ्नतुस्तराम् ॥ ४ ॥**

तत इति–तदनन्तरं तौ रामायणमहाभारतयोर्मुख्यौ नरेश्वरौ मौर्वीं जीवां विनिजघ्नतुस्तरामतिशयेनास्फालितवन्तौ । किं कृत्वा ? पूर्वमायतमाकर्णान्तं विकृष्य । किं कृत्वा ? पूर्वं प्रसज्य समालीय । केष्विव ? तपस्समाधिष्विव तपोऽनुष्ठानेष्विव । केषाम् ? तपस्यता तप कुर्वतां पुंसाम् । केष्विव ? कर्णेष्विव श्रवणेष्विव । केषाम् ? दन्तिनाम् । कासु ? दिक्षु दिशामित्यर्थं । तेनायमर्थ.–दिग्गजानामिति सम्बन्धार्थेविप ( षेय ) सप्तमी बोद्धव्येति । सम्बन्धस्याप्येतत्सम्बन्धार्थाभिधायकत्वात् । केष्विव ? हृदयेष्विव स्वान्तेष्विव । केषाम् ? दिगीश्वराणा दिक्पालानाम् । उत्प्रेक्षालङ्कार ॥४॥

**ज्ययोर्विरिघं विनिशम्य धन्विनां निपेतुरस्त्राणि करान्मनांसि च ।**
**श्लथानि पूर्वाणि पराणि योषितां घनानि गूढान्यभवन्नभःसदाम् ॥ ५ ॥**

ज्ययोरिति–अस्त्राणि तोमरचक्रादीनि धन्विना धनुर्धराणा कराद्धस्तात् निपेतुर्निपतितानि । अत्र चकार. समुच्चयार्थस्तेनायमर्थो निवेदितो भवति । धन्विना मनासि च निपेतु' । यानि पूर्वाणि प्राक्तनानि आलिङ्गनानि प्रेमजानि घनानि दृढानि सन्ति तानि श्लथानि अभवन् जातानि । यानि च पराणि भयजानि श्लथानि सन्ति तानि च घनान्यालिङ्गनानि बभूवुरिति कवेरभिप्राय. । मतान्तरमिद यानि पूर्वा ( ण्यान्यानि ) घनानि प्रेमरसरसायनरसिकानि तानि मनासि गूढानि प्रच्छन्नवृत्तीनि अभवन् सञ्जातानि । यानि पराणि प्रेमकलहकालजनितानि मनासि श्लथानि शिथिलानि तानि घनानि प्रेमरसरसायनरसिकानि अभवंश्च । कासाम् ? योषिता कामिनीनाम् । केषाम् ? नभ.सदा नभसि सीदन्तीति नभ सद तेषा देवानाम् । किं कृत्वा ? पूर्वं विनिशम्य श्रुत्वा । कम् ? ज्ययोर्विरिघम् ध्वनिम् । भयभीताना देवयोषिता मनासि प्रियालिङ्गने सञ्जातानीति । समुच्चय ॥५॥

**गुणेन लोकं निनदेन दिङ्मुखं रुषाऽन्तवह्निं वपुषापि पूषणम् ।**
**दृढेन चालीढपदेन मेदिनीं गणं रिपूणामविवेष्टतां शरैः ॥ ६ ॥**

गुणेनेति–गुणेन सौ(शौ)ण्डीर्यवीर्य्यौदार्यादिलक्षणेन कृत्वा लोकं जन तथा निनदेन सिंहध्वनिना कृत्वा दिङ्मुखमाशावदन तथा रुषा रोषेण कृत्वा अन्तवह्निं प्रलयानल तथा वपुषा शरीरेणापि कृत्वा पूषणमादित्य तथा दृढेनामङ्गेन आलीढपदेन आलीढे पश्चादायतेऽधो वक्रोर्ध्ववक्रे पदे यत्र तदालीढपद स्थानक

---

भय इन सबको एक साथ चढ़ा देते थे [ मनमें विचार आते ही शरीर क्रियाशील होता था और शत्रु गिरते नजर आते थे ] ॥३॥

एकाग्रता तथा सातत्यकी दृष्टिसे तपस्वियोंकी समाधिके समान, खींचनेकी शैलीकी अपेक्षासे दिग्गजोंके कानोंपर तथा विशालताकी अपेक्षा दिक्पालोंके हृदयोंमें ही फँसायी गयी के समान धनुषकी लम्बी डोरीको खींचकर वे दोनों ( राघव-पाण्डव ) भाई तेजीसे प्रहार कर रहे थे ॥४॥

राम लक्ष्मण अथवा भीमार्जुनकी उक्त ज्याका प्रचण्ड टंकार सुनकर शत्रु-योद्धाओंके मन ठंडे पड़ गये थे तथा हाथोंसे शस्त्र गिर गये थे। इस प्रकार इन स्वर्गवासियोंके पूर्व बद्ध अज्ञात कर्म छूट गये थे तथा भविष्यके दृढ़ हो गये थे [ अथवा ज्याकी टंकारसे भीत देवियोंने पहिले विह्वल होकर प्रेमालिंगन ढीला कर दिया था तथा सुरक्षाके लिए बादमें जोर से चिपक गयीं थीं ] ॥५॥

इस प्रकार इन राघव-पाण्डव बन्धुयुगलोंने अपने पराक्रमादि गुणोंसे विश्वको, हुंकारसे समस्त दिशाओंको, क्रोधके द्वारा प्रलयानलको, शरीरकी आभासे सूर्यको, स्थिर

तेनालीढपदेन कृत्वा मेदिनीं महीं तथा शरैर्बाणैः कृत्वा रिपूणा द्विपा गणमविवेष्टता वेष्टितवन्तौ तौ कर्तृभूता नृपती। समुच्चयः ॥ ६ ॥

**यशोवकाशस्य विधित्सया शरैर्दिशः परासारयतोरिवायतम्।**
**विकृष्यमाणं युगमेव गव्ययोः ससार पश्चान्न पदं रणे तयोः ॥ ७ ॥**

यश इति–गव्ययोर्मौर्व्योः युगमेव द्वितयमेव आयतमाकर्णान्त यथा भवति तथा आकृष्यमाण ससार अपसृत तथा तयोर्नरेन्द्रयो. रणे पद चरण पश्चात्पश्चाद्भागे न ससार। कथम्भूतयोरिवोत्प्रेक्षितयोः ? यशोऽवकाशस्य विधित्सया कर्तुमिच्छया शरै. बाणैः दिशः आशा परासारयतोरिव उत्सारयतोरिव। उत्प्रेक्षा ॥ ७ ॥

**नृपौ रुषाऽपातयतां शिलीमुखान्समं सपत्ना हृदयान्यपातयन्।**
**विदूरमुच्चैः पदमध्यरुक्षतां भियाध्यरुक्षन्युधि वामलूरकम् ॥ ८ ॥**

नृपाविति–नृपौ शिलीमुखान् बाणान् रुषाऽमर्षेण अपातयता पातितवन्तौ। सपत्नाः शत्रवः हृदयानि अपातयन्। कथम् ? सम युगपत्। अत्रायमर्थः–तया नरेन्द्राभ्या मुक्तया बाणावल्या सार्द्धमेव हृदयानि शत्रवः पातयन्ति स्म। तौ नृपो नरेन्द्रौ उच्चै· पदमुच्चपदवीमध्यरुक्षतामारूढवन्तौ। कथम् ? विदूरमलङ्घ्यम्। सपत्ना विपक्षः वामलूरक वल्मीक भिया भयेनाध्यरुक्षनारुरुक्षु.। कथम् ? सम युगपत्। सहोक्तिरलङ्कार.[1] ॥ ८ ॥

**इषून्विमर्देऽमुचतां शरासनं शरानसूनप्यमुचन्नरातयः।**
**अजस्रमश्रु(मस्र) व्यमुचत्प्रियाजनस्तथास्थिताः स्पर्द्धममी न तत्यजुः ॥९॥**

इषूनिति–तौ नृपती विमर्दे सङ्ग्रामे इषून् बाणान् अमुचता मुक्तवन्तौ तथा तयोर्मुक्तबाणावल्यनान्तरीयकत्वेन अरातयः शरासन धनुस्तथा शरान् असून्प्राणानपि अमुचन् तथा प्रियाजनः भार्यासमूह. अस्रमश्रु अजस्रम अनवरत व्यमुचत्। तथापि अमी इमे प्रत्यक्षरूपनिरूपिता अरातय. स्पर्द्धमीर्ष्या न तत्यजुः त्यक्तवन्तः। कथम्भूता. ? तथास्थिता. तादृशी प्राणान्तिकीमवस्था प्राप्ता इति[2] ॥ ९ ॥

**विशेषसूत्रैरिव पत्रिभिस्तयोः पदातिरुत्सर्ग इवाहतोऽखिलः।**
**पलायितोऽन्योन्यमवेक्ष्य निस्त्रपः सहाभिभूतस्त्रपते हि कस्य कः ॥१०॥**

विशेषसूत्रैरिति– तयोः नृपयो पत्रिभिः शरैराहतस्ताडित. पदातिः भृत्य पलायितो विद्रुत।

---

तथा शुद्ध पैंतराके द्वारा पृथ्वीको और बाणवर्षाके द्वारा शत्रुओंके समूहको घेर लिया था ॥६॥

अपनी कीर्तिके प्रसारके लिए पर्याप्त स्थान करनेकी इच्छासे ही युद्धमें बाणवर्षाके द्वारा दिशाओंको ढकेलते हुएसे उन राघव-पाण्डव बन्धुओंके धनुषोंकी विशाल ज्याकी जोड़ी ही खींच जानेपर आगे पीछे होती थी किन्तु इनके पैर युद्धमें कदापि पीछे नहीं पड़ते थे ॥७॥

जब युद्धमें कुपित होकर राघव पाण्डव राजा शत्रुओंके ऊपर बाण गिराते थे तभी शत्रु लोग अपने हृदयोंको गिरा देते (निराश हो जाते) थे ये दोनों विजयी राजा दुष्प्राप्य उन्नत महाराज पदपर आरूढ़ होते थे तथा भयत्रस्त शत्रु दूर या पर्वतों पर जाकर बिलोंमें छिप जाते थे ॥८॥

राघव-पाण्डव वीर घोर संग्राममें यदि केवल बाण छोड़ते थे तो अभागे शत्रु राजा बाण, धनुष और अपने प्राण भी त्याग देते थे। इनकी प्यारी पत्नियाँ निरन्तर अश्रु बहातीं थीं किन्तु ये शत्रु राजा उस दुर्दशाको प्राप्त होकर भी ईर्ष्याको नहीं छोड़ते थे ॥९॥

उनके बाणोंके द्वारा सब तरफसे वेधी गयी पदाति सेना वैसे ही भाग खड़ी हुई थी

---

१. सहजा पक्षोक्ति' प०, द०। २. वक्रोक्ति–प०, द०।

कीदृक् ? अखिलः पुनः निस्त्रपो निर्लज्जः। किं कृत्वा ? अन्योन्यं परस्परमवेक्ष्यावलोक्य। उपमार्थं क इव ? विशेषसूत्रैरपवादलक्षणैः विशेषोक्तविधिभिराहत उत्सर्गः सामान्योक्तो विधिरिव। अर्थान्तरमुपन्यस्यते—हि स्फुटं सहाभिभूतः सार्द्धं पराजितः प्राणी कः कस्य त्रपते लज्जते ? अपि तु न कोपि कस्यापि[1] ॥ १० ॥

**स तिर्यगन्वक्पुरतश्च विद्विषां दरीषु गुल्मेषु ददर्श तौ गणः।**
**असूनिवान्वेष्टुममुष्य चक्षुषोर्मनस्विनौ बभ्रमतुर्मनःस्वपि ॥११॥**

स इति–तौ लोकप्रसिद्धौ नृपती कर्मभूतौ सः विद्विषा वैरिणा गणः तिर्यग्वामदक्षिणादिभागे तथा अन्वक् पाश्चात्यभागे पुरतश्चाग्रतोऽपि दरीषु कन्दरासु तथा गुल्मेषु क्षुद्रक्षुपादिषु ददर्श। तथा तौ मनस्विनौ सचेतस्कौ अमुष्य विद्विषा गणस्य अधिकरणभूतयोः चक्षुषोः लोचनयोः मनःस्वपि अमुष्य विद्विषा गणस्य असून्प्राणान् अन्वेष्टुमिव बभ्रमतुः पर्यटितवन्तौ। उत्प्रेक्षालङ्कारः ॥११॥

**ययुर्विदेशं विदिशं जगाहिरे धुनीरगाधा विलल‍ङ्घिरे गिरीन्।**
**धृताः समुद्रस्य विलोलवीचिभिर्भयेऽपि भृत्या न पराक्रमं जहुः ॥१२॥**

ययुरिति–भृत्या पदातयः विदेशं ययुः गतवन्तस्तथा विदिशं ययुः पुनः धुनीः नदीः जगाहिरे व्यालोडितवन्तः। कथंभूताः धुनीः ? अगाधा अतलस्पर्शिनीः। पुनः गिरीन् पर्वतान् विलल‍ङ्घिरे विशेषेणोल्लङ्घितवन्तः तथा समुद्रस्य विलोलवीचिभिः चञ्चलतरङ्गैः कर्त्रीभिः धृताः। एवञ्च सति पराक्रमं न जहुः न त्यक्तवन्तः। क्व सत्यपि ? भयेऽपि। अत्र भावो व्यज्यते। तौ नृपती व्यालोक्य विपक्षपदातीनां प्रचुरतरभयवशाद्विदेशविदिगादिपदार्था पलायनाय स्तोकतरा जाताः पलायनं तावत्प्रचुरतरमासीद् भयवशादिति[2] ॥१२॥

**विवांसि भान्वोरिव बिभ्रतोस्तयोर्विशङ्कया केचन कन्दरोदरम्।**
**तमिस्रसङ्घा इव तेऽधिशिश्यिरे क्व नष्टमार्गा न विशन्ति जन्तवः ॥१३॥**

विवासीति–ते केचन शत्रवः विशङ्कया कन्दरोदरं गुहामध्यमधिशिश्यिरे अधिष्ठितवन्तः। कयोर्विशङ्कया ? विवासि तेजांसि बिभ्रतोर्धरतोस्तयोर्नरेन्द्रयोः। कथंभूतयोरिव तयोः ? भान्वोरिव। कथंभूता केचन ? तमिस्रसङ्घा इव अन्धकारसमूहा इव यथा कन्दरोदरमधिशेरते। अर्थान्तरमुपन्यस्यते-नष्टमार्गाः प्रभ्रष्टसञ्चारा के जन्तवः प्राणिनः क्व न विशन्ति अपि तु सर्वस्मिन् स्थाने विशन्त्येव[3] ॥१३॥

---

जैसे शास्त्रके अपवाद (विशेष) सूत्रोंके द्वारा समस्त उत्सर्ग (सामान्य विधि) किया जाता है। एक दूसरेको देखकर उन पदातियोंका संकोच या लज्जा खुल गयी थी और उचित ही है क्योंकि एक साथ पराजित, अतएव भागते हुओंमें कौन किससे शर्माये ॥१०॥

वह शत्रुओंका समूह उन दोनों राजाओंको दाँये-बाँये, आगे पीछे, गुफाओं और झाड़ियोंमें भी देखता था। मानो वे दोनों मनस्वी राजा शत्रुसमूहके प्राणोंको खोजनेके लिए ही उनकी आँखों तथा मनोंमें भी घूम रहे थे ॥११॥

शत्रुओंके पैदल सैनिकोंने भयमें आकर भी पराक्रम (दूसरे पर आक्रमण) को नहीं छोड़ा था क्योंकि वे विदेशको चले गये थे, विदिशाओंमें भाग गये थे, गहरी विशाल नदियोंको पार कर गये थे, ऊँचे-ऊँचे पहाड़ोंको लाँघ गये थे, और समुद्रकी चंचल तरंगों पर भी तैर गये थे ॥१२॥

सूर्यके तेजके समान प्रखर प्रतापके स्वामी उन राघव-पाण्डव राजाओंके भयसे कितने ही शत्रुलोग (अन्धकारपुञ्जके समान गम्भीर गुफाओंमें समा गये थे। ठीक ही है, क्योंकि पथभ्रष्ट अथवा घेरे गये लोग किस कुमार्ग अथवा दिशामें नहीं भागते हैं ॥१३॥

---

१ अर्थान्तरन्यासाऽलङ्कार –प०, द०। २ वक्रोक्ति –प०, द०। ३. अर्थान्तरन्यासाऽलङ्कार – प०, द०।

तेनालीढपदेन कृत्वा मेदिनीं महीं तथा शरैर्बाणैः कृत्वा रिपूणां द्विषां गणमविवेष्टतां वेष्टितवन्तौ तौ कर्तृभूतौ नृपती । समुच्चयः ॥ ६ ॥

**यशोवकाशस्य विधित्सया शरैर्दिशः परासारयतोरिवायतम् ।**
**विकृष्यमाणं युगमेव गव्ययोः ससार पश्चान्न पदं रणे तयोः ॥ ७ ॥**

यश इति—गव्ययोर्मौर्व्योः युगमेव द्वितयमेव आयतमाकर्णान्तं यथा भवति तथा आकृष्यमाणं ससार अपसृतं तथा तयोर्नरेन्द्रयोः रणे पदं चरणं पश्चात्पश्चाद्भागे न ससार । कथम्भूतयोरिवोत्प्रेक्षितयोः ? यशोऽवकाशस्य विधित्सया कर्तुमिच्छया शरैः वाणैः दिशः आशा परासारयतोरिव उत्सारयतोरिव । उत्प्रेक्षा ॥ ७ ॥

**नृपौ रुषाऽपातयतां शिलीमुखान्समं सपत्ना हृदयान्यपातयन् ।**
**विदूरमुच्चैः पदमध्यरुक्षतां भियाऽध्यरुक्षन्युधि वामलूरकम् ॥ ८ ॥**

नृपाविति—नृपौ शिलीमुखान् बाणान् रुषाऽमर्षेण अपातयतां पातितवन्तौ । सपत्नाः शत्रवः हृदयानि अपातयन् । कथम् ? समं युगपत् । अत्रायमर्थः—तया नरेन्द्राभ्यां मुक्तया बाणावल्या सार्द्धमेव हृदयानि शत्रवः पातयन्ति स्म । तौ नृपौ नरेन्द्रौ उच्चैः पदमुच्चपदवीमध्यरुक्षतामारूढवन्तौ । कथम् ? विदूरमलङ्घ्यम् । सपत्नाः विपक्षः वामलूरकं वल्मीकं भिया भयेनाध्यरुक्षन्नारुरुक्षुः । कथम् ? समं युगपत् । सहोक्तिरलङ्कारः[1] ॥ ८ ॥

**इषून्विमर्देऽमुचतां शरासनं शरानसूनप्यमुचन्नरातयः ।**
**अजस्रमश्रु (मस्रं) व्यमुचत्प्रियाजनस्तथास्थिताः स्पर्द्धममी न तत्यजुः ॥९॥**

इषूनिति—तौ नृपती विमर्दे सङ्ग्रामे इषून् बाणान् अमुचतां मुक्तवन्तौ तथा तयोर्मुक्तबाणावल्यनान्तरीयकत्वेन अरातयः शरासनं धनुस्तथा शरान् असून्प्राणानपि अमुचन् तथा प्रियाजनः भार्यासमूहः अस्रमश्रु अजस्रम् अनवरतं व्यमुचत् । तथापि अमी इमे प्रत्यक्षरूपनिरूपिता अरातयः स्पर्द्धमीर्ष्यां न तत्यजुः त्यक्तवन्तः । कथम्भूताः ? तथास्थिताः तादृशीं प्राणान्तिकीमवस्थां प्राप्ता इति[2] ॥ ९ ॥

**विशेषसूत्रैरिव पत्रिभिस्तयोः पदातिरुत्सर्ग इवाहतोऽखिलः ।**
**पलायितोऽन्योन्यमवेक्ष्य निस्त्रपः सहाभिभूतस्त्रपते हि कस्य कः ॥१०॥**

विशेषसूत्रैरिति— तयोः नृपयोः पत्रिभिः शरैराहतस्ताडितः पदातिः भृत्यः पलायितो विद्रुतः ।

---

तथा शुद्ध पैंतराके द्वारा पृथ्वीको और बाणवर्षाके द्वारा शत्रुओंके समूहको घेर लिया था ॥६॥

अपनी कीर्तिके प्रसारके लिए पर्याप्त स्थान करनेकी इच्छासे ही युद्धमें बाणवर्षाके द्वारा दिशाओंको ढकेलते हुएसे उन राघव-पाण्डव बन्धुओंके धनुषोंकी विशाल ज्याकी जोड़ी ही खींच जानेपर आगे पीछे होती थी किन्तु इनके पैर युद्धमें कदापि पीछे नहीं पड़ते थे ॥७॥

जब युद्धमें कुपित होकर राघव पाण्डव राजा शत्रुओंके ऊपर बाण गिराते थे तभी शत्रु लोग अपने हृदयोंको गिरा देते ( निराश हो जाते ) थे ये दोनों विजयी राजा दुष्प्राप्य उन्नत महाराज पदपर आरूढ़ होते थे तथा भयत्रस्त शत्रु दूर या पर्वतों पर जाकर बिलोंमें छिप जाते थे ॥८॥

राघव-पाण्डव वीर घोर संग्राममें यदि केवल बाण छोड़ते थे तो अभागे शत्रु राजा बाण, धनुष और अपने प्राण भी त्याग देते थे । इनकी प्यारी पत्नियाँ निरन्तर अश्रु बहातीं थीं किन्तु ये शत्रु राजा उस दुर्दशाको प्राप्त होकर भी ईर्ष्याको नहीं छोड़ते थे ॥९॥

उनके बाणोंके द्वारा सब तरफसे वेधी गयी पदाति सेना वैसे ही भाग खड़ी हुई थी

1. सहजा वक्रोक्तिः प०, द० । 2 वक्रोक्ति—प०, द० ।

कीदृक् ? अखिल' पुनः निस्त्रपो निर्लज्जः । किं कृत्वा ? अन्योन्य परस्परमवेक्ष्यावलोक्य । उपमार्थ. क इव ? विशेषसूत्रैरपवादलक्षणै. विशेषोक्तविधिभिराहत' उत्सर्ग सामान्योक्तो विधिरिव । अर्थान्तरमुपन्यस्यते—हि स्फुट सहाभिभूत सार्द्धं पराजितः प्राणी क कस्य त्रपते लज्जते ? अपि तु न कोपि कस्यापि[1] ॥ १० ॥

**स तिर्यगन्वक्पुरतश्च विद्विषां दरीषु गुल्मेषु ददर्श तौ गणः ।**
**असूनिवान्वेष्टुममुष्य चक्षुषोर्मनस्विनौ बभ्रमतुर्मनःस्वपि ॥११॥**

स इति—तौ लोकप्रसिद्धौ नृपती कर्मभूतौ सः विद्विषा वैरिणा गण' तिर्यग्वामदक्षिणादिभागे तथा अन्वक् पाश्चात्यभागे पुरतश्चाग्रतोऽपि दरीषु कन्दरासु तथा गुल्मेषु क्षुद्रक्षुपादिषु ददर्श । तथा तौ मनस्विनौ सचेतस्कौ अमुष्य विद्विषा गणस्य अधिकरणभूतयोः चक्षुषोः लोचनयोः मनःस्वपि अमुष्य विद्विषा गणस्य असून्प्राणान् अन्वेष्टुमिव बभ्रमतु पर्यटितवन्तौ । उत्प्रेक्षालङ्कार ॥११॥

**ययुर्विदेशं विदिशं जगाहिरे धुनीरगाधा विललङ्घिरे गिरीन् ।**
**धृताः समुद्रस्य विलोलवीचिभिर्भयेऽपि भृत्या न पराक्रमं जहुः ॥१२॥**

ययुरिति—भृत्या पदातय विदेश ययु गतवन्तस्तथा विदिश ययु' पुन धुनी नदी जगाहिरे व्यालोडितवन्त' । कथभूता धुनी. ? अगाधा अतलस्पर्शिनी. । पुन गिरीन् पर्वतान् विललङ्घिरे विशेषेणोल्लङ्घितवन्त' तथा समुद्रस्य विलोलवीचिभि चञ्चलतरङ्गैः कर्त्रीभि धृता. । एवञ्च सति पराक्रम न जहु न त्यक्तवन्त' । क सत्यपि ? भयेऽपि । अत्र भावो व्यज्यते । तौ नृपती व्यालोक्य विपक्षपदातीना प्रचुरतरभयवशाद्विदेशविदिगादिपदार्था पलायनाय स्तोकतरा जाता पलायन तावत्प्रचुरतरमासीद् भयवशादिति[2] ॥१२॥

**विवांसि भान्वोरिव बिभ्रतोस्तयोर्विशङ्कया केचन कन्दरोदरम् ।**
**तमिस्रसङ्घा इव तेऽधिशिश्यिरे क नष्टमार्गा न विशन्ति जन्तवः ॥१३॥**

विवासीति—ते केचन शत्रव विशङ्कया कन्दरोदर गुहामध्यमधिशिश्यिरे अधिष्ठितवन्त । कयोर्विशङ्कया ? विवासि तेजासि बिभ्रतोर्धरतोस्तयोर्नरेन्द्रयो. । कथभूतयोरिव तयो' ? भान्वोरिव । कथम्भूता. केचन ? तमिस्रसङ्घा इव अन्धकारसमूहा इव यथा कन्दरोदरमधिशेरते । अर्थान्तरमुपन्यस्यते—नष्टमार्गाः प्रभ्रष्टसञ्चारा के जन्तव प्राणिन क न विशन्ति अपि तु सर्वस्मिन् स्थाने विशन्त्येव[3] ॥१३॥

---

जैसे शास्त्रके अपवाद (विशेष) सूत्रोंके द्वारा समस्त उत्सर्ग (सामान्य विधि) किया जाता है। एक दूसरेको देखकर उन पदातियोंका संकोच या लज्जा खुल गयी थी और उचित ही है क्योंकि एक साथ पराजित, अतएव भागते हुओंमें कौन किससे शर्माये ॥१०॥

वह शत्रुओंका समूह उन दोनों राजाओंको दाँये-बाँये, आगे पीछे, गुफाओं और झाड़ियोंमें भी देखता था। मानो वे दोनों मनस्वी राजा शत्रुसमूहके प्राणोंको खोजनेके लिए ही उनकी आँखों तथा मनोंमें भी घूम रहे थे ॥११॥

शत्रुओंके पैदल सैनिकोंने भयमें आकर भी पराक्रम (दूसरे पर आक्रमण) को नहीं छोड़ा था क्योंकि वे विदेशको चले गये थे, विदिशाओंमें भाग गये थे, गहरी विशाल नदियोंको पार कर गये थे, ऊँचे-ऊँचे पहाड़ोंको लाँघ गये थे, और समुद्रकी चचल तरगों पर भी तैर गये थे ॥१२॥

सूर्यके तेजके समान प्रखर प्रतापके स्वामी उन राघव-पाण्डव राजाओंके भयसे कितने ही शत्रुलोग (अन्धकारपुञ्जके समान गम्भीर गुफाओंमें समा गये थे। ठीक ही है, क्योंकि पथभ्रष्ट अथवा घेरे गये लोग किस कुमार्ग अथवा दिशामें नहीं भागते हैं ॥१३॥

१ अर्थान्तरन्यासाऽलङ्कार—प०, द०। २ वक्रोक्ति—प०, द०। ३. अर्थान्तरन्यासाऽलङ्कार.—प०, द०।

**इति प्रतापादवगाढयोस्तयो रणस्य मध्यं रिपवोऽनुकूलताम् ।**
**ह्रदस्य जग्मुः करिणोरिवोर्मयश्चलाः सहन्ते किमिवातिवर्त्तिनः ॥१४॥**

इतीति—तयोर्नरेन्द्रयो. इति पूर्वोक्तात् प्रतापादनुकूलतामनुलोमत्व जग्मुर्ययुः । के ? रिपवः । कथभूतयोस्तयोः ? रणस्य मध्यमन्तः अवगाढयोरधिष्ठितवतोः । के कयोरिव ? ह्रदस्य मध्यमवगाढयोः करिणोः ऊर्मय इव । अर्थान्तरमुपन्यस्यते—चला. चञ्चलाः किमिव सहन्ते सोढु प्रभवन्ति । कान् ? अतिवर्तिनोऽतिक्रमणशीलानिति ॥१४॥

**गतावशिष्टेषु बलेषु केष्वपि स्थितेषु पुञ्जैः सरसस्तपेऽम्बुषु ।**
**अकालमेघा इव तत्र नायकाः समन्ततः संनिहिता धनुर्भृताम् ॥१५॥**

गतेति—सन्निहिताः निकटे स्थिता. । के ? नायकाः स्वामिनः । केषाम् ? धनुर्भृता धनुर्धराणाम् । कथम् ? समन्ततः सामस्त्येन । क ? तत्र सग्रामे । केषु सत्सु ? बलेषु सैन्येषु गतावशिष्टेषु गतेभ्योऽवशिष्टानि गतावशिष्टानि तेषु पलायितधृतेषु स्थितेषु सत्सु । कैः ? पुञ्जै. समुदायै. । कथभूतेषु सत्सु ? केष्वपि कतिपयेष्वपि । उपमार्थ. क इव ? अकालमेघा इव यथाऽसमयपयोदाः सन्निहिता जायन्ते । कस्य ? सरसः सरोवरस्य । क ? तपे ग्रीष्मे[1] । केषु सत्सु ? अम्बुषु जलेषु गतावशिष्टेषु पुञ्जै केष्वपि स्थितेषु सत्सु । उपमालङ्कारः ॥१५॥

**पतत्रिनादेन भुजङ्गयोषितां पपात गर्भः किल तार्क्ष्यशङ्कया ।**
**नभश्चरा निश्चितमन्त्रसाधना वने भयेनास्यपगारमुद्यताः ॥१६॥**

पतत्रीति—भुजङ्गयोषिता नागवधूना तार्क्ष्यशङ्कया गरुडभीत्या पतत्रिनादेन वाणध्वनिना गर्भः पपात पतितः । कथम् ? किल लोकोक्तौ शास्त्रोक्तौ वा । वनेऽरण्ये भयेन भीत्या अस्यपगारमसीनपगूर्यासिभिरपगूर्य वा खड्गानुत्खाय नभश्चरा उद्यता ऊर्ध्वीभूय स्थिताः । कथम्भूता. नभश्चराः ? निश्चितमन्त्रसाधनाः निश्चितमात्मप्रतीतिमानीत मन्त्रसाधन यैस्ते । समुच्चयः ॥१६॥

**समन्ततोऽप्युद्गतधूमकेतवः स्थितोर्ध्वबाला इव तत्रसुर्दिशः ।**
**निपेतुरुल्काः कलमाग्रपिङ्गला यमस्य लम्बाः कुटिला जटा इव ॥ १७ ॥**

समन्तत इति—दिश. आशा. तत्रसु. त्रस्ता. । कथम्भूताः ? उद्गतधूमकेतवः । किंविशिष्टा इव ? स्थितोर्ध्वबाला इव । तथा कलमाग्रपिङ्गला. शालिकेशरपिङ्गा' उल्का विद्युतो निपेतु' । किंविशिष्टा इव ? यमस्यान्तकस्य लम्बाः प्रलम्बाः कुटिला वक्रा जटा इव' ॥ १७ ॥

---

इस प्रकारके पराक्रमी उन राघव-पाण्डव राजाओंके युद्धके वीचमें जाते जाते ही शत्रु वैसे ही अनुकूल हो जाते थे जैसे सरोवरके वीचमें तैरते हाथियोंके पीछे लहरें चलती हैं। उचित ही है क्योंकि स्वयं चंचल अतिक्रमणशीलके सामने कैसे टिक सकता है ॥१४॥

भागते-भागते भी कुछ शत्रु-सेनाएं थोड़ी-बहुत बच गयीं थीं। इन्हें धनुषधारी सेनापतियोंने चारो ओरसे वैसा ही घेर लिया था जैसे ग्रीष्म ऋतुमें तालावमें बचे थोड़ेसे पानीको असमयमें उमड़े वादल घेर लेते हैं ॥१५॥

वाणकी टंकारको सुनकर गरुड़की ध्वनिका भय हो जानेसे नागपत्नियोंके गर्भपात हो गये थे। खेचरोंको भी ऐसा दारुण भय हुआ था कि तलवारको मियानसे निकालनेका प्रयत्न करते-करते ही उन्हें यह विश्वास हो गया था कि वे मंत्रबलसे ही सफल हो सकते हैं ॥१६॥

युद्धकी भीषणतासे दशों दिशाएँ ऐसी भीत हो गयीं थीं जैसी कि चारों ओरसे धूमकेतु छा जानेपर होता है और उनके वाल खड़े हो जाते हैं। शस्त्र-संघर्षसे उत्पन्न पके धान्यकी वालोंके समान धूसर रंगकी विजलियाँ गिर रही थीं जो यमकी लम्बी और टेढ़ी जटाके समान प्रतीत होती थीं ॥१७॥

1. उत्प्रेक्षाऽलङ्कार –प०, द० ।

**प्रभिन्नकक्षीवति लोलवाजिनि स्थिते पुरः स्यन्दनभाजि राजके।**
**मनश्चकम्पे वनसन्निवासिनां तयोः क्षणं जीवितसंशयं गतम् ॥ १८ ॥**

प्रभिन्नेति–वनसन्निवासिना वनेचराणा मनश्चेत चकम्पे प्रकम्पितम्। कथम्भूत सत्? जीवितसंशय गत सत्। कयोस्तयोर्नरेन्द्रयो। कथम्? क्षण मुहूर्त्तमेकम्। क्व सति? राजके नृपसमूहे प्रभिन्नकक्षीवति प्रभिन्नाः कक्षीवन्तो हस्तिनो यस्य तस्मिन्। पुन लोलवाजिनि लोलाश्चञ्चला वाजिनस्तुरङ्गाः यस्य तस्मिन्। पुन पुरोऽग्रत. स्थिते। पुन स्यन्दनभाजि सरथे ॥ १८ ॥

**इतस्ततः संविवरीषतां द्विषां सितातपत्राणि शितार्धचन्द्रकैः।**
**तयोर्विलूनानि यशांसि संहतिं समागतानीव रणाङ्गणेऽपतन् ॥ १९ ॥**

इतस्तत इति–रणाङ्गणे द्विषा शत्रूणा सितातपत्राणि इतस्तत अस्मिन् तस्मिन्प्रदेशे अपतन् पतितानि। कथम्भूतानि? तयो नरेन्द्रयो शितार्द्धचन्द्रकै निशितबाणविशेषै लूनानि छिन्नानि। कानीव? सहति समुदाय समागतानि यशासीव। किं कुर्वता द्विषाम् सविवरीषता सवरीतुमिच्छताम्। उत्प्रेक्षालङ्कार ॥१९॥

**रथेषु तेषां जगतीभुजां ध्वजान्महीभुजौ चिच्छिदतुर्भुजानिव।**
**तथा क्षुरप्रैरनयैः क्रियाफलं मदातिलोभाविव वाजिनां युगम् ॥ २० ॥**

रथेष्विति–महीभुजौ नरेन्द्रौ जगतीभुजा राज्ञा रथेषु रथानामित्यर्थ.। अत्र सप्तमी सम्बन्धविषया ज्ञेया। ध्वजान् चिच्छिदतु छेदितवन्तौ। कानिव? भुजानिव बाहूनिव। तथा वाजिनामश्वाना [1]युग क्षुरप्रैर्बाणविशेषै. चिच्छिदतु। काविव? मदातिलोभौ इव यथा। मदो वैचित्यमतिलोभ आत्मन्यनात्मीयस्य वस्तुनोऽत्याकाङ्क्षया समर्पणमित्यतिलोभ, मदश्चातिलोभश्च तौ तथोक्तौ चिच्छिदतु। किम्? क्रियाफल विग्रहयानासनादिलक्षण षाड्गुण्यम्। कै कृत्वा? अनयै। गुणाना यथास्वमवस्थानानि नयास्तद्विपरीतैरनयै. कृत्यानामकरणैरकृत्याना करणैश्चाक्षयलाभवियोग[2]कारणैरित्यर्थ.। अनीतिभिरिति शेष[3] ॥ २० ॥

**शरेण चूडामणयः किरीटतो विपाटिता नायकतां विहाय ते।**
**कुतोऽपि याता विदिता न भूभृतां पदच्युतानामियमीदृशी गतिः ॥२१॥**

शरेणेति–विपाटिता उत्पाटिता.[4]। के? चूडामणय शेखररत्नानि। केन? शरेण बाणेन कस्माद्विपाटिता? किरीटत मुकुटात्। केषाम्? भूभृता नृपाणाम्। तथा न विदिता न लोचनगोचरा जाता।

---

हस्ति-सेनाको चूर चूर करते हुए चंचल और तेज घोड़ोंकी सेनाको दौड़ाते हुए तथा रथोंकी तोड़ मरोड़ करनेमें लीन उन योद्धा राजाओंको देखकर वनवासियोंका चित्त काँप गया था और क्षणभरके लिए उनका अपना जीवन भी संशयमें पड़ गया था ॥१८॥

राघव-पाण्डवोंके अर्द्ध चन्द्राकार बाणोंके द्वारा काटे गये संवरण करनेकी इच्छासे ही एकत्रित शत्रुओंके श्वेत छत्र रणभूमिमें इधर-उधर बिखरे हुए ऐसे लगते थे मानो यशका समूह वहाँ इकट्ठा हो गया हो ॥१९॥

इन दोनो राजाओंने शत्रु राजाओंके रथोंपर लहराती बाहुओंके समान ध्वजाओंको अपने क्षुरप्र बाणोंके द्वारा काट डाला था। जिस प्रकार भीषण अहंकार और प्रगाढ़ लोभ अनीति मार्गका आचरण कराके ध्यान-आसन आदि तपस्याके फलको नष्ट कर देते हैं उसी प्रकार इनने उनके रथके घोड़ोंके जोड़ीके कधे पर रखे जुआको काटकर फेंक दिया था ॥२०॥

शत्रु राजाओंके मुकुटोंके ऊपर बाण चलाकर राघव-पाण्डव वीरोंने चूड़ामणि उड़ा

---

१. "युगो रथे हलाद्यङ्गे" इति मेदिनी। अतोऽत्र वोढृबन्धनस्थान आह्यम्। २ विनाश–द०। ३. सकराऽलङ्कार–प०, द०। ४ उच्चिता–प०, द०।

के ते ? चूडामणयः । कथम्भूताः सन्त. ? याता गताः । कथम् ? कुतोऽपि कस्मिन्नपि स्थाने । किं कृत्वा ? पूर्वं विहाय परित्यज्य । काम् ? नायकता प्रधानत्वम् । अत्रैतदुक्तं भवति–भूभृतामेव नायकत्वमवशिष्ट न खलु चूडामणीनामिति भावः । अर्थान्तरमुपन्यस्यते–पदच्युताना स्थानभ्रष्टानामिय प्रत्यक्षीभूता ईदृशी गतिरवस्था[1] ॥ २१ ॥

**प्रसह्य ताभ्यां परलोकसाधनः शरैर्नृपाणां गुणवान्पराहतः ।**
**मदाभिमानाधिकवीर्यसंग्रहाद् वसुस्मराभ्यामिव धर्मसञ्चयः ॥२२॥**

प्रसह्येति–पराहतः निराकृतः । कोऽसौ कर्मतापन्न. ? धर्मसञ्चय· चापसमूहः । काभ्याम् ? ताभ्या नरेन्द्राभ्याम् । कथम् ? प्रसह्य बलात्कारेण । कस्मात् ? मदाभिमानाधिकवीर्यसग्रहात् ( मद. स्मयः ) तस्येद लक्षणम् । "ज्ञान पूजा कुल जाति बलमृद्धिं तपो वपु. । अष्टावाश्रित्य मानित्व मदमाहुर्गतस्मया. ॥" [ र क. २५ ] अभिमानस्त्रिजगतामुपरि मा विहाय नान्य. कश्चिदौदार्यादिगुणवानस्तीति बुद्धि । वीर्यं पराक्रम. । मदश्चाभिमानश्च मदाभिमानौ मदाभिमानाभ्यामधिकञ्च तद्वीर्यञ्च मदाभिमानाधिकवीर्यं तस्य सग्रहोऽङ्गीकारस्तस्मात् । कै. कृत्वा ? शरै. बाणै. । केषा चापसञ्चय. ? नृपाणा भूपतीनाम् । कथभूत· ? परलोकसाधन. परलोक शत्रुवर्ग साधयतीति सः । पुन. गुणवान् जीवावान् । उपमार्थः काभ्यामिव ? वसुस्मराभ्यामिव । यथाऽर्थकामाभ्या पराहत क. धर्मसञ्चय. पुण्यसञ्चय । कथम् ? प्रसह्य हठात् कस्मात् मदाभिमानाधिकवीर्यसग्रहात् मदाभिमानप्रचुरसङ्गमात् । कथभूतः ? धर्मसञ्चय. गुणवान् व्रतादिमान् । पुनः परलोकसाधनः स्वर्गादिसाधक· । उपमालङ्कार· ॥२२॥

**स सागरावर्तधनुर्धरो नरो नभश्सदां कामविमानसंहतिम् ।**
**अयत्नसंक्लृप्तगवाक्षपद्धतिं चकार शातैर्विशिखैर्विहायसि ॥२३॥**

स इति–स नर ना कामविमानसहति कामाय सम्भोगाय विमानसहति कामविमानसहतिस्ता शातै-र्निशितैर्विशिखैर्बाणैः अयत्नसक्लृप्तगवाक्षपद्धतिमप्रयासविहितवातायनमार्गं चकार । क ? विहायस्याकाशे । केषा विहायसि ? नभ·सदा देवाना विद्याधराणा वा । कथम्भूतो नर ? सागरावर्त्तधनुर्धर. सागरावर्त्तना-मधेय धनुर्धरतीति सः ।

---

दिये थे । फलत. वैरी राजा अपने नेतृत्वको त्यागकर न जाने कहाँ चले गये थे । उचित ही है क्योंकि अपने पदसे च्युत लोगोंकी ऐसी ही गति होती है ॥२१॥

कुल जाति आदिके भेदसे आठ प्रकारके मद अहंकार तथा अधिक बलके संचयके कारण वसु और कामदेवके समान उन राघव-पाण्डव राजाओंने शत्रुलोगोंके विनाशमें सहायक तथा ज्या युक्त, शत्रु राजाओंके धनुष समूहको अपने बाणोंके द्वारा जबरदस्ती नष्ट कर दिया था [ अर्थ तथा काम पुरुषार्थ भी अष्टविध मद, अहंकार तथा अति शक्तिका संग्रह कराके दूसरे जन्ममें सहायक, व्रतादि पालन स्वरूप धर्म पुरुषार्थको बलवद् अभिभूत करा देते हैं ] ॥२२॥

सगर राजाकी वंश-परम्परामें उत्पन्न उस धनुषधारी लक्ष्मणने आकाशचारी खर-दूषण आदि विद्याधरोंके इच्छा मात्रसे चलनेवाले विमानोको आकाशमें ही रहने पर भी अपने तीक्ष्ण बाणोंके द्वारा ऐसा छेद दिया था कि वे स्वाभाविक खिड़कियोंसे पूर्ण समान लगते थे ।

अन्वय—सागरावर्त्तधनुर्धर स विहायसि शातैः विशिखैः नभःसदां कामविमानसहतिं अयत्नसंक्लृप्तगवाक्षपद्धतिं चकार ।

१. अर्थान्तरन्यासाऽलङ्कार –प०, द० ।

अधुना भारतीय.—स नरोऽर्जुन कामविमानसहति काममत्यर्थं विगतो मानो यस्या सा कामविमाना सा चासौ सहतिश्च ताम् । अयत्नसक्लसगवाक्षपद्धतिमयत्नेन अतत्परतया सक्लसा विहिता गवा पशूनामक्षपद्धतिरिन्द्रियवर्गो यस्या सा ताश्चकार । अत्र शस्त्रविद्धाना किल भीरुणा नराणा शस्त्रक्षतक्षतजप्रवाहात् पूर्वे मूर्च्छा मनोवैकल्य तदनन्तरमिन्द्रियाणा तेपु तेपु विषयेपु यदृच्छया प्रवृत्ति सहतेर्न भवतीति भावो निरूपित । कै कृत्वा ता तथोक्ता चकार ? शातैर्निशितैर्विशिखैर्वाणै । क चकार ताम् ? विहायसि विहान विह कप्रत्ययान्त. । विहानि विशिष्टप्रवृत्त्योपलक्षितानि अयासि लोहानि यत्र तत् विहायस्तस्मिन् विहायसि रणे । केषा कामविमानसहतिम् ? अनभस्सदा न नभसि सीदन्ति गच्छन्तीत्यनभस्सदो नरास्तेषाम् । स कथ भूतो नर. ? सागरावर्त्तधनुर्धर सागरस्य समुद्रस्य आवर्त्ता इव पयसा भ्रमा इव आवर्त्ता यस्य तत् सागरावर्त्तम् । अथवा 'सगरो नाम चक्रवर्त्ती सगरस्येद सागर धनु सागरस्येवावर्त्ता यस्य तत् सागरावर्त्तम् । अथवा सागर समुद्रमावर्त्तयतीति सागरावर्त्त तच्च धनुर्धरतीति तथोक्त । श्लेष. ॥२३॥

**कर्णैर्गजास्तेन विलूनपुष्करा बभुः स्रवन्तः क्षतजानि धारया ।**
**बृहन्नितम्बा दवदाहनीलिता नगाः क्षरद्गैरिकनिर्झरा इव ॥२४॥**

कर्णैरिति—तेन द्वितयेन नरेन्द्रेण कर्णै बाणै विलूनपुष्करा विच्छिन्नशुण्डाग्रा गजा. हस्तिनो बभु' शोभन्ते स्म । कथम्भूता गजा ? धारया क्षतजानि रुधिराणि स्रवन्त । पुन बृहन्नितम्बा स्थूलकटिप्रदेशा । क इव ? नगा इव पर्वता इव । कथम्भूता नगा ? बृहन्नितम्बा स्थूलसानव । पुनर्दवदाहनीलिता वनज्वलनप्राप्तनीलभावा । पुन क्षरद्गैरिकनिर्झरा स्रवद्धातुजलप्रस्रवा [२] ॥२४॥

**रथप्रयुक्तस्य हयस्य पश्चिमे शरैर्विलूने पदयोर्युगेऽमुना ।**
**पुरःपदोत्क्रान्तधुरस्य चामरैर्मृगाधिपस्येव सटैः क्रमोऽभवत् ॥२५॥**

रथेति—अभवत्सञ्जात. । क. क्रम स्फालनम् । कस्य ? हयस्याश्वस्य । कै ? चामरै प्रकीर्णकै । क सति ? पदयोश्चरणयो युगे युग्मे शरै बाणैर्विलूने सति । कथभूतस्य ? रथप्रयुक्तस्य । पुन कथम्भूतस्य ? पुर पदोत्क्रान्तधुरस्य पुर.पदाभ्यामग्रचरणाभ्यामुत्क्रान्ता धुरा येन स तस्य अग्रचरणोर्ध्वविपर्यीकृतयूपस्येत्यर्थ । उपमार्थ प्रदर्श्यते । कस्येव क्रमोऽभवत् मृगाधिपस्येव । यथा सटै स्कन्धकेसरै. सिहस्य क्रमो जायते तथा हनस्य क्रमो मृग्यत इति । उत्प्रेक्षालङ्कार ॥ २५ ॥

**हतैकपादं युधि तस्य रोपणैः क्षणं निषण्णं सुहृदीव कार्मुके ।**
**परत्र राजन्यकमेकपादकं तपस्यतीव स्म जिगीषया रिपोः ॥ २६ ॥**

---

समुद्रकी भौरके समान विशाल तथा दारुण धनुषके धारक उस अर्जुनने विशिष्ट लोहसे बने शस्त्रोंकी प्रयोगस्थली युद्धभूमिमें अपने प्रखर बाणोंकी वर्षासे थलचर कीचकादि के निमित्तसे घेरी गयी सर्वथा वे प्रमाण गायोंके समूहको विना किसी प्रयत्नके निकल भागने योग्य मार्ग वना दिया था ॥२३॥

राघव-पाण्डव राजाके द्वारा 'कण' प्रकारके बाणोंसे सूंड काट दिये जाने पर घावोंसे रक्तकी धार वहाते हुए सुपुष्ट हाथी दावाग्निसे जलनेके कारण नीली नीली, मोटी चोटियों युक्त तथा गेरूके झरनोंको वहाते हुए पहाड़ोंके समान प्रतीत होते थे ॥२४॥

रथमें जुते घोड़ोंके पीछेके पैरोंकी जोड़ीको राघव अथवा पाण्डव राजाके बाणोंसे काट दिये जाने पर भी केवल आगेके पैरोके सहारे रथकी धुराको सम्हाले तथा चमर लटकाते वे घोड़े गर्दनके बालोंसे सुशोभित हमला करनेके लिए तैयार सिंहके समान प्रतीत होते थे ॥२५॥

---

१ राघवीयपक्षे समुचित इति । २ उत्प्रेक्षाऽलङ्कारः–प०, द० ।

हतेति—राजन्यक राजपुत्रसमूह. कार्मुके धनुषि निषण्णमवष्टब्धम्। कस्मिन्निव सुहृदीव। कथम्? क्षणम्। कथम्भूतम्? हतैकपाद छिन्नैकचरणम्। कैः? तस्य नरेन्द्रद्वितयस्य रोपणै. शरै.। क? युधि रणे। उत्प्रेक्षते—एकपादकमेकः पादो यस्मिन्, क्रियाविशेषणे। परत्र परलोके रिपो' शत्रोः विजिगीषया जेतुमिच्छया तपस्यति स्मेव तपस्याञ्चकारेव ॥ २६ ॥

**स सूर्यहासं किमसिं किमर्गलां गदां नु पाशं नु परश्वधं धनुः।**
**दधत्किमित्याकलितो न भीरुभिर्मतिः कुतो वा चलितेषु धातुषु ॥२७॥**

स इति—स लक्ष्मणः भीरुभिः कातरै किम् इति न आकलित' न निश्चयमानीत। कि कुर्वन्? किं सूर्यहासाख्यमसिं खड्ग दधत् दधान.। किमर्गला परिघम् नु अहो किं गदा नु किं पाश नु किं परश्वध किं परशु किं धनुश्चाप दधदिति सम्बन्ध। अर्थान्तरमुपन्यस्यते—धातुषु रसासृग्मासादिषु चलितेषु सत्सु कुतो वा मति. स्यात्।

भारतीय —सः अर्जुन. भीरुभिरसिं दधत् न आकलित। कथम्भूतम्? असि सूर्यहास सूर्यस्येवहासस्तेजो यस्य त सूर्यसदृशदीप्तिमित्यर्थः। अन्यत्समम्[1] ॥ २७ ॥

**स शात्रवाणां हृदि शल्यमुद्धरन्स्वशस्त्रशल्येन जगाम बन्धुताम्।**
**समुन्नता यत्कुपिताश्च कुर्वते न तत्प्रतीता ह्यपि दुर्जनाः प्रियम् ॥ २८ ॥**

स इति—स नरेन्द्र स्वशस्त्रशल्येन शात्रवाणा हृदि हृदये शल्यमुद्धरन्नुत्पाटयन् बन्धुता बान्धवत्व जगाम गतवान्। अर्थान्तरमुपन्यस्यते—समुन्नता. सत्पुरुषा कुपिता. क्रुद्धा च अपि सन्तः यत् प्रिय कुर्वते तत् प्रिय प्रतीताः तुष्टा अपि दुर्जना न कुर्वते। हि स्फुटम् ॥ २८ ॥

**नृपा नृपत्वं न शराः शरात्मतां न कार्मुकं कार्मुकतां तुरङ्गमाः।**
**तुरङ्गतां तिष्टिघिरे न संयुगे विमुञ्चति ज्यायसि बाणसंहतिम् ॥ २९ ॥**

नृपा इति—न तिष्टिघिरे नास्कन्दन्ति स्म न प्राप्ता इत्यर्थ। के? नृपा भूपतय.। किम्? नृपत्व क्षात्रधर्मम्। तथा शरा. न शरात्मताम्। प्राणान् शृणन्ति हिंसन्तीति सरास्तेषामात्मा शरात्मा तस्य भावस्तत्ता ता प्राणिप्राणमारणलक्षण धर्ममित्यर्थ.। तथा कार्मुक धनु न कार्मुकताम्। कर्मणि शक्त कार्मुक तस्य भावस्तत्ता ता नमनाकर्षणसमर्थत्वम्। तथा तुरङ्गमा अश्वा न तुरङ्गता तुराङ्गच्छन्तीति तुरङ्गास्तद्भाव

---

लक्ष्मण अथवा अर्जुनके बाणोंके द्वारा युद्धमें एक पैर कट जाने पर भी मित्रके समान धनुषका सहारा लेकर एक पैरके बल ही खड़े शत्रु राजा लोग ऐसे लगते थे मानो परलोकमें शत्रुको जीतनेकी कामनासे 'एकपाद' मुद्रामें तपस्या ही कर रहे हैं ॥२६॥

सूर्यहास नामकी अलौकिक तलवारके धारक उस लक्ष्मणको कायर शत्रु लोग ठीक तरहसे नहीं समझ सके थे। वे सोचते थे क्या तलवार है, या अर्गला है, या गदा, पाश, फरसा अथवा धनुष है। ठीक ही है वीर्यके गलित हो जानेपर सन्मति कहांसे आयगी? अथवा तीक्ष्णता और प्रतापमें सूर्यको भी हँसनेवाले गाण्डीव धनुषके धारक उस अर्जुनको ·· ॥२७॥

अपने बाणादि शस्त्रोंकी नोकसे शत्रुओंके हृदयकी जय-पराजयादिकी शल्य ( चिन्ता ) को दूर करते हुए उस लक्ष्मण अथवा अर्जुनने मित्रका किया था। यह उनके अनुरूप ही था क्योंकि क्रुद्ध होकर भी सज्जन जितना उपकार करते हैं दुर्जन अत्यन्त प्रसन्न होकर भी उतना नहीं करते है ॥२८॥

१ अर्थान्तरन्यासाऽलङ्कार.-प०, द०। २. अर्थान्तरन्यासालङ्कार.-प०, द०।

शीघ्रगामित्वमित्यर्थः । क्व सति ? ज्यायसि ज्येष्ठे भ्रातरि सयुगे रणे वाणसहतिं शरपरम्परा मुञ्चति विसृजति सति । तिष्ठिपिरे इति क्रियाप्रतिसम्बन्ध सम्बन्धनीयेति । समुच्चयालङ्कार ॥२९॥

**गजेषु नष्टेष्वगजेष्वनायकं रथेषु भग्नेषु मनोरथेषु च ।**
**न शून्यचित्तं युधि राजपुत्रकं पुरातनं चित्रमिवाशुभद् भृशम् ॥३०॥**

गजेष्विति—युधि सग्रामे राजपुत्रक नरेन्द्रसमूह न अशुभत्, अपि तु शोभते स्म । कथम् ? भृशमत्यर्थम् । किमिवाशुभत् ? पुरातन जीर्ण चित्रमिव । कथम्भूतम् ? शून्यचित्त शून्य चित्त यस्य तत् । पुनरनायकमस्वामिकम् । केषु केषु सत्सु ? अगजेषु गिरिसम्भूतेषु गजेषु नष्टेषु लोचनागोचरेषु सत्सु । पुन रथेषु भग्नेषु शस्त्रघातेन चूर्णितेषु । तथा मनोरथेषु भग्नेषु भयवशेन विलयङ्गतेषु चेति । आक्षेपालङ्कार ॥३०॥

**प्रभावतो वाणचयस्य मोक्तरि प्रभावतोपे समरे स्थिते नृपाः ।**
**प्रभावतो हीनतया विवर्जिता प्रभावतो ही न तथा रराजिरे ॥३१॥**

प्रभावत इति—ही कष्ट नृपा राजान' तया लोकप्रसिद्धया लक्ष्म्या वा हीनतया शिष्टजननिन्दितया कातरतया वा प्रभावत प्रभावेण प्रतापेनेति विवर्जिता प्रयुक्ता सन्त न रराजिरे न शोभन्ते स्म । कथभूतेन ? प्रकृष्टो भावो यस्मात् स प्रभावस्तेन प्रभावत प्रभावेन माहात्म्य दातु समर्थेनेत्यर्थ । अत्र "दृश्यतेऽन्यतोऽपि" [ जै० ४।१।७९ ] इत्यनेन सूत्रेण तसो विधानम् । क्व सति ? प्रभौ स्वामिनि रामे भीमे वा । कथभूते ? स्थिते निविष्टे । पुन अतोपेऽसन्तुष्टे । पुन वाणचयस्य शरसन्दोहस्य मोक्तरि विसृष्टरि । कथम्भूतस्य ? प्रभावत प्रभाऽस्यास्तीति प्रभावान् तस्य दीप्तिमत । आदिपदयमकम् ॥३१॥

**गजा नियन्तॄन्करशीकरोत्करैर्विमुक्तसूत्कारमिषूपदारितान् ।**
**[1]निशारशीतैरुदमीमिलन्नहो महीयसां प्रीतिररुन्तुदेष्वपि ॥३२॥**

गजा इति—गजा हस्तिन नियन्तॄन् महामात्रकान् विमुक्तसूत्कार यथा उदमीमिलन् उज्जीवयन्ति स्म । कथम्भूतान् नियन्तॄन् ? इषूपदारितान् शरपञ्जरजर्जरितान् । कै कृत्वा ? करशीकरोत्करै शुण्डादण्डाग्रविमुक्तजलविन्दुवृन्दै । कथम्भूतै ? निशारशीतै हिमकण ( हिमांशु ) शीतलै । अर्थान्तरम् । अहो आश्चर्य महीयसा गम्भीरचेतसा प्रीति अरुन्तुदेष्वपि मर्मच्छित्स्वपि [2]स्यात् ॥३२॥

---

बड़े भाई राम अथवा युधिष्ठिरके वाण चलाने पर युद्धमें नृप लोग नृपत्व (क्षात्रधर्म) को नहीं निभा सके थे शर शरता ( दूसरोंका प्राणहरण ) को, कार्मुक कार्मुकता ( नमन, स्फालन, आदि कार्योंकी कुशलता ) को तथा तुरंगम तुरंगता ( वेगसे दौड़ना ) को नहीं निभा सके थे ॥२९॥

पर्वतोंमें उत्पन्न हाथियोंके मारे जाने पर, रथोंके टूट जानेपर तथा विजयके मनोरथ समाप्त हो जानेपर क्षण भरके लिए स्तब्धचित्त तथा नेता विहीन वशक्रमसे राजपुत्र क्या पुराने चित्रके समान अत्यन्त मनोहर नहीं लगते थे [ प्राचीन चित्रसे भी कोई आय नहीं होती है तथा निर्जीव होता है ॥३०॥

असंतुष्ट राजा राम अथवा भीमकी समरस्थलीमें उपस्थिति, प्रतापवान् वाण वर्षाते योद्धाओंके कारण लक्ष्मीसे परित्यक्त अतएव प्रभावसे वंचित शत्रुराजा लोग प्रभुताकी दृष्टिसे तनिक भी नहीं जँचते थे ॥३१॥

वाणोंकी मारसे घायल महावतोंको हाथी हिमकणोंके समान ठंडे सूंडसे निकले जलविन्दुओंके द्वारा तथा 'सू सू' शब्द करते हुए पुनः चैतन्य करते थे । ठीक ही है महात्मा कष्ट देनेवालों पर भी प्रीति दिखाते हैं ॥३२॥

---

१ यद्यपि निशार इति आवरणेऽर्थे "शॄ वायुवर्णनिवृत्तेषु" इति घञा साधितस्तथापि निशा-राति गच्छति निशारश्चन्द्रस्तद्वच्छीतल इति टीकार्थं कथञ्चित्समाधेग । हिमार्थे त्वप्रसिद्ध । २ अर्था-न्तरन्यास —प०, द० ।

**ज्वलत्यमुष्मिन्कुपिते महीपतावनेकबन्धानि विभावसाविव ।**
**प्रिये प्रजानां ननृतू रणे तथा वने कबन्धानि विभावसाविव ॥ ३३ ॥**

ज्वलतीति–कबन्धानि अगिरासि तथा ननृतुः नृत्यन्ति स्म । क ? रणे सङ्ग्रामे । कथम्भूतानि ? अनेकबन्धानि नानाविधकरणानि । कस्मिन् सति ? अमुष्मिन्नस्मिन् महीपतौ रामे अर्जुने च असाविव प्राण इव प्रजाना प्रिये वल्लभे कुपिते सति । कथम्भूते महीपतौ ? विभौ स्वामिनि "असावित्यत्र जात्यपेक्षयैक-वचनम्" । पुनः कस्मिन्निव ? विभावसौ वह्नाविव यथा वनेऽरण्ये ज्वलति दीप्ते भवति सति कबन्धानि जलानीव[1] ॥३३॥

**तयोः पतन्त्यः शरपञ्जरान्तरं विरेजुरुष्णातपयष्टयः स्फुटम् ।**
**यमेन शुद्धामिषसञ्जिघित्सया तनूभृतां पर्श्व इवावतानिताः ॥३४॥**

तयोरिति–तयो. नरेन्द्रयो. शरपञ्जरान्तर वाणवेणीमध्य पतन्त्य. उष्णा ( उस्ना ) तपयष्टयः प्रति-विम्बिता दण्डाकारा' किरणावल्य इत्यर्थ । विरेजुः शोभन्ते स्म । का इव उत्प्रेक्षिता ? पर्श्व इव पर्शशब्द कुक्षिप्रदेशास्थिवाचक. । यमेनान्तकेन शुद्धामिषसञ्जिघित्सया केवलमासभक्षणवाञ्छया स्फुटमवतानिता. प्रसारिता इव । केषाम् तनूभृता प्राणिनाम्[2] ॥३४॥

**शरैः समस्तः खरदूषणो रिपुः समं ततोऽभीतमहानराजितः ।**
**विशीर्णचेताः कृतयुद्धविक्रमः समन्ततोऽभीतमहानराजितः ॥३५॥**

शरैरिति–खरदूपण' खरदूषणनामा रिपु' शत्रुः न राजित न शोभित. । कथम्भूत ? शरै' वाणै सम युगपत् समस्त सन्तर्जित. । कस्मात् ? तत. तस्माल्लोकप्रसिद्धात् अभीतमहानराजित अभीतौ निर्भयौ यौ महानरौ मनुष्योत्तमौ रामलक्ष्मणौ तयोराजित. रणात् । कथम्भूत' ? विशीर्णचेता क्लिन्नचित्त. । पुन कृत-युद्धविक्रम विहितसङ्ग्रामविक्रम' । पुन. अभीतमहा अभि समन्तादित गतमभीत महो यस्य स. सामस्त्येन नष्टतेजाः । कथम् ? समन्तत. सामस्त्येन ।

भारतीय'–न राजित । क. ? रिपुः । कथम् भूत' ? समस्तोऽखिल । पुन' खरदूपण तीव्रापराधः । पुन समन्तत प्रभिन्नः । कै. ? शरै' वाणै । कथम् ? सम युगपत् । पुन विशीर्णचेता. भीतचित्त. ।

---

**जनताके लिए प्राणोंके समान प्यारे समस्त पृथ्वीके इस राजा राम अथवा भीमके कुपित होनेपर समरभूमिमें नाना प्रकारके कवन्ध वैसे ही ( नाचते फिरते ) वरसते थे जैसे कि सूर्यके खूव तपनेपर वनमें जलकी वृष्टि होती है ॥३३॥**

**लक्ष्मण और अर्जुनके लगातार चलते वाणोंके पंजरके वीचमें स्पष्ट रूपसे चमचमाती सूर्यकी उष्ण रश्मियां ऐसी दिखती थीं मानो शरीरधारियोंके शुद्ध मांसको खानेकी इच्छासे यमराजने उनकी पसलियां अलगसे फेंक दी हों ॥३४॥**

**उन निर्भय महापुरुषों राम तथा लक्ष्मणके द्वारा सव प्रकारसे परास्त, एकाएक वाणों की मारसे विह्वल तथा भग्नमनोरथ तथापि सव प्रकारसे युद्धमें पराक्रम दिखानेके लिए प्रयत्नशील वे खर-दूषण नामक शत्रु सव प्रकारसे प्रभाव नष्ट हो जानेके कारण निस्तेज हो गये थे ।**

**अन्वय—खरदूपण रिपु समं शरै ततो अभि-द्रुत महानरआजित विशीर्ण-चेता कृतयुद्धविक्रम अभीतमहा न राजित**

**अत्यन्त अपराधी वे सव कीचकादि शत्रु एकाएक वाणोंके द्वारा छेद दिये जाने पर उन सामने वढ़ते हुए महापुरुषों, भीम तथा अर्जुनके साथ युद्ध करनेसे मन ही मन ठंडे पड़**

१ अन्तयमकम्–प०, द० । २. उत्प्रेक्षाऽलङ्कार –द० ।

कस्मात् ? अभीतमहानराजत अभीतो भीम महानरोऽर्जुनस्तयोराजिः सङ्ग्रामस्तस्मात्। अथवा सम्मुखागतार्जुनरणात्। पुन कृतयुद्धविक्रम' कृतञ्च तत्युद्धञ्च कृतयुद्ध तत्र विगत. क्रमो यस्य स विहितरणविगतशक्तिरित्यर्थ.। पुनरभीतमहाः प्रभ्रष्टतेजा इति। श्लेष ॥ ३५ ॥

**चिरस्य युद्ध्वा स पपात निष्क्रियः सहैव शुद्धान्तवधूजनाश्रुभिः।**
**सुरासुराणां कुसुमाञ्जलिर्दिवस्तयोरपप्तन्मधुपायिभिः समम् ॥३६॥**

चिरस्येति–स खरदूषणो रिपु. चिरस्य चिरकाल युद्ध्वा सम्प्रहृत्य निष्क्रिय निश्चेष्ट सन् शुद्धान्तवधूजनाश्रुभि रन्त पुरकामिनीजनवाष्पजलै सह पपात। तयो नरेन्द्रयो सुरासुराणा देवदानवाना कुसुमाञ्जलि प्रसूनाञ्जलि. दिव आकाशात् अपप्तत् पपात। कथम् ? समम्। कै' ? मधुपायिभि. भ्रमरै'[1] ॥ ३६ ॥

**निपीय रक्तं सुरपुष्पवासितं सितं कपालं परिपूर्य सूनृताम्।**
**नृतां प्रशंसन्त्यनयोर्ननर्त्त वाननर्तवाचोर्युधि रक्षसां ततिः ॥३७॥**

निपीयेति–रक्षसा तति श्रेणि न नवा ननर्त्त अपि तु ननर्त्तैव। क ? युधि सग्रामे। "द्वौ नञौ प्रकृतमर्थं गमयत।" किं कुर्वती सती ? अनयो नरेन्द्रयो सूनृता सत्या नृता नृधर्म प्रशसन्ती। कथम्भूतयोरनयो ? ऋतवाचो सत्यवचसो। किं कृत्वा ननर्त्त ? सुरपुष्पवासितममरकुसुमसन्कृत रक्त रुधिर निपीय पीत्वा। पुन किं कृत्वा ? सित शुक्ल कपाल परिपूर्य भृत्वा ॥३७॥

**प्रसार्य पादावधिरोप्य बालकं विधाय वक्त्रेऽङ्गुलिपङ्गमङ्गना।**
**प्रवेशयामास वसां महीक्षितां प्रकल्प्य पीथं पिशिताशिनां शनैः ॥३८॥**

प्रसार्येति–पिशिताशिना राक्षसानामङ्गना कामिनी महीक्षिता नरपतीना वसा मासादिगतस्नेह बालक प्रवेशयामास पाययति स्म। धातूनामनेकार्थत्वात्। कि कृत्वा ? पूर्व पीथ[2] प्रकल्प्य सङ्कल्प्य। कि कृत्वा ? वक्त्रे वदने मन्दमगुलिपङ्ग विधाय कृत्वा। कि कृत्वा ? अधिरोप्य। कम् ? बालकम्। किं कृत्वा ? पादो प्रसार्य ॥३८॥

**समुत्पतन्तो दिवि रेणवोऽणवो विलूनमूलाः क्षतजेन तेनते।**
**अधःप्रदीप्तज्वलनाः सितासिता रणस्य धूमा इव रेजिरेऽजिरे ॥३९॥**

समुत्पतन्त इति–अणव सूक्ष्मा रणोद्भवा रेणव धूल्य रेजिरे भान्ति स्म। किं कुर्वंतो रेजिरे ? दिवि गगने समुत्पतन्त उत्प्लवमाना। कथम्भूता ? अध प्रदीप्तज्वलना अधस्तात्प्रज्वलिताग्नय। कथम्भूता' ?

---

गये थे। क्योंकि उनका युद्धका पराक्रम समाप्त हो गया था और सब प्रकारसे प्रभाव समाप्त हो जाने से वे निस्तेज हो गये थे ॥ ३५॥

उक्त प्रकारसे चिरकाल तक युद्ध करके वह खरदूषण अथवा कीचक निष्क्रिय हो अन्तःपुरकी रानियोंके आँसुओंके साथ साथ गिर गया था। तथा दोनों पक्षके इन योद्धाओंके लिए देवता और दानवोंकी पुष्पांजलियाँ गिरीं थी जिनपर भौंरे गूंज रहे थे ॥३६॥

सत्यवादी राघव पाण्डव राजाओंकी अक्षरश सत्य महा मानवताकी प्रशंसा करती हुई राक्षसोंकी पंक्तियां युद्ध भूमिमें स्वर्गीय पुष्पोंसे सुगन्धित मृतोंके रक्तको श्वेत कपालोंमें भरकर यथेच्छ पीकर नाच उठीं थीं ॥३७॥

मांसाहारी राक्षसोंकी स्त्रियोंने पैरोंको फैलाकर उनपर बच्चेको बैठा लिया था फिर मृत राजाओंकी चर्बीका घोल बनाकर बच्चोंके मुखमें अंगुलि डालकर धीरे-धीरे उसे उनके गलेके नीचे उतार दिया था ॥३८॥

संग्राम भूमिमें ऊपर उड़ी हुई धूलके कण घावोंसे बहे रक्तके कारण नीचे शान्त हो

---

१ सहोक्ति –प०, द०। २ पा थक् ( पातुतुंदीति। उणू, २।७ ) पिबति रसादीनिति पा-कर्त्तरि-थक् सूर्याग्निकाला।

उद्योतितदिशः पक्का लोकस्याजीवहेतवः ।
दिव्यौषधो विभान्त्येताः परार्थाः सत्क्रिया इव ॥४४॥

उद्योतितेति—एता दिव्यौषध्य धातुवादयोग्यानि भेषजानि विभान्ति । कथम्भूता ? उद्योतितदिशः प्रकाशिताशा. । पुन पक्का' प्राप्तपाका पुन आजीवहेतवः जीवम् आ इति आजीवम् आजीव हेतव आजीवहेतव जीवपर्यन्तकारणानि । कस्य ? लोकस्य, उपमार्थ. प्रदर्श्यते—का इव ? सत्क्रिया इव सदाचरणानीवेत्यर्थ. । कथम्भूता ? परार्थाः परेभ्योऽर्थ प्रयोजन याभिस्ता परार्था ।

भारतीय.—हे दिव्य युधिष्ठिर. एता ओषध्य. पावनालादिधान्यानि विभान्ति । कथम्भूता ? लोकस्याजीवहेतवः जीवनोपाया ॥ ४४ ॥

भूर्जायते प्रदेशेऽस्मिन्सालतालीसमाकुले ।
अभिख्यातियुता नित्यं शष्पच्छायोदकान्विता ॥४५॥

भूरिति—शष्पच्छाया शष्पै बालतृणैरुपलक्षिता छाया अभिख्याति शोभतेतराम् । क ? अस्मिन्प्रदेशे । कथम्भूते ? भूर्जायते भूर्जेरायते महति पुन. शालतालीसमाकुले सालैस्तालीभिश्च समाकुले । कथम्भूता शष्पच्छाया ? उदकान्विता जलयुता पुन. युता मिश्रा ।

*भारतीय.*—अभिख्यातियुता शोभासयुक्ता भूर्भूमि जायते । कथम् ? नित्यमनवरतम् । कथम्भूता सती ? शष्पच्छायोदकान्विता बालतृणच्छायासमन्वेता । क ? अस्मिन् लोचनगोचरे प्रदेशे । कथम्भूते ? ल्तालीसमाकुले वल्लीश्रेणिसङ्कीर्णे । कीदृशी भू ? सा लोकप्रसिद्धा ॥ ४५ ॥

श्रीमत्तरलतोपेताः सरलाः सङ्गता इतः ।
प्रियचल्ल'वलीलाल्या व्रजकान्ताश्चकासति ॥ ४६ ॥
वैशाखोन्मन्थनोत्कम्पाद्गलन्मूर्धप्रसूनकाः ।
सुग्लानिजघनाभोगा न्यग्रोधपरिमण्डलाः ॥४७॥
उद्धूतापाण्डुरश्यामविटपायतबाहवः ।
संक्षिप्तबन्धुरस्कन्धाः प्रवालबहुलश्रियः ॥४८॥

श्रीमदिति—कुलकेन व्याख्यास्याम । हे प्रियचन् प्रियमस्यास्तीति प्रियवान् तस्य सम्बोधनम्, हे कल्याणवन् हे रावण ! व्रज गच्छ । कया लवलीलाल्या लवलीना चन्दनलतानामिला मही तस्या आलि. श्रेणी तया । क ? इतोऽस्मिन् प्रदेशे । यस्मात् हे श्रीमत्तर चकासति शोभन्ते । के ? सरल. देवदारव ।

---

समस्त दिशाओंमें प्रकाश फैलाती हुई परिपक्व तथा संसारके दीर्घजीवनमें साधक ये अलोकिक औषधियां वैसी ही चमक रही हैं जैसी कि परोपकारके लिए की गयी सत्क्रियाएं शोभित होती हैं। [ हे दिव्य पाण्डुराज ! संसारकी आजीविकाके निमित्त' ये धान्यादि वैसे सुन्दर लगते हैं जैसी ] । ४४ ।

साल तथा ताल वृक्षोंसे व्याप्त, भोज पत्रोंके समान विस्तृत और समतल इस क्षेत्रमें दूबकी छाया और जलसे पूर्ण शीतल भूमि अत्यन्त सुन्दर लगती है। [ लताओंकी श्रेणियोंसे व्याप्त इस क्षेत्रकी भूमि सदैव दूब, छाया तथा पानीसे युक्त रहनेके कारण अत्यन्त मनोरम हो जाती है । ४५ ।

हे कल्याणभाजन रावण ! चन्दनकी लताओंसे ढकी वीथियोंमेंसे जाओ । अधिकतर शोभा युक्त लताओंसे घिरे, अत्यन्त घने, मानो एक स्थानपर आ मिले सदृश सुन्दर अथवा पानीबहुल देवदारुके वृक्ष यहाँ बड़े मनमोहक लगते हैं। (४६) इनकी शाखाओंके परस्परमें

१ यमकश्लेषचन्धेषु सविन्दुकाविन्दुकयोरभेदाद् गुणानामभेदकत्वान्न दोष ।

कथम्भूताः ? सङ्गता. घना. परस्पर मिलिताः पुनः लतोपेता वल्लीयुक्ताः। यद्वा श्रीमत्तरलतोपेता श्री' शोभाः मत्ताः क्षीबा रलाः मधुपाः तोपः समूहः मत्ताश्च ते रलाश्च मत्तरलाः मत्तरलाना तोप. मत्तरलतोपः श्रीश्च मत्तरलतोपश्च श्रीमत्तरलतोपौ ताभ्यामिता' प्राप्ता. श्रीमत्तरलतोपेताः पुनरपि कथम्भूता. ? गलन्मूर्धप्रसूनका., गलन्ति पतन्ति मूर्द्धभ्यः शिखरेभ्य. प्रसूनानि कुसुमानि येषा तै.। कस्मात् ? शाखोन्मन्थनोत्कम्पात् शाखाविलोडनोद्ध्र्वकम्पात्। कथम् ? वै स्फुट पुनः सुग्लाः म्लानाः पुनः निजघनाभोगा. स्वनिविडविस्ताराः पुन. न्यग्रोधपरिमण्डलाः न्यग्रोधस्येव वटवृक्षस्येव परिमण्डल बुघ्न येषा ते तथोक्ताः। पुनरपि कथम्भूताः ? उद्धृतापाण्डुरश्यामविटपायतबाहव. उद्धृता. उद्दण्डा., आपाण्डुर- श्यामा. ईषच्छुक्लश्यामा' उद्धृताश्च ते आपाण्डुरश्यामाश्च उद्धृतापाण्डुरश्यामा. ते च ते विटपाश्च उद्धृतापाण्डुरश्यामविटपाः क्षुद्रशाखास्त एवायता दीर्घा. बाहवो हस्ता. येषा ते तथोक्ता'। पुन सक्षिप्तबन्धुरस्कन्धा. ह्रस्वमनोहरशाखाजन्मस्थानाः। पुन. प्रवालबहुलश्रियः प्रवालाना कोमलपल्लवाना बहुला प्रचुरा श्री शोभा येषा ते तथोक्ताः। पुनः कान्ता मनोज्ञा., अथवा क जलमन्ते समीपे येषा ते कान्ता.।

भारतीयः–हे युधिष्ठिर, व्रजकान्ता गोप्यश्चकासति। कया ? प्रियवल्लवलीलाल्या प्रियगोपकटाक्ष- मालया। क्व ? इतः प्रदेशे। कथम्भूता. सत्यः ? सङ्गताः मिलिता'। पुन. श्रीमत्तरलतोपेता श्रीमत्यश्च तास्तरलतोपेताश्च श्रीमत्तरलतोपेता. शोभावच्चञ्चलत्वयुता.। पुनः सरला' ऋजव' पुनः गलन्मूर्द्धप्रसूनका- श्च्यवन्मस्तककुसुमा.। कस्मात् ? वैशाखोन्मथनोत्कम्पात् वैशाखो मन्थनदण्ड तस्य यदुन्मन्थन तस्मात् य उत्कम्पस्तस्मात् मन्थनदण्डविलोडनोर्ध्वकम्पनादित्यर्थ.। पुन. सुग्लानिर्जघनाभोगो यासा ता अतिक्लेशप्राप्तकटिमध्यप्रदेशाः सव्यपत्रिकप्रदेशा इत्यर्थ। पुन. न्यग्रोधपरिमण्डला' तिर्यग्रोधकटिप्रदेशा.। पुनरुद्धृतापाण्डुरश्यामविटपायतबाहवः उद्धृतापाण्डुरश्यामविटपा वत्तुलेपत्पाण्डुरश्यामविटपा इवायता बाहवो यासा ता. पुन. सक्षिप्तबन्धुरस्कन्धाः व्यापारितमनोज्ञासा. पुन प्रवालबहुलश्रियः प्रकृष्टकेशप्रचुर- श्रिय.[1] ॥४७ ४८॥

**पद्मरागप्रभाजालं विलोक्य शिखिनो गजाः।**
**शङ्कया वनराजीषु विद्रवन्त्यमुतः प्रभो ॥४९॥**

पद्मेति–हे प्रभो, हे स्वामिन् ! अमुतोऽस्मात्प्रदेशात् गजा. हस्तिन विद्रवन्ति। किं कृत्वा ? पूर्वं पद्मरागप्रभाजाल शोणमणिप्रभासमूह विलोक्य निरीक्ष्य। कया ? शिखिन. दावाग्नेः शङ्कया भ्रान्त्या। कासु ? वनराजीषु कान्तारश्रेणिषु।

---

रगड़नेके कारण जो कम्प होता है उसके द्वारा चोटी तक के फूल झर जाते हैं और मुरझा जाते हैं। इन वृक्षोंकी गोलाई बहुत बड़ी है, वट वृक्षके समान इनका विस्तार है (४७) ऊपर तक चली गयीं श्वेत रक्त अथवा श्यामल शाखाएँ ही इनकी लम्बी भुजाएं हैं, इनके तने सुन्दर और कम ऊँचे हैं तथा नूतन सुकुमार पत्रोंने इनकी शोभाको अनेक गुणित कर दिया है। (४८) [ हे लक्ष्मीनिवास युधिष्ठिर ! यहाँपर व्रजकी स्त्रियोंकी शोभा व्याप्त है क्योंकि प्रेमी गोपोंके कटाक्ष उनपर बरस रहे हैं, सरल होकर भी वे चञ्चलतासे पूर्ण हैं, उनका आचरण समीचीन है, मथानीको चलानेके कारण उनके शिरके भूषण फूल बिखर गये हैं, जंघाएँ ऐसी पुष्ट और विस्तृत हैं कि वे थक जाती हैं, कटि प्रदेश विस्तृत और वर्तुल है, कोमल शाखाओंके समान सुकुमार तथा लम्बी भुजाओंको वे लीलासे उठाये हैं, सुन्दर कंधे ढले हुए हैं तथा लम्बे लम्बे केशोंने उनकी शोभाको अनन्त गुणित कर दिया है ] ॥ ४६–४८ ॥

हे रावण ! पद्मराग मणियोंकी फैली हुई लाल लाल कान्तिको देखकर दावानलकी आशंकासे हाथी इस जंगलसे दूसरे जंगलोंको भाग जाते हैं। [ हे धर्मराज ! पर्वती मयूर

१. श्लेष –द०, ना०।

भारतीयः पक्ष –हे प्रभो, हे विभो युधिष्ठिर ! अगजा पर्वतजा' शिखिन' मयूरा' शङ्कया भीत्या विद्रवन्ति, अपि तु न , शङ्का विहाय निःशङ्कीभूत्वा खादन्तीत्यर्थ. । कुत. ? अमुत. प्रदेशात् । किं कृत्वा ? पूर्वं विलोक्य । किम् ? पद्मरागप्रभाजाल किञ्जल्ककान्तिश्रेणिम् । कासु ? वनराजीषु पय'पङ्क्तिष्विति[1] ॥४९॥

**शस्यकं हरितग्रासबुद्ध्या वातमजा मृगाः ।**
**ढौकन्ते चापयन्त्यस्मिंश्चलानामीदृशी गतिः ॥५०॥**

शस्यकमिति–वातमजा वातमजन्तीति वातमजा मृगा हरितग्रासबुद्ध्या शस्यक नीलमणि ढौकन्ते आश्रयन्ति अपयन्ति च परित्यजन्ति च । क्व ? अस्मिन् प्रदेशे, युक्तमेतत्, हा कष्ट चलाना प्राणिनामीदृशी गति. स्यात् ।

भारतीय'–वातमजा मृगाः हरितग्रासबुद्ध्या अल्प शस्य शस्यक क्षुद्रधान्य ढौकन्ते अपयन्ति च । शेष प्राग्वत्[2] ॥५०॥

**एषा पक्वफलाशालिसम्पदम्भोजशालिनी ।**
**बहुशोभास्थली लाति मोहनीयातिरम्यताम् ॥५१॥**

एषेति–एषा स्थली अतिरम्यामतिरमणीयता लाति आदत्ते । कथम्भूता ? पक्वफलाशालिसम्पत् पक्वे फले आशा यस्या सा, पक्वफलाशाऽलिसम्पद्यस्या सा पक्वफलेच्छुभ्रमरसमूहा । पुन' । अम्भोजशालिनी पद्मशोभिनी । पुन बहुशोभा प्रचुरदीप्ति. पुन मोहनीया मोहोत्पादिका ।

भारतीय.–याति व्रजन्ति । का ? एषाऽलिसम्पत् । काम् ? रम्यताम् । मनोज्ञताम् । बहुशो वारवारम् । कथम्भूता ? पक्वफलाशा पुनरम्भोजशालिनी पद्मराजिता पुन भास्थलीलातिमोहनी भाया तिष्ठतीति भास्था, भास्था चासौ लीला च भास्थलीला तयाऽतिमोहनी मोहोत्पादिका पिङ्गदीप्तिस्थितशोभयामोहनीति[3] ॥५१॥

**अपि चामीकरिकुलैः सुतरामाकुलैर्युताः ।**
**सिंहकेसरसञ्छन्ना बहुधान्यातिदुर्गमाः ॥५२॥**
**रम्यभावोदयादिक्षु द्राक्षापूगैरलङ्कृताः ।**
**ग्रथिता नागवल्लीभिः स्फुरन्तीभिरितस्ततः ॥ ५३ ॥**

---

जल-स्थलोंमें व्याप्त कमलोंके पराग और कान्तिके विस्तारको देख कर क्या डर कर इस वनसे भागते हैं ? अपितु निशंक होकर कमल-परागका पान करते हैं ] ॥ ४९ ॥

हे रावण ! इस वनमें वायुसे भी द्रुतगामी हिरण हरी घास समझ कर नीलमणियोंके पास जाते हैं और निराश होकर लौटते हैं । ठीक ही है, चचलोंकी यही गति होती है । [ हे युधिष्ठिर ! इस देशमें बकरे तथा हिरण नवजात धान्यकी सुगन्धसे आकृष्ट होकर हरी हरी घास खानेकी इच्छासे जाते हैं किन्तु भगा दिये जाते हैं, लोलुपोंका यही हाल होता है ] ॥ ५० ॥

सब ओर पके फलोसे व्याप्त, गूँजते हुए भौरोंके समूहसे घिरी कमलिनी युक्त अत्यन्त सुन्दर और मनमोहक यह भूमि रमणीयताकी अति है । [ पके फलोंपर मुग्ध, कमलोंके द्वारा उद्दीप्त, कलामय क्रीडाके कारण अत्यन्त उन्मत्त, यह भौरोंकी शोभा सौन्दर्यका चरम विकास है ] ॥ ५१ ॥

अन्वय—अस्मिन् सुतराम् आकुलै करिकुलैर्युता, सिंहकेशर-सञ्छन्ना, बहुधा-अन्यातिदुर्गमा , रम्यभावोदया, दिक्षु द्राक्षापूगैरलङ्कृता, इतस्ततः स्फुरन्तीभि नागवल्लीभि ग्रथिता, सेव्याग्रा, मानरहिता द्रुमाकुला अष्टापदोपेतसचारा अमी सानुभोगा श्रिय दधति ।

---

१ अत्र कृत शरत्कालपरामर्श । २ अर्थान्तरन्यासो–व०, ना० । ३ श्लेष'–अ०, ना० ।

सेव्याग्रामानरहिताः सानुभोगा द्रुमाकुलाः ।
अस्मिन्नष्टापदोपेतस रा दधति श्रियम् ॥ ५४ ॥ ( कुलकम् )

अपीति—अमी दृष्टिपथमायाताः सानुभोगाः पर्वतनितम्बविस्ताराः अस्मिन्दण्डके श्रिय दधति धरन्ति । कथम्भूताः ? करिकुलैः गजवृन्दैर्युताः । कथम्भूतै' करिकुलैः ? सुतरामाकुलैः व्यग्रैः पुनः सिंहकेसर-सञ्छन्नाः कण्ठीरवकण्ठकेसरप्रच्छादिताः पुनः बहुधान्यातिदुर्गमाः बहुधा बहुप्रकारैरन्यैः श्वापदैरतिदुर्गमाः नानाप्रकारापरश्वापदातिदुःप्रवेशाः पुनः रम्यभावोदयाः पुनर्दिक्ष्वाशासु द्राक्षापूगैरलङ्कृताः पुनः नाग-वल्लीभिः ताम्बूलीलताभिः सर्पश्रेणिभिर्हस्तिश्रेणिभिरिति केचित् । ग्रथिता गुम्फिताः । कथम्भूताभिः ? इतस्ततः स्फुरन्तीभि' विजृम्भमाणाभि. । पुनः सेवाग्राः आश्रयणीयशिखराः पुनः मानरहिता इयत्ता त्यक्ता, अत्यन्तविस्तीर्णा इत्यर्थः । पुनः अष्टापदोपेतसञ्चारा. शरभाश्रितमार्गाः ।

भारतीय.—हे युधिष्ठिर, अपि शब्दस्यायमर्थ., अस्मिन्देशे पत्तनाना तावदास्ता वर्णना ग्रामा अपि श्रिय विभूतिं दधति । कथम्भूताः ? चामीकरिकुलै' सुवर्णाढ्यपुरुषसन्तानैर्युक्ताः । कथम्भूतैः ? सुतरामाकुलैः सुताः पुत्राः रामाः भार्यास्ताभिराकुलै., यद्वा सुतरामाणा कुल येषा तानि तैः सुतसमूहरामासमूहयुक्तैरित्यर्थः । पुनः सिंहकेसरसञ्छन्नाः सिंहकेसराः वृक्षविशेषास्तै. सञ्छन्ना पुनः बहुधान्यातिदुर्गमाः प्रचुरसस्यातिदुर्गमा. पुनरिक्षुद्राक्षापूगै. इक्षव प्रसिद्धा' द्राक्षा गोस्तन्य. पूगाः क्रमुकद्रुमाः तैरलङ्कृता' । कस्मात् ? रम्यभावो-दयात् रमणीयताभ्युदयात् पुनः नागवल्लीभिः ताम्बूलीभि. ग्रथिता. । कथम्भूताभिः ? इतस्ततः स्फुरन्तीभिः पुन. सेव्या आश्रयणीयाः पुनः नरहिताः मनुष्यहिता' पुनः सानुभोगाः विस्तीर्णाः पुनरष्टापदोपेतसञ्चाराः सुवर्णान्वितनिर्गमप्रदेशा.[१] । इति कुलकम्[२] ॥ ५२-५४ ॥

बहुधातुगणाकीर्णान्सुमहावागुणादिमान् ।
शब्दागम इवोद्देशान्देवलोको न मुञ्चति ॥५५॥

बह्विति-देवलोक' सुरसमूह. इमान् उद्देशान् न मुञ्चति न परित्यजति । ऊर्ध्वं गताः देशा उद्देशा उच्चप्रदेशाः पर्वतादयो वा तान् । कथम्भूतान् ? बहुधातुगणाकीर्णान् प्रचुरगैरिकादिसमूहसकुलान् । कथ-म्भूतो देवलोक. ? सुमहा. शोभनतेजाः । वागुणात् ऊ ईश्वरः आ ब्रह्मा अ. नारायणः उश्च आश्च अश्च वाः वाना गुणः वागुणस्तस्मात् हरहिरण्यगर्भहरीणा प्रतापगुणात् शरीरकान्तिगुणाच्च अधिकप्रताप अधिकशरीर-

---

और भी देखिये, इस दण्डक वनमें ये पर्वतोंके ढाल कितने शोभापूर्ण हैं, स्वयं ही इकट्ठे हुए हाथियोंके झुण्डोंसे भरे हैं, सिंहोंकी अयालके बालोंसे ढके हैं, बहुधा दूसरे हिंस्र पशु भी यहाँसे निकलते डरते हैं, सब दिशाओंमें खड़े अंगूर सुपारी आदिके वृक्षों तथा इधर-उधर लहलहाती पानकी वेलोंसे गुथे होनेके कारण, सुन्दर भावोंके प्रेरक रमणीय शिखरोंसे भूषित, विस्तृत होकर भी वृक्षोंसे पूर्ण तथा भाँति भाँतिके शरभ आदि मृग इसमें कूदते फिरते हैं ॥ ५२-५४ ॥

अन्वय—अस्मिन् च चामीकरिकुलैर्युता, सुत-रामाकुलै, सिंहकेशरसञ्छन्नो, बहुधान्या-अति दुर्गमा, रम्यभावोदयात् इक्षुद्राक्षापूगैरलकृता, इतस्तत स्फुरन्तीभि नागवल्लीभिर्ग्रथिता, नरहिता., सानुभोगा, द्रुमाकुला, अष्टापदोपेतसञ्चारा. सेव्या ग्रामा अपि श्रियं दधति ।

इस देश में पत्नी पुत्र तथा कुटुम्बियों युक्त धनवान लोगोंके समूहोंसे व्याप्त, सिंह केशर वृक्षोंसे पटे, धान्यके खेतोंमें दबी पगडण्डियों युक्त, सौन्दर्य लक्ष्मीकी कृपाके कारण ईख, दाख तथा सुपारी आदिसे परिपूर्ण, इधर-उधर घूमते हुए हाथियोंकी पंक्तियोंसे गुँथे, मनुष्योंके कल्याणकारी, अनुकूल भोग समन्वित, दोनों ओर वृक्षोंसे युक्त तथा स्वर्ण निर्मित सदृश मार्गोंसे पूर्ण ग्रामोंकी भी शोभा अवर्णनीय है ।

१. प्रवेश –प०, द० । २. श्लेप –व०, ना० ।

तेजाश्चेत्यर्थ । क इव न मुञ्चति ? शब्दागम इव व्याकरणमिव । यथा शब्दागमः उद्देशान् प्रकरणानि न त्यजति । कथम्भूतान् उद्देशान् ? बहुधातुगणाकीर्णान् बहुभिर्धातुगणैराख्यातसङ्घैराकीर्णान् सकुलान् । कथम्भूत शब्दागम ? सुमहावाक् शोभना महता शिष्टना वाग्वाणी यस्मात् स सुमहावाक् पुन उणादिमान् उणादिप्रत्यययुक्त इत्यर्थ ।

भारतीय –हे देव हे युधिष्ठिर न मुञ्चति । क. ? लोक. अष्टादशप्रकृतिजो जनः । कान् ? उद्देशान् उत्कृष्टान्देशान् धनजनकनकसस्यसमृद्धान् , पुन. बहुधातुगणाकीर्णान् प्रभूतसुवर्णरूप्यलोहताम्रादिसमन्वितान् । किंविशिष्टो लोक. ? सुमहावा. शोभनैरुत्सवैरावाति समन्तात्प्रवर्त्तते सुमहावा । पुन. गुणादिमान् वीर्यौदार्यादियुक्त उपमार्थः प्राग्वत्[1] ॥५५॥

**मन्दरागः स्वयं साक्षान्मन्त्रकृद्भिरधिष्ठितः ।**
**पुण्याश्रमो विभात्येष सानुमाननया श्रिया ॥५६॥**

मन्देति–एष सानुमान् अनया श्रिया विभाति शोभते । कथम्भूत. ? मन्दराग. मन्दरश्चासावगश्च मन्दराग. मेरु । कथम् ? स्वय स्वरूपेण । पुनः मन्त्रकृद्भि विद्याधरै. साक्षात् परमार्थवृत्त्याधिष्ठित आश्रितः । पुन कथम्भूत. ? पुण्याश्रम पुणयति पुमास शुभे कर्मणि प्रवर्त्तयतीति पुण्यम् "योचोरासुयुव." [ जै० २।१।८४ ] इति य प्रत्यय । पुण्यसयोजनहेतुत्वात् पुण्यानामुपलभ्यमानत्वादाश्रम. पुण्याश्रमो जनानामिति।

भारतीयः—एष पुण्याश्रम. विभाति । पुण्यस्य सम्यक्तपश्चरणादिजनितशुभपरिणामलक्षणस्यानुभवत्वात् पुण्या. यतयस्तेषामाश्रमः पुण्याश्रम । कया कृत्वा ? अनया प्रत्यक्षभूतया श्रिया शोभया । कथम्भूतः ? सानुमान् सया लक्ष्म्या सह जनमनुमानयत्यनुबन्धयतीति सानुमान् लक्ष्मीप्रदानसमर्थ इत्यर्थ । पुन. मन्दरागः मन्दो रागो यत्र स पुन. मन्त्रकृद्भि. योगिभि स्वयमात्मना साक्षात् परमार्थतोऽधिष्ठित.[1] ॥ ५६ ॥

---

अन्वय—शब्दागम इव बहुधातुगणाकीर्णान् , वागुणादिमान् उद्देशान् सुमहा देवलोको न मुञ्चति ।

व्याकरण के समान गेरु आदि समस्त धातुओंसे भरपूर ( भ्वादि क्रियागणोंसे पूर्ण ) ऊ ( शिव )+आ ( ब्रह्मा ) + अ ( विष्णु ) वा अर्थात् महेश-ब्रह्मा-विष्णुके गुणोंसे युक्त ( उणादि प्रकरणों सहित ) अत्यन्त तेजस्वी ( शुद्ध तथा आर्य वाक्योंके जनक ) ऊँचे स्थलोंको ( प्रकरणोंको ) देव लोग नहीं छोड़ते हैं ।

अन्वय—हे देव ! गुणादिमान् सुमहावाः लोक शब्दागम इव बहुधातुगणाकीर्णान् उद्देशान् न मुञ्चति ।

हे धर्मराज ! वीर्य शौर्य आदि गुणोके धारक, सुन्दर उत्सवोंमें सम्मिलित होनेके लिए आतुर, अठारह प्रकृतिके लोग सोना आदि धातुओंसे पूर्ण इस उत्तम देशको नहीं छोड़ते हैं ॥ ५५ ॥

अन्वय–स्वयं मन्दराग , मन्त्रकृद्भि साक्षादधिष्ठित पुण्याश्रम एष सानुमान् अनया श्रिया विभाति ।

स्वभावसे ही सुमेरु पर्वत तुल्य, विद्याओंके साधकों ( विद्याधरों ) की प्रमुख निवास भूमि तथा शुभ आचरणके कारण आश्रम तुल्य यह पर्वत इस छटासे चमक रहा है ।

अन्वय—मन्त्रकृद्भिरधिष्ठित स्वय मन्दराग , सानुमान्, एष पुण्याश्रम अनया श्रिया विभाति ।

मन्त्रोच्चारणमें लीन तपस्वियोंसे व्याप्त, स्वयमेव राग-द्वेषकी हीनताको प्राप्त ज्ञानादि रूप अन्तरंग लक्ष्मीके कारण आकर्षक यह पुण्यात्माओंका आश्रम साधनाकी सुन्दरतासे सुशोभित है ॥५६॥

---

१ श्लेषः—द०, ना० ।

**एष चापगुणोन्मुक्तविकसद्वाणसंहतिः ।**
**प्रदेशेऽस्मिन्नभीरामः प्रकाममवलोक्यताम् ॥५७॥**

एष इति–भो रावण ! एष रामोऽवलोक्यताम् त्वया । क्व अस्मिन्प्रदेशे । कथम्भूतः ? चापगुणोन्मुक्तविकसद्वाणसहतिः चापगुणेन धनुर्मौर्व्या कृत्वोन्मुक्ता विसृष्टा विकसन्ती स्फुरन्ती वाणसहतिः शरपङ्क्तिर्येन सः अभीः निर्भयः । कथम् ? प्रकाममत्यर्थम् ।

भारतीयः—हे युधिष्ठिर ! एप पुण्याश्रमः त्वयाऽवलोक्यताम् । कथम्भूतः ? अपगुणोन्मुक्तविकसद्वाणसहतिः अपगुणेनावग्रहेणोन्मुक्ता विकसन्ती वाणाना वृक्षविशेपाणा सहतिः पङ्क्तिर्यत्र सः पुनरभीरामः मनोज्ञः। क्व ? अस्मिन्प्रदेशे । कथम् ? प्रकामम्[1] ॥ ५७ ॥

**शरप्रवाहदुर्गेऽस्मिञ्छ्रीसम्पल्लक्ष्मणान्विते ।**
**देशभग्नेभदन्ताढ्ये दृश्यतां दीप्रतागुरुः ॥५८॥**

शरेति–रामः दृश्यताम् । कथम्भूतः ? दीप्रतागुरुः दीप्रतया प्रतापेन गुरु. । क्व ? अस्मिन्देशे प्रदेशे । कथम्भूते प्रदेशे ? शरप्रवाहदुर्गे मार्गणगणविषमे पुनः श्रीसम्पल्लक्ष्मणान्विते श्रीसम्पत्सीता लक्ष्मणः सौमित्रिः ताभ्यामन्विते पुनः भग्नेभदन्ताढ्ये भग्नैर्जर्जरैरिभदन्तैः गजरदैराढ्ये सयुक्ते ।

भारतीयः–एप च पुण्याश्रमो दृश्यताम् । कथम्भूत ? दीप्रतागुरु. दीप्रतया तपश्चरणादिना गुरुः । क्व ? अस्मिन् देशे । कथम्भूते देशे ? शरप्रवाहदुर्गे पय.पूरदुःप्रवेशे पुनः श्रीसम्पल्लक्ष्मणा शोभासमृद्धिचिह्नेनान्विते पुनः अभग्ने निरुपद्रवे पुन. भदन्ताढ्ये भदन्तै[2] पूज्यै. पुम्भिराढ्ये युते[3] ॥५८॥

**अहो परमरौद्रत्वमसिधाराव्रतैश्रिता ।**
**धत्ते सङ्ग्रामदुर्गान्तर्भूमिर्नरकपालिनी ॥५९॥**

अहो इति–अहो आश्चर्ये असावन्तर्भूमि. समीपवर्त्तिनी भूमिः परमरौद्रत्वमतिशयेन भीष्मत्व धत्ते धारयति । कथम्भूता सती ? सग्रामदुर्गा खरदूपणविहितसमरदुःप्रवेशा पुनः असिधाराव्रतैरसिधारैव व्रत येपा तैः क्षत्रियकुमारैश्रिता उपचय प्राप्ता पुनः नरकपालिनी मनुष्यकरोटिवती ।

---

इस स्थानपर धनुषकी डोरीसे छोड़े गये बढ़ते हुए वाणोंकी पंक्तिसे युक्त निर्भय राम हैं । इन्हें जी भरके खोज लो ।

अन्वय–अस्मिन्प्रदेशे च अपगुणोन्मुक्तविकसद्वाणसंहति· अभीराम एप· प्रकाममवलोक्यताम् ।

इस स्थानपर ही जलराशिकी भरमारके कारण विकसित वाण वृक्षोंकी पंक्तियाँ हैं ये अत्यन्त सुन्दर लगती हैं । इन्हें खूब देखिये और प्रमुदित होइये ॥५७॥

वाण वर्षाके कारण संकटापन्न, टूटकर गिरे हाथीदाँतोंसे व्याप्त इस देशमें लक्ष्मी स्वरूप सीताजी तथा लक्ष्मणके साथ रहते हुए तेजस्वियोंके गुरु रामको भलीभाँति खोजिए ।

अन्वय–शरप्रवाहदुर्गे, श्रीसम्पल्लक्ष्मणान्विते, भदन्ताढ्ये, अभग्ने अस्मिन् देशे दीप्रतागुरु· दृश्यताम् ।

पानीकी बाढ़के कारण दुर्गम, लक्ष्मी और कान्ति रूपी चिह्नोंके धारक, श्रमणोंसे परिपूर्ण तथा अखण्ड इस देशमें तपके प्रतापयुक्त इस आश्रमका दर्शन कीजिए ॥५८॥

 र धारण करनेके व्रती वीरोंसे पटी, कुछ समय पूर्व हुए घोर युद्धके कारण अगम्य और मनुष्योंके कपालोंसे व्याप्त यह युद्धस्थली और दुर्गके बीचकी भूमि अत्यन्त भीषणताको धारण किये है ।

१. श्लेप.—ब०,ना०।२.संसारासातापरिज्ञानेन वैरङ्गिके पुरुपैराश्रिते–प०,द०।३.श्लेपः–ब०,ना०।

भारतीय –असौ सङ्ग्रामदुर्गान्तर्भूमि' समीचीनग्रामप्राकार मध्यावनि' अरोद्रत्व प्रसन्नत्व धत्ते । कथम्भूतम् ? परमुत्कृष्टम् । कथम्भूता ? असिधाराव्रतैः असिधारेव व्रत येषा ते परदारासहोदरैः सत्पुरुषैः यद्वा दृढतपश्चरणादिव्रतधुरन्धरैः योगिभिश्रिता पुन. नरकपालिनी नरान् केन सुखेन पालयतीति सा तथोक्ता[1] ॥५९॥

**प्रभञ्जनाकुलाशोकभिन्ना पुन्नागसंहतिः ।**
**एतस्मिन्नीदृशं कालं प्राप्य राजन्न राजती ॥६०॥**

प्रभञ्जनेति–हे राजन् भो रावण ! न राजति न शोभते । काऽसौ ? पुन्नागसहतिः सत्पुरुषसमूह. । किं कृत्वा ? पूर्वं प्राप्य लब्ध्वा । कम् ? काल लक्ष्मणम् । कथम्भूतम् ? ईदृशम् । क ? एतस्मिन्नत्र दण्डकाख्ये वने । कथम्भूता सती ? प्रभञ्जनाकुला प्रध्वसव्यग्रा । पुन शोकभिन्ना मन.क्लेशजनितान्तःसन्तापतप्ता ।

भारतीय –हे राजन् ! पुन्नागसहति पुन्नागा वृक्षविशेपास्तेपा सहति. न राजति, अपितु राजत्येव । किं कृत्वा ? काल शरत्समय प्राप्य । कथम्भूता ? प्रभञ्जनाकुलाशोकभिन्ना प्रभञ्जनेन वायुना आकुलैरशोकैर्वृक्षविशेषैर्भिन्ना वाताहतपिण्डीद्रुममिश्रीभूता[2] ॥६०॥

**नृपहेतुरगान् पश्य त्वं लक्ष्म्या ज्वलितानिमान् ।**
**वैरिदावाग्निसन्तापविदग्धान् पतितानितः ॥६१॥**

नृपेति—हे नृप भो रावण ! पश्य निरीक्षस्व । कोऽसौ ? त्वम् । कान् ? इमान् तुरगान् । कथम्भूतान् ? पतितान् । क ? इत. प्रदेशे । पुन' कथम्भूतान् ? ज्वलितान् शोभितान् । कया ? लक्ष्म्या शरीर शोभया । पुन कथम्भूतान् ? वैरिदावाग्निसन्तापविदग्धान् वैरिणश्च ते दावाग्नयश्च, तेषा सन्तापस्तेन विदग्धान् विपक्षवनवह्निभस्मीकृतान् ।

भारतीय –हे नृप युधिष्ठिर ! पश्य । कोऽसौ ? त्वम् । कान् ? इमान् अगान् वृक्षान् । किंविशिष्टस्त्वम् ? हेतुः कारणम् । कस्या ? लक्ष्म्या' श्रिय । कथम्भूतान् ? पतितान् । क ? इत अत्र । कथम्भूतान् ? ज्वलितान् दीप्तान् । पुन कथम्भूतान् ? वैरिदावाग्निसन्तापविदग्धान् वैरीव वैरी, स चासौ दावाग्निश्च, तस्य सन्तापः । तेन विदग्धान्[3] ॥६१॥

**वेगिनीमिह पश्यामि नदीनां स्यन्दनक्रियाम् ।**
**कुञ्जराजिश्रियं चोच्चैस्तीक्ष्णाङ्कुशमुखोद्यताम् ॥६२॥**

---

ब्रह्मचर्यादि असिधारा व्रतोंके पालक लोगोंकी निवासभूमि, मनुष्यमात्रका सुखपूर्वक पालन पोषण करती यह आदर्श ग्रामोंकी चारदीवारीके भीतरकी भूमि अत्यन्त करुणामय रूपसे युक्त है ॥५९॥

हे राक्षसराज ! सर्वथा विनाशसे व्याकुल, शोकके कारण भग्न-मनोरथ नागवंशी श्रेष्ठ पुरुषोंकी जाति यहाँपर इस समय ऐसे दुर्दिनको प्राप्त होकर शोभित नहीं हो रही है ।

हे धर्मराज ! प्रबल वायुवेगसे पीड़ित अशोक वृक्षोंसे टकरायी पुन्नाग वृक्षोंकी कतारें यहाँपर इस सुन्दर शरत् ऋतुको प्राप्त करके क्या शोभित नहीं होती है ? अपितु विशेष रूपसे शोभित हो रही है ॥६०॥

हे लकेश्वर ! शरीरकी शोभासे जगमग, शत्रुओंकी सेनारूपी दावाग्निकी लपटोंमें भस्मीकृत और इधर उधर गिरे इन घोड़ोंको आप देखें । [ समस्त सम्पत्तिके निधान हे धर्मराज ! शत्रुभूत वनाग्निकी लपटोंके द्वारा जलाये गये तथा अब भी धधकते हुए इन वृक्षोंको आप देखें ] ॥६१॥

---

१, श्लेष –व०, ना० । २, श्लेष –व०, ना० । ३, श्लेष –व०, ना० ।

वेगिनीमिति–भो रावण ! स्यन्दनक्रिया रथव्यापार न पश्यामि नेक्षे। कथम्भूता न पश्यामि ? दीना म्लानाम्, अपि तु पुष्टा पश्यामीति भाव.। कथम्भूता सतीम् ? वेगिनीं वेगवतीम्। क ? इह दण्डके। तथा च न पश्यामि। काम् ? कुञ्जराजिश्रिय कुञ्जराणामाजिस्तस्या श्रीस्ताम् समाजसमरशोभाम्। कथम्भूता न पश्यामि ? दीनामपि तु पुष्टा पश्यामीति भावः। कथम्भूताम् ? उच्चैस्तीक्ष्णाङ्कुशमुखोद्यतामतितीक्ष्णसृणिमुखसङ्कुचिताग्राम्। अनेन भद्रत्व राजवाहनत्व च गजाना प्रदर्शितमिति।

भारतीय.— इह प्रदेशे नदीना तरङ्गिणीना स्यन्दनक्रिया स्रवणव्यापार पश्यामि। कथम्भूताम् ? वेगिनीं रयवतीं तथा कुञ्जराजिश्रियं झाटकवृन्दशोभा पश्यामि। कथम्भूताम् ? उच्चैरुच्चा पुनस्तीक्ष्णा निरीक्षणीया पुनः कुशमुखोद्यता दर्भाग्रनिर्भिन्नाम्[1] ॥ ६२ ॥

**सर्वत्र विषयेऽमुष्मिन्भ्रान्तदृष्टिरितस्ततः।**
**न पश्यामि क्वचित्तीव्रं द्विषतां खरदूषणम् ॥६३॥**

सर्वत्रेति–हे रावण ! अह शूर्पणखा खरदूषण रावणस्यालक क्वचित्कस्मिंश्चित्स्थाने न पश्यामि। कथम्भूतम्? द्विषता शत्रूणा तीव्र सोढुमशक्यम्। कथम्भूताऽहम् ? सर्वत्रामुष्मिन् विषये समस्ते दण्डके भ्रान्तदृष्टिः प्रचलितलोचना।

भारतीय.—हे युधिष्ठिर ! अह द्विषतामरीणा तीव्र निर्दय खरदूपण निष्ठुरापराध न पश्यामि। शेष प्राग्वत् ॥ ६३ ॥

**देव किं बहुनानेन साधुनाऽसाधुनाथवा।**
**निष्पश्चिममिदं पश्य नेत्रमात्राखिलेन्द्रियः ॥६४॥**

देवेति–हे देव स्वामिन्। किम् ? 'अत्र किमिति शब्द. प्रतिषेधाभिधायी द्रष्टव्यः। अव्ययानामनेकार्थत्वात्। किं पूर्यते अनेन परिजल्पितेन। कथम्भूतेन ? बहुना प्रचुरेण पुनः साधुना मनोज्ञेन अथवा असाधुनाऽमनोज्ञेन निष्पश्चिममद्वितीयमिद वक्ष्यमाण नेत्रमात्राखिलेन्द्रियः सन् नेत्रमात्राणि नेत्रयोर्विलीनानि सकलानि स्पर्शनादीनीन्द्रियाणि यस्य स त्व पश्य नेत्रेन्द्रिये सकलानीन्द्रियाणि प्रवेश्य दृश्यता सावधानो भवेत्यर्थः ॥६४॥

**पट्टः सुघटविस्तारसमस्तन्यायनीतिषु।**
**रहितोदारतुष्टात्मा मदिराक्षीवताशया ॥ ६५ ॥**

---

हे रावण ! यहाँपर अत्यन्त तीव्र गतिसे चलते रथोंको देखती हूँ—उनमें ढिलाई नहीं है; नुकीले अंकुशके संकेतपर चलनेके लिए प्रस्तुत हाथियोंकी पंक्तिकी शोभा भी सर्वोपरि है। [ हे धर्मराज इस ऋतुमें नदियोंके प्रवाहकी गति तेज दिखती है तथा देखने योग्य, अत्यन्त सुन्दर कांसकी धारसे कटी हुई कुञ्ज समूहकी शोभाको देखता हूँ ] ॥६२॥

इस पूरे क्षेत्रमें इधर-उधर सब तरफ नजर घुमाकर भी मैं सूर्पणखा शत्रुओंके लिए दारुण तुम्हारे बहनोई खर-दूपणको कहींपर भी नहीं देख पाती हूँ। [ इस क्षेत्रमें इधर-उधर सब ओर नजर गड़ाकर देखनेपर भी कहींपर शत्रुओंके तीव्र अपराधका पता नहीं लगता है ] ॥६३॥

हे रावण ! इस विपयकी भली अथवा बुरी इस विस्तृत चर्चाको जाने दीजिए। तथा आप ही सब इन्द्रियोंकी शक्तिको नेत्रोन्मुख करके पहिले कभी न देखी हुई इसको (सीताको) देखिये। [ हे धर्मराज ! यह ऋतु मनोज्ञ है अथवा साधनविहीनोंके लिए कष्टकर है। इसका लम्बा वर्णन करनेसे क्या लाभ है ? इस अभूतपूर्व रमणीयताको देखिये और देखते-देखते नेत्रेन्द्रिय मात्र हो जाइये ] ॥६४॥

---

१ श्लेप—द०, ना०।

पद्मपाणिरशोकाङ्घ्रिः पक्वबिम्बाधरोन्नतिः ।
गम्भीरनाभिरुत्तुङ्गवक्षाश्चन्द्राननद्युतिः ॥ ६६ ॥
कम्बुग्रीवालघुश्रोणिः स्निग्धकेशान्तसंततिः ।
सुभ्रूर्मण्डूककक्षाश्रीश्चारूरू रम्यतावधिः ॥ ६७ ॥
नखैः कुरवकच्छायैः श्लिष्टैरङ्गुलिपर्वभिः ।
दशनैः शिखराकारैर्व्यज्यमानोदयाकृतिः ॥ ६८ ॥
विनीतवेषमाकारं वाणीमभिजनोचिताम् ।
शीलं रूपानुरूपञ्च व्याददानोदयान्वितम् ॥ ६९ ॥
आश्रमः सर्वशास्त्राणामाकरः सर्वसम्पदाम् ।
अन्योन्यसमयुग्माङ्गव्यञ्जनानामुपाश्रयः ॥ ७० ॥
आभिरूप्यस्य नियतिः सीमा सौभाग्यसम्पदः ।
लावण्यस्य पयोराशिः कलानां नित्यचन्द्रिका ॥ ७१ ॥
विकाशः कोऽपि कान्तीनां कोऽपि रागस्य सञ्चयः ।
सर्वोपमानदूरात्मा वैदेही दृश्यतामितः ॥ ७२ ॥ (कुलकम्)

पटुरिति—साम्प्रत श्लोकाष्टकेन कुलकेन व्याख्यास्याम'—भो रावण ! दृश्यतामवलोक्यताम् । काऽसौ कर्मतापन्ना ? वैदेही जानकी । क्व ! इत. प्रदेशे अस्मिन्स्थाने । कथम्भूता ! आयनीतिषु गतिव्यापारेषु पटुः दक्षा पुन' सुघटविस्तारसमस्तनी सुशब्द प्रशसार्थो गृह्यते, तेनायमर्थ—घटस्येव कलशस्येव शोभनो विस्तारो ययोस्तौ सुघटविस्तारौ समौ स्तनौ यस्या सा सुघटविस्तारसमस्तनी सुघटविस्तारावित्यनेन पदेन घटस्येव प्रशस्तत्व वर्तुलत्व स्थूलत्व कठिनत्वञ्च, समावित्यनेन पदेन नीचोच्चभावराहित्य स्तनयोर्यस्या. प्रदर्शित सा तथोक्ता । पुनरपि रहितोदारतुष्टात्मा उदारः सकलकलाप्रवीण । औदार्यधर्मकलितो वा तुष्टो राज्यसौख्यानुभवनेन इष्टभोगानुभवनया वा सहृष्ट आत्मा आत्मीयभाव स्वरूपमित्यर्थः । रहित निरस्त. उदारस्तुष्ट आत्मा यया सा रहितोदारतुष्टात्मा, 'एतेन कनकमृगवधाय तत्पृष्ठसलग्नतया धावतो रामस्य विरहाक्रान्ततया सकलकलासु भोगोपभोगसम्भोगेषु चानादरणीयत्व सीताया प्रदर्शितम् । पुन' कथम्भूता ? मदिराक्षी मदिरे मनोज्ञे अक्षिणी यस्या सा कर्णान्तविश्रान्तनेत्रा वताशया वतशब्दोऽव्यय खेदवाची, वत आशयो यस्या सा वताशया पतिवियोगात्सखेदचित्ता । पुन पद्मपाणि. पद्मे इव पाणी यस्या सा पुन अशोकाङ्घ्रि अशोकपल्लव इव अंघ्री यस्या सा । पादयो. सौकुमार्यमारक्तत्वञ्च प्रदर्शितम् । पुन पक्वबिम्बाधरोन्नति. पक्वतुण्डीरोष्ठोन्नति पुन' गम्भीरनाभि पुनरुत्तुङ्गवक्षा' उच्चोरस्तला । पुनश्चन्द्राननद्युतिश्चन्द्रस्येवानने द्युतिर्यस्या. । अनेन वर्तुलत्व कान्तिमत्त्वञ्च प्रदर्शितम् । पुनरपि कथम्भूता ? कम्बुग्रीवा कम्बोरिव सङ्खस्येव ग्रीवा यस्याः

इधर इस सीताको देखिये जिसकी समता कोई भी उपमान नहीं कर सकता है क्योंकि गमनकी लीलामें यह दक्ष है, सुन्दर कलशोंकी गोलाई, उतार चढ़ाव सदृश स्तन हैं, इसका आत्मा अत्यन्त उदार और तृप्त है, नेत्र मादकतासे भरे हैं तथापि इसका मन कालुष्यसे रहित है। हाथ कमल ही हैं, चरण अशोकपत्र ही हैं, पके बिम्बफलोंके समान ही अधरोंकी शोभा है, नाभि गहरी है, वक्षःस्थल उभरा हुआ है, मुखकी कान्ति चन्द्रमातुल्य है, ग्रीवा शंखके समान है, कटि अत्यन्त सूक्ष्म है, जिसपर चिकने लम्बे केशोंकी लट झूम

१ ये कुरवको वृक्षविशेष । कुरवकग्रहणात्कुरवककलिकानां ग्रहणम् । यथा आम्र इत्युच्यमाने आम्रफलाना ग्रहण जायते ।

सा, शङ्खस्येव ग्रीवाया रेखात्रय दर्शितम्। पुनरलघुश्रोणिरलघ्वी श्रोणिर्यस्याः सा विस्तीर्णकटिरित्यर्थः। पुनः स्निग्धकेशान्तसततिः स्निग्धा केशान्तस्य सन्ततिः पङ्क्तिर्यस्या' सा, स्निग्धशब्देनारौक्ष्य कुटिलत्व कान्तिमत्त्व चोक्तम्। पुन' सुभ्रूः शोभने भ्रुवौ यस्याः सुशब्देन भ्रुवोश्चापाकारत्व सूक्ष्मरोमता च उक्ता। पुन' मण्डूककक्षाश्री' भेकपार्श्वाकृतिरित्यर्थ'। पुनश्चारूरुश्चारूरू यस्याः सा, चारुशब्दग्रहणादूर्वोर्निर्लोमत्व वृत्तानुपूर्वीसौकुमार्यञ्च गदितम्। पुनः रम्यतावधिः मनोहरताया. सीमेत्यर्थः। पुनः नखैर्व्यज्यमानोदयाकृतिः व्यज्यमाना प्रकटीक्रियमाणा उदयाकृतिर्यस्याः सा। कथम्भूतैर्नखैः? कुरवकच्छायैः? कुरवकवृक्षकलिकासदृशैः। अत्र नखाना लौहित्य स्निग्धत्वमुच्चत्व दीर्घत्वञ्च कथितम्। तथा अगुलिपर्वभिः। कथम्भूतैः? श्लिष्टैरन्योन्यसलग्नैस्तथा दशनैः दन्तैः शिखराकारैः पक्वदाडिमबीजसदृशैः। अनेन दशनाना स्निग्धत्व ह्रस्वत्व दीप्तिमत्त्व च प्रकटितम्। पुन. कथम्भूता? आकार व्याददाना प्रसादकोपाभ्या जनिता प्रकृतिं गृह्णन्ती। कथम्भूतमाकारम्? विनीतवेष विनीतो वेषो यत्र स तथोक्तस्त विशिष्टजनोचितालङ्कारम्। तथा वाणीं व्याददाना कथम्भूतामभिजनोचिता कुलयोग्याम्। तथा च शील गृहीतव्रतपरिपालनरूपम्। कथम्भूतम्? रूपानुरूप, रूपसदृशम्। पुनः कथम्भूतम्? उदयान्वितमभ्युदययुक्तम्। अत्र विभूत्या सत्या विकारेण व्रतभङ्गो नाभूत् तस्या जानक्या इत्यर्थ.। पुन. कथम्भूता। सर्वशास्त्राणा व्याकरणच्छन्दोऽलङ्कारादीना तथा कामशास्त्राणाञ्च आश्रमः पुनः सर्वसम्पदा समस्तविभूतीनामाकर. खनिः पुनरन्योऽन्यसमयुग्माङ्गव्यञ्जनानामुपाश्रय' अन्योऽन्येन परस्परेण समम् तुल्य युग्म येषा तान्यन्योऽन्यसमयुग्मानि तानि च तान्यङ्गानि च अन्योऽन्यसमयुग्माङ्गानि च तानि व्यञ्जनानि च अन्योऽन्यसमयुग्माङ्गव्यञ्जनानि तेषा तथोक्ताना नेत्रपाणिपादजङ्घादीना तिलकालकादीनाञ्चावष्टम्भ.। पुनराभिरूप्यस्य रमणीयताया नियतिरवधि'। पुनः सौभाग्यसम्पदः सीमा। पुन. लावण्यस्य पयोराशि. समुद्र। पुनः कलाना नित्यचन्द्रिका। पुनः कान्तीना कोऽपि विकाश.। पुनः रागस्य कोऽपि सञ्चयः। पुनः सर्वोपमानदूरात्मा उपमानेभ्य दूर आत्मा स्वरूप यस्याः सा तथोक्ता। तत्रायमर्थ' जानक्या' स्वरूपमुपमान चन्द्रादय उपमेया इति।

भारतीय.—भो युधिष्ठिर! असौ कर्मतापन्नः वै निश्चयेन सर्व देही समस्तः प्राणी दृश्यताम्। कथम्भूत? पटुरित्यादि। सुघटविस्तारसमस्तन्यायनीतिषु सुघटः निश्चयपथमानीत., विस्तार आभोग., समस्ता अखिला., न्याया अपराधानपराधविचारणादय विद्वज्जननिर्णीततर्कोक्ता. परमतनिराकरणा प्रमाणगोचरा वा नीतय. सोमदेवाचार्यप्रणीतनीतिवाक्यानि शास्त्राणि सुघटो विस्तारो यासा ता सुघटविस्तारा., न्यायाश्च नीत-

---

रही है; भृकुटिएं सुन्दर और वक्र है फलतः मेढककी बगलके आकार है, और जघाएं अत्यन्त मनोहर हैं, मानो सौन्दर्यकी चरम सीमा ही है। कुरवक पुष्पके समान रक्त तथा लम्बे नखों, सान्द्र तथा चिकने अँगुलियोंके पोरुवों और अनारदाने तुल्य छोटे और घने दाँतोंके द्वारा इसकी उदीयमान सुन्दर आकृति स्पष्ट है। इसके वेष तथा आकार शिष्ट हैं, बोली कुलीन कन्याके ही अनुरूप है; शील और सौन्दर्य परस्परमें अनुरूप हैं तथा रोपतोपकी मुख-मुद्रादि भी पदके अनुकूल हैं। यह सब शास्त्रोंका आश्रम है, समस्त सम्पत्तियोंकी खान है, एक दूसरेके अत्यन्त समान युगल अंग नेत्र, पाणि, पाद जंघादि तथा तिलादि व्यञ्जनों का एक मात्र आधार है। कुलीन सौन्दर्यकी तो प्रकृति ही है, सौभाग्य और सम्पत्तिकी सीमा है, लावण्यका पारावार है और ललित कलाओंकी चिरस्थायी चन्द्रिका है। विविध कान्तियोंका कोई कल्पित चरम विकास है और रागका लोकोत्तर सञ्चय है। [हे धर्मराज! दूसरी ओर संसारके समस्त शरीरधारियोंको देखें क्योंकि व्यवस्थित रूपसे पल्लवीकृत निखिल न्याय तथा सोमदेवादि कृत नीतियोंमें कुशल, स्वदारसंतोष व्रतके धारक तथा मदिरा पानसे उत्पन्न मानसिक उन्मत्ततासे परे हैं। कमल सदृश हाथ हैं, अशोक तुल्य पैर हैं, बिम्बफल तुल्य ओंठ हैं, नाभि गहरी है, विशाल पुष्ट वक्षःस्थल है तथा मुखपर चन्द्रकान्ति है। शंख सदृश ग्रीवा और कमर पतली है, केशपाश चिकना तथा काला है, भृकुटि सुन्दर है, मेंढककी पीठके समान उभरी हुई, जंघाएँ सुन्दर हैं फलतः वे सौन्दर्यकी सीमा हैं। लाल कनेर सदृश नखों, चिकनी घनी अँगुलियों तथा अनारदाने सदृश दाँतोंके

यश्च न्यायनीतय , समस्ताश्च ता न्यायनीतयश्च, समस्तन्यायनीतय , सुघटविस्ताराश्च ताः समस्तन्याय-नीतयश्च सुघटविस्तारसमस्तन्यायनीतयस्तासु पटुः प्रवीण । पुन. कथम्भूत. ? दारतुष्टात्मा दारैस्तुष्ट आत्मा यस्य दाराणा तुष्ट आत्मा यस्माद्वा दारतुष्टात्मा कलत्रानन्दितात्मा । पुन कथम्भूत. ? मदिराक्षीवताशयारहितः मदिराया' मद्यस्य सकाशाद् या क्षीबता मत्तता तस्या याऽऽशा वाञ्छा तया रहिता विमुक्त सुरामत्तत्ववा-ञ्छावर्जित । पुनश्चन्द्राननद्युति । पद्मपाणिरित्यादि समर्थ । पुनः कम्बुग्रीवा लघुश्रोणिः कम्बोरिव ग्रीवा यस्य स , अलघ्वी श्रोणिर्यस्य सोऽलघुश्रोणिरुभयो' कर्मधारय. । पुन क. ? स्निग्धकेशान्तसन्ततिः सुगमोऽर्थ । पुनः सुभ्रू शोभना[1] भ्रुवो' ऊ शोभा यस्यासौ सुभ्रू , शेप पूर्ववत् नखैरित्यादि । त्यज्यमानोदयाकृतिः । कैः कर्तृभि ? नखै. कथम्भूतै ? कुरवकलच्छायैः तथा अङ्गुलिपर्वभि । कथम्भूतै ? श्लिष्टै. । तथा च दशनैः । कथम्भूतै ? शिखराकारै. । पुन किं कुर्वाण. ? विनीतेत्यादि । व्याददान. दयान्वितमिति पदच्छेद । अप-मानमानदूरात्मा अपमानाद्दूर आत्मा यस्य स. वै स्फुट देही इतोऽस्मिन्प्रदेशे दृश्यतामिति कुलक शेष समानम्[2] ॥ ६५-७२ ॥

आदिप्रजापतिः स्याच्चेन्नूनं तेनान्त्यवेधसाम् ।
स्त्रियः स्रष्टुं प्रतिच्छन्दं कृताग्राम्या वधूरियम् ॥ ७३ ॥

आदीति—अहमेव मन्ये चेद्यदि स्याद्भवेत् क' ? आदिप्रजापति' प्रथमब्रह्मा तेनादिप्रजापतिना इय वधूः सीता सती अग्राम्या विचारचातुरीचकोरचन्द्रिका प्रतिच्छन्द प्रतिकृतिरित्यर्थ. । केषाम् ? अन्त्यवेधसामन्त्य-ब्रह्मणाम् । किं कर्तुम् ? स्त्रिय. स्रष्टु निर्मातुम् ।

भारतीय.—नूनमादिप्रजापति. चेत्स्यात् । तेनादिप्रजापतिना इय ग्राम्यावधू प्रतिच्छन्द कृता । किं कर्त्तुम् ? अन्त्यवेधसा स्त्रिय स्रष्टुम्[3] ॥ ७३ ॥

एषा विलासभावेन द्योतयन्ती दिगन्तरम् ।
सरस्वतीव संबुद्धा भाति पद्मोदयस्थितिः ॥ ७४ ॥

एषेति—एषा सीता भाति । किं कुर्वती ? दिगन्तरमाशान्तराल विलासभावेन द्योतयन्ती । विलासो नाम कटाक्षविक्षेप. । भावो नाम चित्तसम्भव. परिणाम. । उक्तञ्च "हावो मुखविकार. स्याद्भावो मानसस-म्भव । विलासो नेत्रजो ज्ञेयो विभ्रमो भ्रूयुगान्तरे" ॥ कथम्भूता ? पद्मोदयस्थिति रामाभ्युदयावस्थाना पुनः सम्बुद्धा सम्यग्ज्ञानपरिणता । केव ? सरस्वतीव । पक्षेऽर्थवशाद्विशब्देनात्र हसो ग्राह्य' । लासो गमनम् । विना हसेन लास विलास , विलासेन भाव विलासभावस्तेन हसगमनस्थित्येत्यर्थ ।

---

द्वारा शरीर सौन्दर्य फूटा पड़ता है। वेषभूषा तथा रंगरूप सुसंस्कृत है, कुलीन पुरुषोंके योग्य वार्तालाप है, सदाचार सौन्दर्यके समान धारण करते है और दयापूर्ण हैं। छन्द-व्याकरणादि समस्त शास्त्रोंके आधार हैं, समस्त सम्पत्तियोंके निधान हैं, परस्परमें ही सदृश युगल अंगों तथा व्यञ्जनोंकी निवासभूमि हैं। सौन्दर्यके विकासकी विधि हैं, सौभाग्य और वैभवकी सीमा है, सौन्दर्य सागर हैं और कलाओंकी चिरस्थायी चन्द्रिका हैं। कान्ति की काल्पनिक उन्नति है तथा प्रीतिके लोकोत्तर पुञ्ज हैं फलतः अपमानसे परे हैं ] ॥६५-७२॥

हे रावण! यदि कोई आदि प्रजापति था तो निश्चित ही उसने नारियोंको बनानेके लिए उद्यत उत्तरकालीन ब्रह्माओंके निदर्शनके लिए ही इस सुसंस्कृत वहू सीताको बनाया होगा। [ हे धर्मराज ! · "इस ग्रामीण वधूकी सृष्टि की होगी ] ॥७३॥

कटाक्ष तथा मनोभावोंके द्वारा समस्त दिशाओंको प्रभावित करती हुई यह सीता ( तथा ग्रामीण नायिका ) सम्यक् ज्ञान पूर्ण अथवा जागृत सरस्वतीके समान है तथा पद्म ( राम ) के अभ्युत्थान ( पद्माकी वृद्धि ) की द्योतक है [ सरस्वती भी वि ( हंस ) रूपी

---

१ शोभने भ्रुवौ यस्यासौ सुभ्रू'-द० । २ श्लेष -य०, ना० । ३ श्लेष —न ना ।

भारतीयः—एषा ग्राम्या वधूः भाति। कथम्? पद्मोदयस्थितिः लक्ष्म्यभ्युदयस्थानम्[1] ॥ ७४ ॥

रोमराजिलतावृद्धेरालवाली कृतामिव।
कपित्थवृन्तसंस्थाननिम्नां नाभिमुपागताम् ॥ ७५ ॥
वनराजीं प्रवालोष्ठश्रिया पल्लवितामिव।
नीलोत्पलमयीं दृष्टया स्मितैर्मुकुलितामिव ॥ ७६ ॥
कैश्येन कुर्वतीं मुक्तप्ररोहमिव चालकैः।
भृङ्गीमयीं पदन्यासैः स्थलपद्ममयीमिव ॥ ७७ ॥
वक्रशीलां भ्रुवोरेव कुचयोरेव कर्कशाम्।
चपलां नेत्रयोरेव केशेषु कुटिलस्थितिम् ॥ ७८ ॥
अविलिप्तकृतामोदामपीतासवमन्थराम्।
अरुष्टां रक्तलोलाक्षीमतुष्टां विकसन्मुखीम् ॥ ७९ ॥
किञ्चित्पूर्वप्रियाद्बाल्यं दधती यौवनं भरात्।
मूढप्रौढान्तरावस्थां साभ्रेऽर्के पद्मिनीमिव ॥ ८० ॥
लूनम्लानमृणालाभकर्णपालीसमुन्नतिम्।
तालवृन्तानिलेनेव विध्नती पक्ष्मणा मुखम् ॥ ८१ ॥
गौरक्षिकामिमां स्रष्टुं नूनमर्धं हृतं विधोः।
रम्यं धात्रान्यथा चन्द्रः कथमर्द्धत्वमीयिवान् ॥ ८२ ॥ (कुलकम्)

श्लोकाष्टकेन कुल्क व्याख्यास्यामः रोमेति—नूनमहमेव मन्ये धात्रा ब्रह्मणा इमा सीता स्रष्टु विधातु विधोश्चन्द्रस्य रम्य मनोहरमर्द्ध खण्ड हृतमपनीतम्। कथम्भूताम्? गोरक्षिका राम विहायान्येषु पुरुषेषु चञ्चलत्वाद्विजृम्भमाणे गावौ नेत्रे रक्षतीति गोरक्षिका ताम्। यद्वाऽन्येभ्यः पुरुषेभ्यो व्यावृत्य रामवृताना गवा स्पर्शादीनामिन्द्रियाणा रक्षिका निरोधिका तस्मिन्नेव सा गोरक्षिका ताम्। 'एतेन जानक्याः पातिव्रत्यमुपदर्शितम्। व्यतिरेक' अन्यथा— अन्येन प्रकारेण कथ चन्द्रोऽर्धत्वमेयिवान् गतः? कथम्भूता सीताम्? कपित्थवृन्तसस्थाननिम्ना कपित्थवृन्ताधारवद्गम्भीरा नाभिमुपागताम्। कथम्भूताम्? रोमराजिलतावृद्धे रोमावलीरूपलताया वृद्धिमुद्दिश्य आलवालीकृतामिव। पुनः कामिव? प्रवालोष्ठश्रिया पल्लविता नूतनपल्लवसदृशाधार-

---

वाहनपर चलती हुई समस्त दिशाओंको ज्ञानसे जागृत करती है तथा लक्ष्मीकी वृद्धि तक ही रहती है] ॥७४॥

कैथके डण्ठलके गहरे स्थानके समान इसकी गम्भीर नाभि पेटपर उगी रोमावलिके लिए क्यारी सदृश प्रतीत होती है, नूतन पत्रोंकी शोभायुक्त सुन्दर ओठोंके द्वारा पल्लवित, नेत्र शोभाके द्वारा नील कमल मय, मधुर स्मितोंके द्वारा कलियोंसे युक्त वनमालाके समान है। लम्बे केशजालके द्वारा नीचे लटकते प्ररोह मय, घुँघराले बालों द्वारा भौंरोंसे व्याप्त तथा सुकुमार चरण विन्यासके द्वारा गुलाब-मयी सी है। इसकी भ्रकुटियोंका ही स्वभाव टेढ़ा है, कुचोंमें ही कठोरता है, नेत्रोंमें ही चंचलता है, तथा बालोंमें ही टेढ़ा (घुँघराला) पन है। बिना लेप लगाये ही इसके शरीरसे सुगन्ध निकलती है, बिना मदिरा पानके ही इसमें मादक शिथिलता है, क्रोध बिना ही इसके नेत्र लाल हैं तथा बिना तृप्त किये ही

1. श्लेष.–द०, ना०।

शोभया वनराजीमिव कान्तारश्रेणिमिव पुनः दृष्ट्या नीलोत्पलमयीं पुनः स्मितैर्मन्दहासैर्मुकुलितामिव। पुनः किं कुर्वतीमिव ? कैश्येन केशपाशेन मुक्तप्ररोहा कुर्वतीमिव। पुनरलकैश्चकेशैरेव भृङ्गीमयीम्। अत्र चकारोऽवधारणार्थः अव्ययानामनेकार्थत्वात्। पुनः पदन्यासैः स्थलपद्ममयीमिव। पुनः भ्रुवोरेव वक्रशीला पुनः कुचयोरेव कर्कशा पुनः नेत्रयोरेव चपला पुनः केशेषु कुटिलस्थितम्। पुनरविलिप्तकृतामोदामचर्चित-विहितपरिमला पुनरपीतासवमन्थरामपीतञ्च तन्मद्यञ्चापीतमद्य तेन मन्थराऽलसा ताम्। अपीतमद्यालसाम्। अत्र लोके पीतमद्याना मन्थरा गतिर्जायते। जानक्यास्तु स्वत एवेति बोध्यम्। उत्तरार्द्धेऽपि शब्दस्याप्रयुक्तस्यापि प्रयोगो ज्ञेय। पुनररुष्टामपि रक्तलोलाक्षीं लोहितचञ्चललोचना पुनरतुष्टामपि विकसन्मुखीं प्रसन्नवदनाम्। पुन किं कुर्वतीम् ? पूर्वप्रियात्प्रथमप्रेम्ण सकाशात् किञ्चिद्बाल्य भराच्च यौवनमतएव मूढप्रौढन्तरावस्था न परा मूढा न परा प्रौढा तयोरन्तरावस्था प्राप्ताम्। कामिव मूढप्रौढान्तरावस्थाम् ? पद्मिनीमिव। क्व सति ? अर्के सूर्ये साभ्रे अभ्रै सह वर्त्तमाने सति। पुन किं कुर्वतीम् ? तालवृन्तरनिलेनेव कृत्वा पक्ष्मणा मुख विध्नतीं वीजयन्ती पुनः लूनम्लानमृणालाभकर्णपालीसमुन्नतिं पूर्वं लून पश्चात् म्लानञ्च तन्मृणालञ्च लूनम्लनमृणाल तेन तुल्याऽभा यस्याः सा लूनम्लानमृणालाभा लूनम्लानमृणालाभा कर्णपाली समुन्नतिर्यस्याः सा ताम्।

भारतीय पक्षे—गोरक्षिका गोपीमिति ग्राह्यम्। अन्यत्तुल्यम्[1] ॥ ७५–८२ ॥

**अहो रूपमहो कान्तिरहो लावण्यपाटवम्।**
**अनीदृशमिदं रूपं न जातं न जनिष्यते ॥८३॥**

अहोरूपमिति—अहो आश्चर्य रूपमनन्यसम्भवि। अहो कान्तिर्दीप्तिरनन्यसम्भविनी,। अहो लावण्य-पाटवमनन्यसम्भवीति कृत्वा न जात नाभूत् तथा न जनिष्यते न भविष्यति। किम् ?, रूपम् कथम्भूतम् ? अनीदृशमुपमातीतम्। कस्याः ? सीतायाः।

भारतपक्षे—गोरक्षिकायाश्चेति विशेष ॥८३॥

**तस्यानूनमिति श्रुत्वा स्वसुः स्थानोचितं वचः।**
**तत्तु पश्यन्नृपः कृच्छ्रान्मनोनेत्रं न्यवीवृतत् ॥८४॥**

तस्या इति—असौ नृप. रावण तद्भगिनीसमादिष्ट वस्तु तु पुन वारम्वार पश्यन्नवलोकमानः सन् मनोनेत्र मनश्च नेत्रञ्च कृच्छ्रान्महाकष्टेन न्यवीवृतन्निवर्त्तयामास। किं कृत्वा ? तस्या. स्वसुर्भगिन्याः सूर्पण-खाया. स्थानोचित वच श्रुत्वाऽऽकर्ण्य। कथम् ? इत्युक्तप्रकारेण।

---

इसका मुख विकसित हो उठा है। पहिलेके परिचयके कारण इसने बाल्यको थोड़ा धारण कर रखा है और यौवनके भारसे तो आक्रान्त ही है फलतः मेघाच्छन्न सूर्यकी स्थितिमें पद्मिनीके समान यह भी मुग्धा और प्रौढ़ा अवस्थाके अन्तरालमें है। तोड़नेके कारण मुरझाये मृणालोंकी कान्तियुक्त कर्णभूपणकी उत्कृष्ट शोभाके कारण ताड़के पंखेकी हवासे आँखोंके पलकोंकी हवा करती सी, पृथ्वीकी रक्षिका अथवा इन्द्रिय संयमकी पालिका इस सीता (अथवा ग्रामीण ग्वालिन) को बनानेके लिए निश्चित ही प्रजापतिने चन्द्रमाका आधा भाग चुराया होगा अन्यथा चन्द्रमाके आधे रह जानेका और कारण ही क्या हो सकता है ? ॥७५–८२॥

इसका रूप आश्चर्यकर है, देहकी कान्ति धन्य है, मनोहरताकी चारुता भी लोकोत्तर है, इसके समान कुछ भी नहीं है। न ऐसा रूप कभी हुआ है और न होगा ॥८३॥

निश्चित है कि वहिनके ठीक स्थानपर कहे गये पूर्वोक्त यथार्थ वचनोंको सुनकर राजा रावण वारम्बार उस दर्शनीय सीताको देखता हुआ बड़ी कठिनाईसे अपने मन और आँखोंको उधरसे मोड़ सका था। [उस भाई भीम या अर्जुनकी पूर्वोक्त लक्ष्मी (अनून) तथा

---

१ श्लेषोत्प्रेक्षा–ब०, ना०।

भारतीयः—एषा ग्राम्या वधूः भाति । कथम् ? पद्मोदयस्थितिः लक्ष्म्यभ्युदयस्थानम्[1] ॥ ७४ ॥

रोमराजिलतावृद्धेरालवाली कृतामिव ।
कपित्थवृन्तसंस्थाननिम्नां नाभिमुपागताम् ॥ ७५ ॥
वनराजीं प्रवालोष्ठश्रिया पल्लवितामिव ।
नीलोत्पलमयीं दृष्टया स्मितैर्मुकुलितामिव ॥ ७६ ॥
कैश्येन कुर्वती मुक्तप्ररोहमिव चालकैः ।
भृङ्गीमयीं पदन्यासैः स्थलपद्ममयीमिव ॥ ७७ ॥
वक्रशीलां भ्रुवोरेव कुचयोरेव कर्कशाम् ।
चपलां नेत्रयोरेव केशेषु कुटिलस्थितिम् ॥ ७८ ॥
अविलिप्तकृतामोदामपीतासवमन्थराम् ।
अरुष्टां रक्तलोलाक्षीमतुष्टां विकसन्मुखीम् ॥ ७९ ॥
किञ्चित्पूर्वप्रियाद्बाल्यं दधती यौवनं भरात् ।
मूढप्रौढान्तरावस्थां साभ्रेऽर्के पद्मिनीमिव ॥ ८० ॥
लूनम्लानमृणालाभकर्णपालीसमुन्नतिम् ।
तालवृन्तानिलेनेव विघ्नती पक्ष्मणा मुखम् ॥ ८१ ॥
गौरक्षिकामिमां स्रष्टुं नूनमर्धं हृतं विधोः ।
रम्यं धात्रान्यथा चन्द्रः कथमर्द्धत्वमीयिवान् ॥ ८२ ॥ (कुलकम्)

श्लोकाष्टकेन कुलक व्याख्यास्याम. रोमेति—नूनमहमेव मन्ये धात्रा ब्रह्मणा इमा सीता स्रष्टु विधातु विधोश्चन्द्रस्य रम्य मनोहरमर्द्धं खण्ड हृतमपनीतम् । कथम्भूताम् ? गोरक्षिका राम विहायान्येषु पुरुषेषु चञ्चलत्वाद्विजृम्भमाणे गावौ नेत्रे रक्षतीति गोरक्षिका ताम् । यद्वाऽन्येभ्यः पुरुषेभ्यो व्यावृत्य रामवृताना गवा स्पर्शादीनामिन्द्रियाणा रक्षिका निरोधिका तस्मिन्नेव सा गोरक्षिका ताम् । 'एतेन जानक्या. पातिव्रत्यमुपदर्शितम् । व्यतिरेक अन्यथा— अन्येन प्रकारेण कथ चन्द्रोऽर्धत्वमेयिवान् गतः ? कथम्भूता सीताम् ? कपित्थवृन्तसस्थाननिम्ना कपित्थवृन्ताधारवद्गम्भीरा नाभिमुपागताम् । कथम्भूताम् ? रोमराजिल्तावृद्धे रोमावलीरूपल्ताया वृद्धिमुद्दिश्य आलवालीकृतामिव । पुन कामिव ? प्रवालोष्ठश्रिया पल्लविता नूतनपल्लवसदृशाधार-

---

वाहनपर चलती हुई समस्त दिशाओंको जानसे जागृत करती है तथा लक्ष्मीकी वृद्धि तक ही रहती है ] ॥७४॥

कैथके डण्ठलके गहरे स्थानके समान इसकी गम्भीर नाभि पेटपर उगी रोमावलिके लिए क्यारी सदृश प्रतीत होती है, नूतन पत्रोंकी शोभायुक्त सुन्दर ओठोंके द्वारा पल्लवित, नेत्र शोभाके द्वारा नील कमल मय, मधुर स्मितोंके द्वारा कलियोंसे युक्त वनमालाके समान है। लम्बे केशजालके द्वारा नीचे लटकते प्ररोह मय, घुँघराले वालों द्वारा भौरोंसे व्याप्त तथा सुकुमार चरण विन्यासके द्वारा गुलाब-मयी सी है। इसकी भ्रकुटियोंका ही स्वभाव टेढ़ा है, कुचोंमें ही कठोरता है, नेत्रोंमें ही चंचलता है, तथा वालोंमें ही टेढ़ा (घुँघराला) पन है। विना लेप लगाये ही इसके शरीरसे सुगन्ध निकलती है, विना मदिरा पानके ही इसमें मादक शिथिलता है, क्रोध विना ही इसके नेत्र लाल हैं तथा विना तृप्त किये ही

---

१. श्लेप–व०, ना०।

शोभया वनराजीमिव कान्तारश्रेणिमिव पुनः दृष्ट्या नीलोत्पलमयीं पुन स्मितैर्मन्दहासैर्मुकुलितामिव। पुन॰ किं कुर्वतीमिव ? कैश्येन केशपाशेन मुक्तप्ररोहा कुर्वतीमिव। पुनरङ्गैश्चकैरेव भङ्गीमयीम्। अत्र चकारोऽवधारणार्थ॰ अव्ययानामनेकार्थत्वात्। पुन पदन्यासै स्थलपद्ममयीमिव। पुन भ्रुवोरेव वक्रशीला पुन कुचयोरेव कर्कशा पुन नेत्रयोरेव चपला पुन केशेषु कुटिलस्थितम। पुनरविलिप्तकृतामोदामचर्चित-विहितपरिमल पुनरपीतासवमन्थरामपीतञ्च तन्मद्यञ्चापीतमद्य तेन मन्थराऽलसा ताम्। अपीतमद्यालसाम्। अत्र लोके पीतमद्याना मन्थरा गतिर्जायते। जानकयास्तु स्वत एवेति बोध्यम्। उत्तरार्द्धेऽपि शब्दस्याप्रयुक्तस्यापि प्रयोगो ज्ञेय। पुनररक्तामपि रक्तलोलाक्षीं लोहितचञ्चल्लोचना पुनरतुष्टामपि विकसन्मुखी प्रसन्नवदनाम्। पुन किं कुर्वतीम् ? पूर्वप्रियाल्प्रथमप्रेम्ण॰ सकाशात् किञ्चिद्बाल्य भराच्च यौवनमतएव मूढप्रौढान्तरावस्था न परा मूढा न परा प्रौढा तयोरन्तरावस्था प्राप्ताम्। कामिव मूढप्रौढान्तरावस्थाम् ? पद्मिनीमिव। क सति ? अर्के सूर्ये साभ्रे अभ्रै॰ सह वर्त्तमाने सति। पुन किं कुर्वतीम् ? तालवृन्तरनिलेनेव कृत्वा पक्ष्मणा मुख विघ्नतीं वीजयन्तीं पुन॰ लूनम्लानमृणालाभकर्णपालीसमुन्नतिं पूर्वं लून पश्चात् म्लानञ्च तन्मृणालञ्च लूनम्लनमृणाल तेन तुल्याऽभा यस्या सा लूनम्लानमृणालाभा लूनम्लानमृणालाभा कर्णपाली समुन्नतिर्यस्याः सा ताम्।

भारतीय पक्षे—गोरक्षिका गोपीमिति ग्राह्यम्। अन्यत्तुल्यम्[1] ॥ ७५–८२ ॥

**अहो रूपमहो कान्तिरहो लावण्यपाटवम्।**
**अनीदृशमिदं रूपं न जातं न जनिष्यते ॥८३॥**

अहोरूपमिति—अहो आश्चर्ये रूपमनन्यसम्भवि। अहो कान्तिर्दीप्तिरनन्यसम्भविनी,। अहो लावण्य-पाटवमनन्यसम्भवीति कृत्वा न जात नाभूत् तथा न जनिष्यते न भविष्यति। किम् ?, रूपम् कथम्भूतम् ? अनीदृशमुपमातीतम्। कस्या॰ ? सीतायाः।

भारतपक्षे—गोरक्षिकायाश्चेति विशेष ॥८३॥

**तस्यानूनमिति श्रुत्वा स्वसुः स्थानोचितं वचः।**
**तत्तु पश्यन्नृपः कृच्छ्रान्मनोनेत्रं न्यवीवृतत् ॥८४॥**

तस्या इति—असौ नृप रावण॰ तद्भगिनीसमादिष्ट वस्तु तु पुन॰ वारम्वार पश्यनवलोकमानः सन् मनोनेत्र मनश्च नेत्रञ्च कृच्छ्रान्महाकष्टेन न्यवीवृतन्निवर्त्तयामास। किं कृत्वा ? तस्याः स्वसुर्भगिन्याः सूर्पण-खाया॰ स्थानोचित वच॰ श्रुत्वाऽऽकर्ण्य। कथम् ? इत्युक्तप्रकारेण।

---

इसका मुख विकसित हो उठा है। पहिलेके परिचयके कारण इसने बाल्यको थोड़ा धारण कर रखा है और यौवनके भारसे तो आक्रान्त ही है फलतः मेघाच्छन्न सूर्यकी स्थितिमें पद्मिनीके समान यह भी मुग्धा और प्रौढ़ा अवस्थाके अन्तरालमें है। तोड़नेके कारण मुरझाये मृणालोंकी कान्तियुक्त कर्णभूषणकी उत्कृष्ट शोभाके कारण ताड़के पंखेकी हवासे आँखोंके पलकोंकी हवा करती सी, पृथ्वीकी रक्षिका अथवा इन्द्रिय सयमकी पालिका इस सीता ( अथवा ग्रामीण ग्वालिन ) को बनानेके लिए निश्चित ही प्रजापतिने चन्द्रमाका आधा भाग चुराया होगा अन्यथा चन्द्रमाके आधे रह जानेका और कारण ही क्या हो सकता है ? ॥७५–८२॥

इसका रूप आश्चर्यकर है, देहकी कान्ति धन्य है, मनोहरताकी चारुता भी लोकोत्तर है, इसके समान कुछ भी नहीं है। न ऐसा रूप कभी हुआ है और न होगा ॥८३॥

निश्चित है कि बहिनके ठीक स्थानपर कहे गये पूर्वोक्त यथार्थ वचनोंको सुनकर राजा रावण बारम्बार उस दर्शनीय सीताको देखता हुआ बड़ी कठिनाईसे अपने मन और आँखोंको उधरसे मोड़ सका था। [ उस भाई भीम या अर्जुनकी पूर्वोक्त लक्ष्मी ( अनून ) तथा

---

१ श्लेषोत्प्रेक्षा—अ०, ना०।

भारतीयः—नृपो युधिष्ठिरः तस्य भीमस्यार्जुनस्य वा अनून प्रचुर स्थानोचितमवसरयोग्य वचः श्रुत्वा मनोनेत्र कृच्छ्रान्न्यवीवृतत्। कथम्भूतो नृपः ? स्वसुः शोभना असवः प्राणा यस्यासौ स्वसुः निर्व्याधिः युक्तायुक्तविचारज्ञो वा[1] ॥८४॥

**विद्याधराधिगुरुणा तां विशेषेण पश्यता।**
**तेन वक्रोक्तिचतुरं युक्तं वचनमाददे ॥८५॥**

विद्येति—तेन रावणेन वक्रोक्तिचतुर युक्त वचनमाददे गृहीतम्। कथम्भूतेन ? विद्याधराधिगुरुणा खेचरचक्रवर्त्तिना। कथम्भूतेन ? ता सीता विशेषेण असाधारण्येन पश्यता।

भारतीयः—ता गोरक्षिका पश्यता विद्याधराधिगुरुणा विद्या आन्वीक्षिकीत्रयीवार्त्ता दण्डनीतिरूपास्ताभिः धराधिगुरुणा धरा भुव दधति धराधयः गिरयस्तेषा गुरुणा मेरुणा तेन युधिष्ठिरेण वचनमाददे। अन्यत्समम्[2] ॥८५॥

**यदीदृशमिदं रूपं स्याद्वनेऽन्तःपुरेण किम्।**
**किमुद्यानलताक्लेशै रम्यावनलताऽस्ति चेत् ॥८६॥**

यदीति—यदि वने इदमीदृश रूप स्यात्तर्हि अन्तःपुरेण किं प्रयोजनमस्ति ? रम्या मनोहरा अवनलता न वनलता अपूर्ववल्ली तदा किं प्रयोजनमुद्यानलताक्लेशैरुद्यानलतानामालवालादिकरणैरित्यर्थ. ॥८६॥

**एनां घनकुचोच्छ्रायव्यवधानात्तनूदरम्।**
**अपश्यन्तीमपश्यन्तस्तेऽद्याप्युदरशायिनः ॥८७॥**

एनामिति—ते पुरुषा उदरशायिन उदरे शयनशीला. शायिधर्माः (शयनधर्माणः) शेरत इत्येवशीलाः। किं कुर्वन्तः ? एना गोरक्षिकामपश्यन्तः। किं कुर्वन्तीम् ? घनकुचोच्छ्रायव्यवधानात् पीनोन्नतस्तनोच्छ्रायान्तर्द्धानात् तनूदरमपश्यन्तीमनवलोकमानाम् ॥८७॥

**गतेन राजहंसीयमस्मद्दर्शनविह्वला।**
**पश्य भाति विशालाक्षी किं कितमानसा ॥८८॥**

गतेनेति—हे सूर्पणखे ! त्व पश्य। इय सीता भाति। कथम्भूता ? गतेन गत्या राजहंसी पुनः अस्मद्दर्शनविह्वला पुनर्विलोलाक्षी चपललोचना पुन. किञ्चिच्चकितमानसा।

---

यथास्थान कही गयी उपर्युक्त बातोंको सुनकर विवेकी राजा युधिष्ठिर पुनः पुनः शरद्की शोभाको देखता हुआ मन और आँखोंको दूसरी ओर लगानेमें कष्टका अनुभव करता था ] ॥८४॥

उस सीताको आँख गड़ाकर देखते हुए विद्याधरोंके चक्रवर्ती रावणने वक्रोक्तिपूर्ण युक्तिसंगत सदृश वचन कहना प्रारम्भ किया था। [ आन्वीक्षिकी आदि विद्याओंके लिए मेरु पर्वत (धराधिगुरु) तुल्य उन्नत एवं अडिग युधिष्ठिरने विशेष रूपसे उस ग्वालिनको देखते हुए मुखसे कहनेमें मधुर किन्तु नीतिपूर्ण वचन कहना प्रारम्भ कर दिया था ] ॥८५॥

यदि वनमें इस प्रकारका लोकोत्तर रूप हो सकता है तो अन्तःपुरकी क्या आवश्यकता है, यदि वनलता ही लोकोत्तर सुन्दर होती है तो बागमें लता लगाकर सम्हालके कष्टसे क्या प्रयोजन है ? ॥८६॥

कठोर कुचोंकी ऊँचाईके बीचमें आ जानेके कारण अपने कृश पेटको भी देखनेमें असमर्थ इस सुन्दरीको जिन्होंने नहीं देखा है वे अब भी गर्भमें ही सोते है ॥८७॥

अपने गमनसे यह राजहंसी सीता हमलोगों (राक्षसों) को देखकर भीत हो गयी है। तो भी देखो, थोड़े-थोड़े आश्चर्यमें मन फँस जानेपर भी इसकी बड़ी-बड़ी आँखें कैसी

---

१ श्लेष—द०, ना०। २ श्लेष—द०, ना०।

भारतीयः—हे भीम इय राजहसी वरटा गतेन भाति । अन्यत्समम् ॥८८॥

**एषा कटाक्षपातेन सारङ्गीलोललोचना ।**
**वने दिशि दिशि भ्रान्ता दीर्घमन्वीक्षते पतिम् ॥ ८९ ॥**

एषेति—एषा सीता दीर्घं मुहु. पतिं रामं दिशि दिशि वने भ्रान्ता सती अन्वीक्षते पश्यति । कथम्भूता ? सारङ्गीलोललोचना सारङ्ग्या इव लोले लोचने यस्याः सा हरिणीतरलनयना । केन ? कटाक्षपातेन अपाङ्गविक्षेपेण ।

भारतीयः—एषा सारङ्गी पतिं मृगमन्वीक्षते । अन्या योजना प्राग्वत् ॥ ८९ ॥

**इदमन्यच्च पश्यन्कौतुकाविष्टमानसः ।**
**कामादिषु निरोधेन जितात्मा सन्निपातिना ॥ ९० ॥**
**अवन्यायपथं धीप्सन्नारीणां गोचरं गतम् ।**
**मदनाशाधिकोद्योगो मायावेषेण योजितः ॥ ९१ ॥**
**गाढाकल्पकनिष्ठत्वं दूरं कुर्वंश्छलेन ताम् ।**
**स्वपदव्यवसायाय क्षिप्रं जह्रे सतीव्रताम् ॥ ९२ ॥**

इदमिति, अवेति, गाढेति—असौ रावणश्छलेन व्याजेन दूरं क्षिप्रं शीघ्रं यथा भवति तथा तां सतीव्रता जह्रे हृतवान् । कस्मै ? स्वपदव्यवसायाय स्वपदव्या अवसाय. स्वपदव्यवसायः तस्मै चक्रवर्तिपदवीभ्रशाय । किं कुर्वन् ? कुर्वन् विदधत् । किम् ? गाढाकल्पकनिष्ठत्व गाढश्चासावाकल्पकश्च गाढाकल्पकस्तस्मिन्निष्ठा यस्य स तथोक्तस्तस्य भाव तीव्रकामावस्थानतत्परत्वम् । पुनः किं कुर्वन् ? इदमुक्तप्रकारमन्यच्चापरञ्च कामान्धतया युक्तायुक्तविचारमन्तरेण पररमणीसम्भोगमित्यर्थ. । पुनः कौतुकाविष्टमानसः कौतूहलारोपितचित्तः । पुन कामात्कन्दर्पात् सन्निपातिना सम्यक् निपतनशीलेन इषुनिरोधेन वाणनियन्त्रणेन जितात्मा । पुन. किं कुर्वन् ? अवन्यायपथमवन्यायस्य पन्था अवन्यायपथस्तमनीतिमार्गं धीप्सन् वाञ्छन् । कथम्भूतम् ? नारीणा कामिनीना गोचर विषय गतम् । कथम्भूतो रावण. ? मदनाशाधिकोद्योग. मदने याऽऽशा तयाऽधिक उद्योगो मन्मथोत्थप्रचुरोद्यमो यस्य स. पुन' मायावेषेण लोकप्रसिद्धेन जटाजूटधारिणो व्रतिनो वेषेण रूपेणेत्यर्थ., योजित. सयुक्त ।

भारतीय'—स युधिष्ठिरश्छलेन क्षिप्र स्वपदव्यवसायाय स्वपदनिश्चयाय ता तीव्रता तीव्रत्व जह्रे । किं कुर्वन् ? कुर्वन् । किम् ? गाढाकल्पकनिष्ठत्व दृढालङ्कारतत्परताम्, अथवा गाढञ्च तदाकल्प जन्मयावत्कनिष्ठत्व गाढाकल्पकनिष्ठत्व दृढ यथा आजन्मलघुतामित्यर्थ. । कथ यथा ? दूरम् । अत्र युधिष्ठिरस्याजन्मलोकव्यवहार-

---

सुन्दर लगती हैं । [ भीम देखो, देखते ही हमें विह्वल करती हुई कुछ-कुछ आश्चर्यचकित यह विशालाक्षी गोपी राजहसकी गतिसे चलती कैसी सुन्दर प्रतीत होती है ] ॥८८॥

भटकी तथा भीत हरिणीके समान चंचल नेत्रवती यह वनके कोने-कोनेमें कटाक्ष डालती हुई दूरतक दृष्टि डालकर पतिको खोज रही है ॥८९॥

उक्त प्रकारकी आतुरता मनमें आ जानेसे पूर्वोक्त तथा दूसरे हावभाव करता हुआ, कामदेवके धनुषसे बरसते बाणोंके द्वारा आत्मा जीते जानेपर, स्त्रियोंकी मोहिनीका लक्ष्य हुआ अतएव अन्यायमार्गपर चलनेके लिए प्रस्तुत, कामवासनाकी तृप्तिके लिए सर्वथा प्रयत्नशील, पुराणप्रसिद्ध छलियेका रूप धारण किये तथा अपनी दृढ़ प्रतिज्ञाकी एक निष्ठाको दूर करते हुए रावणने अपने विद्याधर चक्रवर्ती पदके विनाशके लिए ही छलकर सती सीताका तुरन्त अपहरण कर दिया था ।

देखनेकी उत्कण्ठासे व्याप्त मन पूर्वोक्त तथा अन्य पदार्थोंको देखते हुए, काम आदि अन्तरंग शत्रुओंके निरोधसे प्राप्त उत्कृष्ट संयमके कारण आत्मजेता, अन्यायमार्गकी इच्छाके

चातुरीनिरुपितास्ते—अवन्यायेत्यादि। योऽजितः नाभिभूतः। केन ? मायावेपेण कौटिल्याकारेण। कथम्भूतः सन् ? मदनाशाधिकोद्योगः मदनाशे गर्वप्रध्वंसे अधिको भूर्युद्योगो यस्य सः। किं कुर्वन् ? अवन्यायपथमवन्यायमार्गं न धीप्सन् नेच्छन्। कथम्भूतम् ? अरीणामरातीनां गोचरं गतम्। इदमित्यादि। पुनः किं कुर्वन् ? इदमुक्तप्रकारमन्यच्च रम्यारम्यपदार्थजातं कल्यन्निरीक्षमाणः। कथम्भूतः ? कौतुकाविष्टमानसः। पुनः कथम्भूतः ? कामादिष्वरिपड्वर्गेपु सन्निपातिना सन्नद्धेन निरोधेन जितात्मा नियन्त्रितस्वरूपः। उक्तञ्च—"कामः क्रोधश्च मानश्च लोभो हर्षस्तथा मदः। अन्तरङ्गोऽरिषड्वर्गः क्षितीशानां भवत्ययम्"। इति त्रिकलम्[1] ॥ ९० ॥ ९१ ॥ ९२ ॥

**विहायसारमुद्वेगं गच्छता ज्वलताऽमुना।**
**साक्षाल्लक्ष्मीः कृतौत्सुक्यं नीता सज्जानकीदृशी ॥९३॥**

विहायसेति—अमुना रावणेन सज्जानकी सती चासौ जानकी च सज्जानकी विहायसा नभसा कृतौत्सुक्य विहितराभस्य यथा तथा नीता सङ्गमिता। कथम्भूता ? ईदृशी पतिव्रता पुनः साक्षात्परमार्थवृत्त्या लक्ष्मीः। कथम्भूतेन रावणेन ? ज्वलता मदनाग्निना दह्यमानेन पुनः अरमत्यर्थमुद्वेगं गच्छता।

भारतीय.—नीता प्रापिता। काऽसौ ? सा लोकप्रसिद्धा पितृपितामहोपार्जिता। लक्ष्मीः। किम् ? औत्सुक्य पराधीनत्वम्। कीदृशी ? सज्जा अन्वयमार्गेणागत्य स्थिरीभूता तथा न कृता न विहिता। का ? लक्ष्मीः। कथम् ? साक्षादात्मसात् स्वाधीनेत्यर्थः। किं कुर्वता सता ? ज्वलता द्यूतव्यसनोद्वेगवह्निना दह्यमानेन। किं कुर्वता सता ? औत्सुक्य व्यसनाभिभूतत्वादसज्जनसंसर्गवशाच्च द्यूतप्रवृत्तिं गच्छता। किं कृत्वा ? पूर्वं विहाय परित्यज्य। कम् ? उद्वेगम्। शिष्टजनजनितशिक्षालापस्य तद्विषयत्वात्सन्मार्गप्रवृत्तिम्। गच्छता कथम् ? अरमत्यर्थम् अथवा न कृता, अपितु कृतैव। काऽसौ ? लक्ष्मीः। कथम् ? साक्षात् आत्मसात्। कथम् भूता सती ? नीता। किम् औत्सुक्य पराधीनत्वम्। कीदृशी कृता ? सज्जा। केन कर्त्रा ? अमुना युधिष्ठिरेण। किं कुर्वता सता ? ज्वलता श्रमोत्पन्नसन्तापेन सन्तप्यमानेन। पुनः किं कुर्वता ? गच्छता मार्गे विहरमाणेन। किं कृत्वा ? पूर्वमुद्वेगमाकुलत्व विहाय। कथम्भूतम् ? सारं घनमिति[1] ॥९३॥

**आलिङ्गन्निव वेलाभिः स्वागतं व्याहरन्निव।**
**गजैरूर्जस्वलस्तेन क्रमेण ददृशेऽम्बुधिः ॥९४॥**

आलिङ्गन्निति—तेन रावणेन कर्त्रा क्रमेण परिपाट्या ऊर्जस्वल. बलिष्ठः अम्बुधिः कर्मतापन्नः ददृशे दृष्टः। किं कुर्वन्निव ? स्वागतं शोभनमागमनं व्याहरन्निव ब्रुवन्निव मार्गजनितश्रमशान्तौ निरुपद्रवो वा

---

अकर्ता, कभी भी शत्रुओंके जालमें न आनेवाले, अहंकार आदिके नाशके लिए सतत प्रयत्नशील, मायाचारियोंके प्रपंचसे परे, कल्पकाल तक स्थायी गाढ़ लघुता (परस्त्री दर्शन) को दूर करते हुए अपने (धर्मराज) पदको सुस्थिर करनेके लिए उन युधिष्ठिरने भावोंकी उस तीव्रताको अनायास ही शीघ्र दूर कर दिया था ॥९०–९२॥

अत्यन्त निकृष्ट उद्वेगको प्राप्त फलतः कामाग्निसे जलता यह रावण सम्भवतम शीघ्रता करके ऐसी पतिव्रता, साक्षात् लक्ष्मी सीताको आकाशमार्गसे ले भागा था।

अन्वय–सारं विहाय उद्वेगं गच्छता ज्वलता अमुना लक्ष्मी साक्षात् न कृता। कीदृशी औत्सुक्यं नीता सज्जा।

द्यूतमें स को हारकर घोर विपत्तिमें पड़े तथा पराभवके सन्तापमें जलते इस युधिष्ठिरने क्या लक्ष्मीको अपने वशमें नहीं किया था ? अवश्य किया था क्योंकि वह भी इनसे मिलनेको उत्सुक और तैयार थी ॥९३॥

क्रमशः रावण (धर्मराज)ने प्रतापी तथा त्तिशाली समुद्रको देखा था जो अपने

1. श्लेप–द० ना०। 1. श्लेपः–द०, ना०।

भवानागत इति वदन्निव । कै कृत्वा ? गर्जै. कल्लोलकोलाहलै. । किं कुर्वन्निव ? वेलाभि' आलिङ्गन्निव परिरम्भमाण इव ।

भारतीय.–तेन युधिष्ठिरेण दृष्टोऽम्बुधिरिति । शेष प्राग्वत् ॥९४॥

**शीतोऽम्भःकरिणां लवङ्गकवलोद्गारस्य गन्धं वहन्,**
**वातस्तालवनान्तरेषु परुषं हस्तैर्विवानाहतः ।**
**युद्धस्पर्धिपरिश्रमेण तिमिभिः सीत्कृत्य पीतोऽम्बुधे-**
**राश्लिष्यत्स यशो धनंजयपरं विद्याधृतां नायकम्[1] ॥९५॥**

इति श्रीधनञ्जयकृतौ राघवपाण्डवीये महाकाव्ये सीताहरणलङ्काद्वारावतीप्रस्थान-कथनो नाम सप्तम सर्गः ॥७॥

शीत इति–आश्लिष्यत् परिरेभे । कोऽसौ ? स गुणत्रयेण प्रसिद्धो वात । कम् ? नायक स्वामिन रावणाख्यम् । केषाम् ? विद्याधृता विद्याधराणाम् । कथम्भूतम् ? यशोधन यश एव धन यस्य स यशोधनस्त पुनः जयपर जय पिपर्त्ति स्पष्टीकरोति जयपर "पचादित्वात्पिपर्तेरच्" त जयपरम् । कस्य सम्बन्धित्वेन वात ? अम्बुधे. । कथम्भूतो वात' ? शीत शीतल. पुनस्तिमिभि. मत्स्यै हस्तै करै. कृत्वा आहत. । किं कुर्वन् ? विवान् प्रवर्त्तमान । क्व ? तालवनान्तरेषु । कथम् ? परुष निष्ठुर यथा । कथम्भूत. ? अम्भ.-करिणा जलहस्तिना हस्तै पीत आस्वादितः । केन हेतुना ? युद्धस्पर्द्धिपरिश्रमेण युद्ध स्पर्धत इत्येवशील. युद्धस्पर्द्धी स चासौ परिश्रमश्च युद्धस्पर्धिपरिश्रमस्तेन । किं कृत्वा पूर्वं पीतो वातः ? सीत्कृत्य । किं कुर्वन् ? अम्भ करिणा जलहस्तिना लवङ्गकवलोद्गारस्य गन्ध वहन् परिमल दधान ।

भारतीय –स वात' विद्याधृता राजविद्याधराणा राज्ञा नायक युधिष्ठिर आश्लिष्यत् । कथम्भूतम् ? यशोधनञ्जयपर यशसोपलक्षितो धनञ्जय दशदिक्प्रसिद्धोऽर्जुन तस्मिन्पर. त तथोक्तम् । उक्तञ्च—"प्रतापो यस्य वार्त्तापि राज्ञा स्यान्द्भयकारिणी । एकदिग्व्यापिनी कीर्त्ति सर्वदिग्व्यापक यश ॥" शेष प्राग्वत् ॥९५॥

इति निरवद्यविद्यामण्डनमण्डितपण्डितमण्डलीमण्डितस्य पट्तर्कचक्रवर्त्तिन श्रीमद्विनयचन्द्र-पण्डितस्य गुरोरन्तेवासिनो देवनन्दिनाम्न शिष्येण सकलकलोद्भवचारुचातुरी-चन्द्रिकाचकोरेण नेमिचन्द्रेण विरचितायां पदकौमुदी नामदधानायां टीकायां सीता हरण-लङ्काद्वारावतीप्रस्थानकथनो नाम सप्तम सर्ग ॥७॥

---

तटोंसे आलिंगन करता-सा प्रतीत होता था । लहरोंकी गर्जनासे स्वागतम्, स्वागतम् कहता सा लगता था ॥९४॥

जलके समान शीतल, युद्धसे भी बढ़कर थकानके कारण हाथियोंकी सूँड़के द्वारा फेंका गया लौंग मिश्रित कुल्लेकी सुगन्धियुक्त तालवृक्षोंके वनमें तेजीसे बहता तथा मछलियोंके द्वारा सी-सी करके पिये गये समुद्रकी वायुने यहांके दरिद्र तथा जयविमुख विद्याधरोंके राजा रावणको घेर लिया था [ विद्याधारी राजाओं तथा विद्वानोंके अग्रणी, यशरूपी सम्पत्तिसे समृद्ध तथा विजयको ही लक्ष्य करके प्रवृत्त धर्मराजका आलिंगन किया था ] ॥९५॥

निर्दोषविद्याभूषण भूषित पण्डितमण्डलीके पूज्य, पट्तर्कचक्रवर्ती श्रीमान् पडित विनयचन्द्र गुरुके प्रशिष्य, देवनन्दिके शिष्य, सकलकलाचातुर्य-चन्द्रिकाके चकोर, नेमिचन्द्र द्वारा विरचित कवि धनञ्जयके राघव पाण्डवीय नामसे ख्यात द्विसन्धान काव्यकी पदकौमुदी टीकामें 'सीतापहरण-लङ्काद्वारावती-प्रस्थान कथन' नामका सप्तम सर्ग समाप्त ।

---

१. अस्मिञ्श्लोके शार्दूलविक्रीडित वृत्तम् । लक्षणं हि–सूर्याश्वैर्मसजस्तता सगुरव शार्दूल-विक्रीडितम् [ वृ र ३।९९ ] ।

# ८ः सर्गः

**अथ कदानुवशा नु परा सुता पुरमुपेत्य स दुर्जनकस्य वा ।**
**क्रियत इत्ययमाकुलमानसः प्रभुरवोचत वीक्ष्य पयोनिधिम् ॥१॥**

अथेति—अथशब्द आनन्तर्य्यार्थे नु शब्दो वितर्के । अहो कदा क्रियते कदा करिष्यते । काऽसौ ? जनकस्य जनकनाम्नः पृथ्वीपतेः सुता तनया सीतेत्यर्थः । केन कर्त्रा ? मया त्रैलोक्यकम्पनेन रावणेनेति । कथम्भूता करिष्यते ? अनुवशाऽऽत्मवशवर्त्तिनी । किं कृत्वा ? पुर लङ्काभिधानमुपेत्य प्राप्य । कथम्भूतम् ? सद्गुः सीदत्यस्मिन्निति 'सद्गुः बहुलमिति' सूत्रेण उस्प्रत्यय', निवासोचित वा शब्दोऽत्रावधारणार्थो बोद्धव्योऽव्ययानामनेकार्थत्वात् । कथम्भूता सती ? परा वा उत्कृष्टैव 'त्रैलोक्योदरवर्त्तिनीना रूपातिशायिनीत्यर्थः । इतीति वाक्यम् आकुलमानसोऽय प्रभू रावणोऽवोचत् बभापे । किं कृत्वा ? पयोनिधिं समुद्र वीक्ष्यावलोक्य ।

भारतीयः पक्षः—नु अहो कदा क्रियते । काऽसौ ? परासुता मृत्युः । कथम्भूता ? अनुवशात्माधीना । कस्य ? दुर्जनकस्य वा दुर्योधनस्यैवेत्यर्थः । कि कृत्वा ? उपेत्य । किम् ? पुर हस्तिनाख्यम् । कस्य ? दुर्योधनस्यैवेति वाक्यमवोचत् । कोऽसौ ? सोऽय प्रभुर्युधिष्ठिरः । कथम्भूतः ? आकुलमानसः सक्षोभचेताः । किं-कृत्वा ? पयोनिधिं वीक्ष्य[1] ॥१॥

**अयमगाधगभीरगुरुर्गुणैरुपगतोनियतावधिरार्द्रताम् ।**
**यतिरिवाखिलसत्त्वहितव्रतो जलनिधिः स ैरवलोक्यताम् ॥२॥**

अयमिति—अय जलनिधिः त्वया सूर्पणखया द्वितीयपक्षे त्वया भीमेनार्जुनेन वाऽवलोक्यता निरीक्ष्यताम् । कथम्भूतः ? अगाधगभीरगुरुरगाधोऽतलस्पर्शः गभीरो दुर्लङ्घ्यः गुरुर्गरिमोपेतः । स च, स च, स च, अत्र विशेष्यविशेषणतया समासः । पुनः आर्द्रता द्रवरूपतामुपगत. प्रास. पुनरनियतावधिरनियतोऽनिश्चितोऽवधिर्मर्यादा यस्य सोऽनियतावधिः पुनरखिलसत्त्वहितव्रतोऽखिलसत्वेषु हित व्रत यस्य स. । कै. कृत्वा ? सकलै. रत्नाकरत्वादिलक्षणैर्गुणै. । क इव ? यतिरिव । कथम्भूतः यतिः ? अगाधगभीरगुरुः, अगाधः गभीर. अकलित मूर्त्तिः, गुरुः [2]ससारसागरतरणे पोतायमान धर्मं गृणाति निरूपयतीति गुरुः अत्र विशेष्यविशेषणतया

---

राजा जनककी सर्वोत्कृष्ट पुत्री विकासमें साधक लकापुरीमें पहुँचकर किस समय सर्वथा अनुरक्त हो जायगी, ये वचन समुद्रको देखकर व्याकुल चित्त राजा रावणने कहे थे। [दुर्योधन से आक्रान्त राजा धृतराष्ट्रकी राजधानीमें पहुंचकर किस दिन मृत्यु (पर + असुता) को आत्मानुकूल बनाया जायगा यह उद्गार द्वारकाके समुद्रको देखकर वनवास आदि पराभवोंसे क्षुब्धचित्त धर्मराजने कहे थे] ॥१॥

सूर्पणखादि आप सब इस समुद्रतुल्य यति ( सी राम ) को देखें। यतिके मनको जानना असंभव है, गंभीर होता है स्थिर है। दया दाक्षिण्यादि गुणोंके कारण परम दयालुताको प्राप्त है। शास्त्रीय मर्यादाओंका प्रयत्नपूर्वक करता है और समस्त सात्त्विक और कल्याणकारी वृत्तोंका पालन करता है। [आप भीमार्जुन आदि यतिके न समुद्रको देखें—इसकी तलीमें उतरना कठिन है, गहरा है और महान् है। रत्नाकर आदि

---

१ श्लेप'—व ना. । सर्गेऽस्मिन्द्रुतविलम्बितं वृत्तम् ।

२. स्वपरमतज्ञात्वा प्रसन्नमूर्तिरवान्नि क्षोभत्वाद् विनेयानाममार्गान्मार्गेप्वारोपकत्वाच्च बोधकत्वाद् वा संसारिभ्यः संसारसमुद्रतरणे पोतायमान धर्मं गृणाति निरूपयतीति गुरु.—प०, द० ।

समासः। पुनः कथम्भूतः? तीक्ष्णव्रतादिलक्षणैः सकलैर्गुणैः नियतावधिः नियतोऽवधिर्निश्चितमर्यादः सन् आर्द्रतां दयालुतामुपगतः पुनरखिलसत्त्वहितव्रतोऽखिलानां सत्त्वानां हितं व्रतं यस्य स तथोक्तम् ॥२॥

असुतरां सुतरां स्थितिमुन्नतामसुमतां सुमतां महतां वहन् ।
उरुचितैरुचितैर्मणिराशिभिः स्वरुचितैरुचितैरवभात्ययम् ॥३॥

असुतरामिति—अयं पयोनिधिस्तैर्लोकोत्तरैरुरुचितैरुच्चैः सञ्चयीकृतैरुचितैर्नरेन्द्रमुकुटकोटियोग्यैः रुचितैर्दीप्तैः स्वरुच्यात्मप्रकाशं यथा तथा मणिराशिभिः रत्नश्रेणिभिरवभाति शोभते। किं कुर्वन्नवभाति? स्थितिं वहन् धरन्। कथम्भूतां स्थितिम्? सुतरामतिशयेन असुतरां तरीतुमशक्यामुन्नतामुत्तुङ्गाम् असुमतां प्राणिनां सुमतां स्विष्टाम्। कथम्भूतानामसुमतां महताम्? महतां सत्पुरुषाणामिति ॥३॥

अनिधनेन रसातलवासिना विगलितो निविडं वडवाग्निना ।
इह मुहुः शफरीपरिलङ्घनव्यतिकरात्क्वथतीव सरित्पतिः ॥४॥

अनिधनेनेति—असौ सरित्पतिः समुद्रः शफरीपरिलङ्घनव्यतिकरात् शफरीणां परिलङ्घनं तस्य व्यतिकरस्तस्मात्, मीनललनापरिवर्तनसम्बन्धात् मुहुर्वारं वारमिह प्रदेशे क्वथतीवोत्कलतीव। कथम्भूतः सन्? रसातलवासिना भूम्यधःस्थितेन अनिधनेन शाश्वतेन वडवाग्निना निविडं घनं यथा विगलितो द्रवीभूतः[1] ॥४॥

परिहितैरिह तैः कृतबुद्बुदैः समकरैर्मकरैरुदधेर्जलैः ।
उपरुषा परुषा नयनावलिः समुदिता मुदितानुकृताकुलैः ॥५॥

परिहितैरिति—इहास्मिन्प्रदेशे नयनावलिः नेत्रपङ्क्तिः उदधेः समुद्रस्य जलैरनुकृता। कथम्भूता सती? उपरुषा आसन्नकोपेन परुषा निष्ठुरा समुदिता मिलिता अनूना वा पुनः मुदिता हृष्टा। कथम्भूतैः जलैः? कृतबुद्बुदैः पुनः अतिरौद्रतया तैः लोकप्रसिद्धैर्मकरैः परिहितैः। कथम्भूतैर्मकरैः? समकरैस्तुल्यशुण्डादण्डैः पुनः आकुलैः बुभुक्षाराक्षसीमुखान्तःपतिततया व्यग्रैः ॥५॥

कल्लोलाः सपदि समुद्धृता मरुद्भिर्गण्डूषा इव करियादसां विभान्ति ।
और्वाग्निज्वलनशिखाकलापशङ्कामेतस्मिन्विदधति पद्मरागभासः ॥६॥

कल्लोला इति—मरुद्भिर्वातैः सपदि शीघ्रं समुद्धृताः समुच्छिताः कल्लोलास्तरङ्गाः करियादसां जलहस्तिनां गण्डूषा इव कुल्लका इव विभान्ति शोभन्तेतराम्। तथा पद्मरागभासः पद्मरागमणिदीप्तयः और्वाग्निज्वलन-

---

गुणोंके कारण जलमयताको प्राप्त है, इसकी निश्चित सीमा नहीं है अथवा कभी भी तटका उल्लंघन नहीं करता है और सब प्रकारके जीव-जन्तुओंका आश्रय है] ॥२॥

बड़े प्रयत्नसे प्राप्त होने योग्य बड़े-से-बड़े प्राणियोंके लिए अभीष्ट लोकोत्तर मानसी स्थितिको यति स्वयमेव प्राप्त है] समुद्र प्रकृति से ही पार करने लायक नहीं होता है। और बड़े-बड़े, ऊँचे-ऊँचे शिखरयुक्त पर्वतोंको धारण करता है] (दोनों ही) विपुल मात्रामें संचित एक-से-एक बढ़कर उपयुक्त अपनी कान्तिसे देदीप्यमान मणि राशिके द्वारा सुशोभित होते हैं ॥३॥

समुद्रके नीचे धधकती सनातन वड़वानलके द्वारा निरन्तर जलाया गया यह समुद्र मछलियोंकी उछल-कूदके बहाने बार-बार उबल-सा रहा हैं ॥४॥

यहाँपर एक सदृश सूँड (नाक) युक्त मकरोंके द्वारा सब ओरसे हिलाये गये अतएव लहराते तथा बबूले उठाते समुद्रके पानीने उठते क्रोधके कारण कठोर, मिचती तथा फैलती नेत्र पंक्तिकी समानता की है ॥५॥

वायुके झोकोंके द्वारा एकाएक उठायी गयी लहरें जलके हाथियोंके कुल्लेके समान

---

१ उत्प्रेक्षा—च०, ना०।

शिखाकलापशङ्काम् और्वाग्निज्वलनस्य यः शिखाकलापः ज्वालाकलापस्तस्य शङ्का भ्रान्तिमेतस्मिन्प्रदेशे विदधति कुर्वन्ति[1] ॥६॥

भान्त्येतस्मिन्मणिकृतरङ्गाभोगास्तत्सारूप्यान्निहततरङ्गाभोगाः ।
क्रीडास्थानै रुचिरमहीनामुच्चैरुद्भ्रान्तानां[2] सुचिरमहीनामुच्चैः ॥७॥

भान्तीति—एतस्मिन्प्रदेशे अहीना सर्पाणा भोगाः काया भान्ति । कैः ? क्रीडास्थानैः । कथम् ? उच्चैरत्यर्थम् । कथम्भूतानाम् ? [3]उद्भ्रान्तानामुपर्युपरिपर्यटितानाम् । कथम् ? उच्चैरत्यर्थम् । कथम् ? यथा भवति सुचिरं बहुकालम् । पुनः कथम्भूतानाम् ? रुचिरमहीना दीप्रावनीनाम् । कथम्भूता भोगाः ? मणिकृतरङ्गाभोगाः मणिभिः कृत रङ्गो येषा ते, मणिकृतरङ्गा आभोगा येपा ते रत्नरञ्जितफणाः पुनः तत्सारूप्यात्सर्पसादृश्यात् निहततरङ्गा विध्वस्तवीचयः[4] ॥ ७ ॥

आपातुं जलमिदमिन्द्रनीलजालव्याजेन व्यवतरतीव मेघजालम् ।
वक्षोभिः करिमकरैर्विभिन्नमम्भो यात्युद्यन्मणिरुचि शक्रचापभावान् ॥८॥

आपातुमिति–मेघजाल जल्दसङ्घः इन्द्रनीलजालव्याजेन इद जलमापातु व्यवतरतीव । तथा अम्भः वारि शक्रचापभावान् इन्द्रधनुःस्वभावान् पञ्चवर्णदीप्तिस्वरूपत्वानि याति गच्छति । कथम्भूत सत् ? करिमकरैः कर्तृभिः वक्षोभिः वक्षःस्थलैः कृत्वा विभिन्न विन्दुशो विकिरितम् । पुनः कथम्भूतमम्भ. ? उद्यन्मणिरुचि उद्यन्त्यूर्ध्वं गच्छन्ती मणीनामिव रुचिर्दीप्तिर्यस्य तत्[5] ॥८॥

एतान् प्रवालविटपान्स्वतटीभिरूढान्रूढान्निषिञ्चति हतैरुदधिस्तरङ्गैः ।
रङ्गैरिहाम्बुकरिणां निकटे वसन्तं सन्तं न सत्त्वसहिता ह्यवधीरयन्ति ॥९॥

एतानिति–असावम्बुधिः एतान्प्रवालविटपान् विद्रुमविटपान् तरङ्गैर्निषिञ्चति । कथम्भूतैस्तरङ्गैः ? अम्बुकरिणा जलहस्तिना रङ्गैः गतिभिः हतै. । कथम्भूतान् प्रवालविटपान् ? रूढान् समुत्पन्नान् पुनः स्वतटीभिरूढान् धृतान् । युक्तमेतत् हि स्फुट सत्त्वसहिता. पुरुषाः निकटे वसन्त निवास कुर्वाण सन्त सत्पुरुष नावधीरयन्ति नावगणयन्ति[6] ॥९॥

---

लगती हैं । और पद्मराग मणिकी छटाएँ दावानलके जलनेसे उठी लपटोंकी शंकाको उत्पन्न करती हैं ॥६॥

सुन्दर भूमिमें बने क्रीडाके स्थानोंसे बहुत समय तक ऊपर तेजीसे तैरते हुए तथा फणके मणियोंसे निकलती दीप्तियुक्त फणधारी तथा अपने ही समान होनेसे लहरोंको ढकेलते हुए सांपोंके शरीर इस सागरमें सुशोभित हो रहे हैं ॥७॥

इन्द्रनील मणियोंके जालके बहानेसे मेघमाला ही इसके जलको भरपूर पीनेके लिए उतरती-सी लगती है । हाथियों और मकरोंके वक्षःस्थलोंके थपेड़ोंसे बूंद-बूंदकर उछाला गया तथा उछलते मणियोंके समान चमकता इसका जल इन्द्रधनुषकी शोभाको धारण करता है ॥८॥

अपने किनारोंपर उगे तथा बढ़े मूंगाके पौधोंको जलके हाथियोंकी विशाल कायाके आघातसे उत्पन्न विशाल लहरोंके द्वारा सींचता है । उचित ही है र्थ्यशाली पुरुष अपने पास रहनेवाले नोंकी उपेक्षा नहीं करते हैं ॥९॥

---

१. अत्र श्लोके प्रहर्षिणीवृत्तम् । तल्लक्षणञ्च "म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्" (वृ र ३।७१) । २ उद्भ्रान्तानां–द० । ३. उद्भ्रान्ताना–द० । ४ अत्र जलधरमालावृत्तम् । तल्लक्षणं हि— "अब्ध्यङ्गैः स्याज्जलधरमाला म्भौ स्मौ" (वृ र ३ । ६५) । ५ अत्र प्रहर्षिणी वृत्तम् । ६. अत्र वसन्ततिलका वृत्तम् । लक्षणञ्च "उक्ता वसन्ततिलका तभजा जगौ ग." (वृ र ३।७९) ।

अध्यासीना निश्चला निस्तरङ्गानेतानेतानीलनीलान्प्रदेशान् ।
नीलाभ्राणां शङ्कया किं बलाका नो शङ्खानां पङ्क्तयस्ता विभान्ति ॥१०॥

अधीति– शङ्खाना ता' पङ्क्तय. नो विभान्ति । किमिति शब्द' संशयार्थो बोद्धव्यः । किं तर्हि ? एता बलाकाः बक्य. । किं कुर्वाणा ? एतान् प्रदेशानध्यासीना, अधितिष्ठन्त्य. । कया ? नीलाभ्राणा कृष्णमेघाना शङ्कया भ्रान्त्या । कथम्भूता बलाका ? निश्चला. स्थिरा. । कथम्भूतान्प्रदेशान् ? नीलनीलान् श्यामश्यामान् पुनः निस्तरङ्गान्निश्चलान्[1] ॥१०॥

एषामुष्मिन्विलसति मुक्ताशुक्तिर्मुक्ता शुक्तिः प्रसवनिरोधस्यालम् ।
रोधस्यालम्बितफलवामाश्वासैर्वामाश्वासैः सपदि ययोद्बोधेन ॥११॥

एषेति–एषा मुक्ताशुक्ति मौक्तिकपुटी विलसति । क ? अमुष्मिन्प्रदेशे । रोधसि तटे मुक्ता परित्यक्ता। काऽसौ ? शुक्ति शोक । कया ? यया मुक्ताशुतया । कस्य ? प्रसवनिरोधस्य प्रसूतिनियन्त्रणस्य । केन कृत्वा ? उद्बोधेन प्रबोधसमयेन । कथम् ? अलमत्यर्थं सपदि युगपत् । कैः ? सहप्रसवनिरोधस्योद्बोधेन कृत्वा शुक्तिर्मुक्ता ? वामा-श्वासैः नि.सरणवायुभि , कथम्भूतै. ? आलम्बितफलवामाश्वासैरालम्बितोऽङ्गीकृत., फलानि मौक्तिकानि, वाम उद्गिरणम् , आशु शीघ्रम्, आस क्षेप., फलाना वाम , फलवामस्याश्वास' फलवामाश्वास', आलम्बित फलवामाश्वासो यैस्तैस्तथोक्तैरिति[2] ॥११॥

गोखुराहत इवायमेकतो वर्त्तिकाभिरिव वर्त्तितोऽन्यतः ।
मेघविभ्रम इवाम्बुधिः क्वचित्सङ्कुलः स कुलपर्वतैरिव ॥१२॥

गवित–अयमम्बुधि एकत एकस्मिन्प्रदेशे गोखुराहत इव भाति । तथाऽन्यतोऽन्यस्मिन्प्रदेशे शिल्पिभिः वर्तिकाभि. चित्रलेखनीभि कृत्वा वर्तित. लिखित इव भाति । तथाय भाति । क इव ? मेघविभ्रम इव जलदोदयसशय इव । क ? क्वचित् कस्मिंश्चित् प्रदेशे । तथा क्वचित् कुलपर्वतै. कुलाचलैः सङ्कुल इव सम्भृत इव भाति[3] ॥१२॥

उद्युक्तानामुदधिमहत्त्वस्तुत्या युक्त्यैतस्मिन्ननु गुणभारत्यागः ।
स्थाने स्थाने भवति कवीनां कुर्वत्युक्त्यै तस्मिन्ननुगुणभारत्यागः ॥१३॥

उद्युक्तानामिति–नन्वहो भवति जायते । कोऽसौ ? गुणभारत्याग. गुणा यथोक्तशास्त्रोपदेशपरिज्ञानादिलक्षणा , गुणाना भारत्याग., गुणभारत्याग. । क ? एतस्मिन्प्रत्यक्षीभूते तस्मिन् लोकोत्तरे स्थाने स्थाने

---

वे शंखोंकी पक्तियाँ सुशोभित हो रही हैं ? या नीले-नीले मेघोंकी आशंकासे इस नील-नील समुद्रके हिस्सेपर आये निश्चल, बिलकुल ही न हिलते-डुलते और स्थिर होकर बैठे बगुलोंकी पंक्ति है ॥१०॥

इस समुद्रमें मोतियोंकी सीप दिख रही है। इसने मोतीके प्रसवकी पीड़ाका प्रारम्भ होते ही पूर्ण वेगसे एकदम ही श्वासें छोड़कर शीघ्र ही मुक्ताफलोंकी प्रसूतिको करके किनारे पर शोकको छोड़ दिया है ॥११॥

यह समुद्र यदि एक ओर गौके खुरोंसे खुदा तुल्य है तो दूसरी ओर कारीगरोंकी टांकीसे खुदे सदृश है। कहीं इसकी छटा मेघमालाकी है तो अन्यत्र यही कुलाचलोंसे भरा-सा प्रतीत होता है ॥१२॥

इस स्थानपर समुद्रकी गरिमाका सहेतुक वर्णन करनेके लिए तत्पर कवियोंका 'अनु-

---

१ शालिनी वृत्तमिदम्। लक्षण हि "शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकै" (वृ र ३।३५)

२ चक्रवालयमकम्–व , प , द । जलधरमालावृत्तञ्च । न क्वचित्सर्वदा सर्वविश्रम्भगमनं नय इति ।

३ रथोद्धता वृत्तमत्र, लक्षण हि "रान्नराविह रथोद्धता लगौ" (वृ र ३।३९) ।

प्रदेशे प्रदेशे । केषा गुणभारत्यागः ? कवीनाम् । कथम्भूताना कवीनाम् ? उद्युक्तानाम् । कया कृत्वा ? युक्त्या विचारणया । कस्याः ? उदधिमहत्त्वस्तुत्याः समुद्रगरिमव्यावर्णनायाः । किं कुर्वति ? स्थाने कुर्वति विदधति सति । किन्तत् ? अनुगुणभारत्यागः, कर्मणश्चैतद्रूपमनुगुणसरस्वतीदोपमित्यर्थः । कस्यै ? उत्तयै निर्वचनायेति[1] ॥१३॥

**किं मर्यादामेष जलात्मा परिवारो लोलो भिन्द्यादित्युपपश्यन्निव कूलम् ।**
**गत्वा गत्वावृत्तिमुदन्वान्भजतेऽयं न प्रत्येति स्वाम्यनुवर्गं प्रतिकूलम् ॥१४॥**

किमिति–अयमुदन्वान् समुद्रः कूल तटीं भजते प्राप्नोति । किं कृत्वा ? गत्वा गत्वा आवृत्तिं निवृत्तिम् ? किं कुर्वन्निव ? उपपश्यन्निव विचारयन्निव । कथमिति ? किम् एष जलात्मा लोलः परिवारः मर्यादा भिन्द्यादिति ? किमिति शब्दः पर्यालोचने वेदितव्यः । परिवारः करि मकर मीनादिलक्षणः जलात्मा जलमेवात्मा स्वरूप यस्य सः तदुत्पत्तिमत्त्वात्तल्लब्धजीवनत्वाच्च तस्य, लोलश्चपल' ममाय परिवार. । युक्तमेतत् । किं न प्रत्येति किं न निश्चिनोति, अपि तु प्रत्येत्येव । कोऽसौ ? स्वामी । कम् ? अनुवर्गमनुचरम् । कथम्भूतम् ? प्रतिकूल प्रतिलोममिति[2] ॥१४॥

**वेगोऽत्येति प्रतिदिशमापूर्णानामालोकान्तं हिमकरविध्वस्तानाम् ।**
**वेलौघानां प्रतिनिशमस्मिन्नेषामालोकान्तं हि मकरविध्वस्तानाम् ॥१५॥**

वेगेति–अत्येत्यतिक्रामति । कोऽसौ ? वेगो रयः । कम् ? आलोकान्त दृष्टिविषयम् । केषाम् ? एषा वेलौघाना कल्लोलसमूहानाम् । क्व ? अस्मिन्प्रदेशे । कथम् ? प्रतिनिश प्रतिरजनिम् । कथम्भूतानाम् ? प्रतिदिश सर्वदिक्षु आपूर्णाना सम्भृताना पुन. हिमकरविध्वस्ताना शिशिरकरोत्क्षिप्तानाम् । कथम् यथा भवति ? आलोकान्त दिनकरकरनिकरजनितप्रकाशावसानम् । पुनरपि कथम्भूतानाम् ? मकरविध्वस्ताना जलचरविशेषनिरस्तानाम् । कथम् ? हि स्फुटम्[3] ॥१५॥

**स्वम्मलमान्तरङ्गमखिलं सलिलधिरधिकं**
**तत्तिमिराशियोगदलितं यतिरिव परितः ।**

---

गुण भार' नामक दोषका त्याग करनेपर शास्त्रोपदेश आदि गुणोंके भारका त्याग भी इस समुद्र के विषयमें उचित ही होता है ॥१३॥

जलरूप धारी अत्यन्त अस्थिर यह मेरी चारों तरफ फैली जलराशि (अथवा जलसे उत्पन्न तथा जलजीवी और अत्यन्त चंचल ये मछली वगैरह मेरे परिवारके प्राणी) कहीं भी किनारोंका उल्लंघन न कर जाय ऐसा विचारकर ही यह सागर बार-बार चक्कर काटकर किनारेपर नहीं रुकता है क्योंकि स्वामी प्रतिकूल (लक्ष्यकी ओर) अनुयायी समूहका भी विश्वास करता है । ॥१४॥

अन्वय–अस्मिन् प्रतिदेशमापूर्णाना हिमकरविध्वस्तानां, मकरविध्वस्ताना एषां वेलौघाना वेग हि प्रतिनिशं आलोकान्तं अत्येति ।

इस समुद्रमें सब दिशाओंसे उमड़तीं, चन्द्रमाकी किरणोंसे ज्वार रूप तथा मगर मच्छादिको कष्टकर इन लहरोंके समूहका पूर प्रत्येक रात्रिमें सूर्योदय पर्यन्त उठता ही रहता है ॥१५॥

अन्वय–अयं सलिलधि स्व, अन्तरग, अखिल, तिमिराशियोगदलित, आवरणात्मक, अधिकमल परित यतिरिव मुहु बहि अभिनुदति । हि महता प्रायश ईदृशी अविमला गति ।

१ जलधरमालावृत्तम्, अन्त्यपादयमकञ्च । २ मत्तमयूरवृत्तम्, लक्षणं हि "वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम्" (वृ र ३।७३) । ३. जलधरमालावृत्तम् । अन्त्यपादयमकञ्च ।

आवरणात्मकं मुहुरयं वहिरभिनुदति
प्रायश ईदृशी हि महतां गतिरतिविमला ॥ १६ ॥

स्वमिति–अभिनुदत्युत्क्षिपति । कोऽसौ ? अय सलिलधिः समुद्र. । किम् ? तन्मलम् । कथम् ? परितः सामस्त्येन । कथम् ? बहिर्वाह्ये । कथम् ? मुहुर्वार वारम् । कथम्भूत मलम् ? स्वमात्मीयम् । पुन. कथम्भूतम् ? आन्तरङ्ग मध्यगतम् । पुन. कथम्भूतम् ? अखिल समस्तम् । पुन. कथम्भूतम् ? तिमिराशियोगदलित मीनसमूहसङ्घट्टविघटितम् । कथम् ? अधिक प्रचुर यथा भवति । पुनः कथम्भूतम् ? आवरणात्मक जनझम्पनरूपम् । क इव ? यतिरिव यथा यतिरभिनुदति । कथम् ? परित. । कथम् ? मुहु । कथम् ? वहि॰ । कथम्भूतम् स्व स्वकीयम् । पुन कथम्भूतम् ? अन्तरङ्गम् आत्मप्रदेशानुविद्धम् । पुनरपि कथम्भूतम् ? अधिक प्रचुरम् । पुनरपि कथम्भूतम् ? तिमिराशियोगदलित किम् ? तन्मल पापम् योगो मनोवाक्कायनिरोध. तिमिर पापमश्नातीत्येव शीलस्तिमिराशी स चासौ योगश्च तिमिराशियोगस्तेन दलित चूर्णित पुन. आवरणात्मक ज्ञानव्यक्तिप्रच्छादनरूपम् । अर्थान्तरमुपन्यस्ते—महता सत्पुसाम् ईदृशी प्रायग बाहुल्येन हि स्फुट गतिरतिविमला निर्मला जायते । छन्दोनाम्ना विमलेति ध्वनितम्[1] ॥ १६ ॥

उद्बिन्दूनां मुहुरनुबद्धं वीच्या वात्यासारं प्रशमि तता पारम्यम् ।
फेनालीनां छिमितिकरोत्येतस्मिन्वात्या सारं प्रशमिततापा रम्यम् ॥१७॥

उद्बिन्दूनामिति–सा वात्या वातमण्डली फेनालीना पारम्य शोभा छिमितिकरोति विनाश नयति । कथम्भूताना फेनालीनाम् ? उद् बिन्दूना बुद्बुदवतीनाम् । कथम् ? अरमत्यर्थम् । कथम्भूता वात्या ? प्रशमिततापा प्रशमित तापो यया सा प्रशमिततापा । पुन. कथम्भूता ? तता विस्तार प्राप्ता । क्व एतस्मिन्प्रदेशे । कथम्भूत पारम्यम् ? रम्य मनोहरम् । पुन. कथम्भूतम् ? वीच्या तरङ्गेण मुहु प्रशमि स्थिर यथा भवति तथाऽनुबद्ध विरचितम् । किं कुर्वन्त्या वीच्या ? वात्या विजृम्भमाणया । कथ यथा ? असार शीघ्रमिति[2] ॥ १७ ॥

अन्वेति रत्नोल्लसितेन्द्रचापः कल्लोलमेघः सकदम्बकेन ।
नभस्वता शङ्खचलद्वलाकः क्षोभं गतः प्रावृषमम्बुराशिः ॥१८॥

अन्विति–अम्बुराशि. समुद्र प्रावृष घनकालमन्वेति अनुकरोति । कथम्भूतः सन् ? नभस्वता वायुना

---

यह समुद्र अपनी तहमें पड़े अपने अखिल मलको, जो कि मछलियोंके विविध झुण्डोंके निवास अथवा वस्तुओंके कूदनेसे बहुत विपुल मात्रामें हो गया है उस सबको योगीके समान सब तरफसे बार-बार बाहर फेंक रहा है । [ यति भी अपने समस्त आध्यात्मिक पाप मलको जो कि मन, वचन, कायकी कुचेष्टाओंके निरोधक कार्योंसे नष्ट होता है तथा आवरण (ज्ञानावरण, दर्शनावरण) स्वरूप होता है इस बढ़े हुए बन्धको पुनः पुनः प्रयत्न करके नष्ट करता है ] ठीक ही है महापुरुषोंकी बहुधा ऐसी ही निर्मल गति होती है ॥१६॥

अन्वय–एतस्मिन् सा तता, प्रशमिततापा वात्या उद्बिन्दूना फेनालीना रम्य, वात्यासारं, अनुबद्ध, मुहु वीच्या प्रशमि पारम्य अरं छिमितिकरोति ।

इस समुद्रमें वह खूब विस्तृत अतएव तापविनाशक वायुवेग फुहार सहित फेनराशिकी उस सुन्दर रमणीयताको शीघ्र ही नष्ट कर देता है, जो वायुके साथ ही चढ़ता है, खूब घना होता है तथा बारम्बार किनारे पर आकर स्थिर हो जाता है ॥१७॥

कदम्ब आदिके फूलों युक्त वायुवेगसे क्षुब्ध, बिखरे रत्नोंरूपी विकसित इन्द्रधनुप-

---

1 अर्थान्तरन्यासाऽलङ्कार –च०, ना० । अत्र वशपत्रपतित वृत्तम् । लक्षण हि "दिङ् मुनि वशपत्रपतित भरनभनलगै" ( वृ० र० ३।९२) । २, जलधरमाला वृत्तम् । अन्त्यपादयमकञ्च ।

क्षोभ गतः प्राप्तः । कथम्भूतः पुनः ? रत्नोल्लसितेन्द्रचापः, रत्नेभ्य उल्लसितमिन्द्रचाप यत्र सः, पुनः कल्लोलमेघः कल्लोला एव मेघा यत्र सः, पुनः शङ्खचलद्वलाकः शङ्खा एव चलन्त्यो वलाका यत्र स' । कथम्भूतेन नभस्वता ? सकदम्बकेन कदम्बकुसुमवृन्दवता ॥ १८ ॥

**इत्थं तेन व्यापृतनेत्रेण पयोधौ वेलावेगाद्भानुसमीपं ह्रियमाणा ।**
**क्रन्दन्त्यन्तःस्नेहकृपार्द्रं परिवृत्य श्रीमत्सीतापक्रमतप्ता विलुलोके ॥१९॥**

इत्थमिति– व्यापृतनेत्रेण व्यापारितनेत्रेण तेन रावणेन । क्व ? पयोधौ समुद्रे, इत्थमुक्तप्रकारेण श्रीमत्सीता श्रीमती चासौ सीता च श्रीमत्सीता विलुलोकेऽवलोकिता । कि कृत्वा ? परिवृत्य परिवर्त्तन कृत्वा । कथम् ? यथा अन्तः स्नेहकृपार्द्रश्चेतो मध्ये प्रीतिकरुणार्द्रम् । किं कुर्वाणा ? ह्रियमाणा नीयमाना । किं तत् ? भानुसमीपम् सूर्यसमीपम् । कस्मात् ? वेलावेगादन्तर्मुहूर्त्तसमयात् । कथम्भूता सती ? क्रन्दन्ती विलपन्ती रामरामोच्चारणपुरःसरतया रक्ष रक्षेत्यादिविलापपूर्वक रुदतीत्यर्थ । पुनः कथम्भूता ? अपक्रमतप्ता अन्यायमार्गजनितदुःखा ।

भारतीयः—तेन युधिष्ठिरेण इत्थ श्रीमत्सी श्रिया शोभया उपलक्षिता चासौ मत्सी च श्रीमत्सी सर्वाङ्गपरिपूर्णतया शोभमाना शफरी विलुलोके । कथम्भूतेन ? पयोधौ व्यापृतनेत्रेण । किं कुर्वाणा ? ह्रियमाणा गम्यमाना । अत्र तृतीयार्थे पञ्चमी । तेनायमर्थो लभ्यते । किम् ? भानुसमीपम् । कस्मात् ? वेलावेगात्कल्लोलवेगेनेत्यर्थः । किं कुर्वाणा सती ? क्रन्दन्ती । कथम्भूता ? तापक्रमतप्ता सन्तापपरम्परादग्धा, शेप प्राग्वत् ॥१९॥

**स्थिरसमुद्रसमुद्रसकौतुकाद्युगभुजं विनयेन नयेन च ।**
**तमुदितं मुदितं ह्यनुजोग्रवागिति विभुं निजगौ निजगौरवात् ॥२०॥**

स्थिरेति–न निजगौ अपि तूक्तवती । काऽसौ अनुजा भगिनी सूर्पणखा । किम् ? उदित वचनम्, क प्रति ? त रावण प्रति । केन कृत्वा ? विनयेन प्रश्रयेण । कस्मात् ? निजगौरवात्स्वकीयमाहात्म्यात् । कथम् ? हि स्फुटम् । कथम् ? इति वक्ष्यमाणप्रकारेण । कथम्भूतम् रावणम् ? मुदित हृष्टम् । केन ? नयेन च (न) येनैव वचसा 'चकारोऽत्रावधारणार्थो बोद्धव्योऽव्ययानामनेकार्थत्वात् । पुन. विभु स्वामिन व्यापक त्रैलोक्यक्षोभविधायित्वात्तस्य । पुन. कथम्भूतम् ? द्युगभुज द्या गच्छन्तीति द्युगा विद्याधरास्तान् भुनक्ति रक्षतीति द्युगभुक् तम् । कथम्भूताऽनुजा ? उग्रवाक् तीव्रवचना । पुनः स्थिरसमुद्रसमुद्रसकौतुका मुदा सह वर्त्तते समुत् समुचासौ रसश्च समुद्रस' स्थिरसमुद्रे समुद्रसो यस्मात्तत् स्थिरसमुद्रसमुद्रस स्थिरसमुद्रसमुद्रस कौतुक यस्या. सा तथोक्ता । अथवा स्थिरश्चासौ समुद्रश्च स्थिरसमुद्रः, मुदोरस. मुद्रस. हर्षरस., सह मुद्रसेन वर्त्तत इति समुद्रसम् , स्थिरसमुद्रे समुद्रसङ्कौतुक यस्याः सा तथोक्ता निश्चलाम्भोधिसहर्षरसकौतुकेत्यर्थः ।

---

धारी, तरंगमाला रूपी मेघोंसे आवृत तथा शंखोंरूपी उड़ती सारस या हंसपंक्ति युक्त यह समुद्र वर्षा ऋतुकी नकल कर रहा है ॥१८॥

अन्वय–पयोधौ इत्थ परिवृत्य व्यापृतनेत्रेण तेन वेलावेगात्, भानुसमीप ह्रियमाणा अपक्रमतप्ता, क्रन्दती श्रीमत्सीता अन्त स्नेहकृपार्द्रं विलुलोके ।

समुद्रकी ऐसी छटाके रहनेपर भी घूमकर आँख उठानेपर उस रावणने बड़े वेगके साथ ऊपर आकाशमें सूर्यके समीपसे ले जायी गयी अपमानके कारण उद्दीप्त आन्तरिक पतिप्रेम और वैराग्य मनसे विलाप करती तथापि कान्तिमती सीताको देखा था । [इस प्रकार घूमकर देखते हुए धर्मराजने स्नेह और दयासे द्रुत होते हुए देखा था कि लहरोंके द्वारा धूपमें फेंकी गयीं सुन्दर मछली उष्मासे दुखी होकर तड़फड़ा रही है ] ॥१९॥

अन्वय–स्थिरसमुद्रसमुद्रसकौतुका, उग्रवाक् अनुजा युगभुज नयेन मुदित उदित त विभु निजगौरवात् विनयेन इति निजगौ ।

गाढ़ हर्ष तथा रसयुक्त अतएव अत्यन्त उत्कट जिज्ञासा मय, उग्र वक्ता छोटी वहिन सूर्पणखाने खेचरोंके पालक, सीताके अपहरणके कारण प्रसन्न तथा देदीप्यमान राजा रावणको अपनी मर्यादाके रक्षणपूर्वक निम्न विनम्र वचन कहे थे ।

भारतीयः—निजगौ। कोऽसौ ? अनुजो भ्राता भीमोऽर्जुनो वा। कम् ? त युधिष्ठिरम्। केन कृत्वा ? विनयेन प्रश्रयेण नयेन दण्डनीत्यादिना। कस्मात् ? निजगौरवात्। कथम्भूतम् ? उदितमभ्युदय प्राप्तम्। पुनः कथम्भूतम् ? मुदित हृष्टम्। कस्मात् ? स्थिरसमुद्रसमुद्रसकौतुकात्। कथम्भूतम् युधिष्ठिरम् ? विभु प्रभु पुनर्युगभुज युगे इव भुजे यस्य तम्। दीर्घतरबाहुमित्यर्थ.। कथम्भूतोऽनुज ? अग्रवाक्प्रधानवचनोऽव्यभिचारिवचन इति[1] ॥२०॥

**सोऽयं नगर्याः परिखायमाणो वाताहतैरम्बुकणैः पयोधिः।**
**दूरोन्नमत्पाण्डुकुलाग्र्यमुच्चै रक्षोध्वजं त्याजयति श्रमं त्वाम् ॥२१॥**

स इति–हे रावण त्याजयति प्रहापयति। कोऽसौ ? पयोधि। कम् ? श्रमम्। क त्याजयति ? त्वा भवन्तम्। कै ? अम्बुकणैर्जलबिन्दुभि। कथम्भूतै ? वाताहतै शीतलैरित्यर्थ.। कथम्भूत त्वाम् ? दूरोन्नमत्पाण्डुकुलाग्र्य पाण्डुनिर्मल कुल येषा ते पाण्डुकुला राजान दूरोन्नमन्तश्च ते पाण्डुकुलाश्च दूरोन्नमत्पाण्डुकुलास्तेषामग्र्य. स तथोक्तस्त बहुकालोन्नतिप्राप्तनिर्मलवंशानामाद्यमित्यर्थ। पुन कथम्भूतम् ? उच्चै रक्षोध्वजमुच्चैरतिशयेन रक्षो राक्षसो ध्वजे पताकाया यस्य तम्। कथम्भूतः पयोधि ? परिखायमाण खातिकायमान'। कस्या ? नगर्या लङ्काया.।

भारतीय—हे युधिष्ठिर ! पयोधिरम्बुकणै कृत्वा त्वा श्रम त्याजयति। कथम्भूत ? उच्चैरक्ष उच्चै स्थूला अक्षा शङ्खादयो यत्र स उच्चैरक्ष, पुन. नगर्या द्वारावत्या. परिखायमाण। कथम्भूत त्वाम् ? दूरोन्नमत्पाण्डुकुलाग्र्य पाण्डो राज्ञ कुल पाण्डुकुल दूरमुन्नमच्च तत्पाण्डुकुलञ्च दूरोन्नमत्पाण्डुकुल तस्मिन्, दीर्घोन्नतीभवत्पाण्डुवंशेऽग्र्य प्रधान अथवा पाण्डो' कुल येषा ते, पाण्डुकुला. क्षितिभुज', दूरोन्नमन्तश्च ते पाण्डुकुलाश्च दूरोन्नमत्पाण्डुकुलास्तेषामग्र्य पूज्यस्त तथोक्तम्[2] ॥२१॥

**अत्रासनक्रमकरैरयमाविलोऽलमायातिपातिविसरो जवनस्वरोऽधः।**
**अत्रासनक्रमकरै रयमाविलोलमायातिपाति विसरोजवनस्वरोधः ॥२२॥**

अत्रेति–आयात्यागच्छति। कोऽसौ ? अय पयोधिः। कम् ? रय वेगम्। क्व ? अत्रास्मिन्प्रदेशे। कथम् ? अलमत्यर्थम्। कथम्भूत ? आयातिपातिविसर आय नदीमुखम्, सरन्ति गच्छन्ति भेदा यस्मि

[अन्वय–अग्रवाक् अनुज युगभुज, उदित मुदित तम् विभु स्थिरसमुद्रसमुत्रसकौतुकात् निजगौरवात् विनयेन नयेन च निजगौ।

वचनके प्रतिपालक छोटे भाई भीम या अर्जुनने विशालबाहु, प्रतापी तथा प्रमुदित राजा युधिष्ठिरसे विनम्रता तथा नीतिज्ञताके साथ धैर्यकी मुद्रासे अंकित, हर्ष तथा वीर रसकी जिज्ञासापूर्ण फलत अपनी महत्ताके अनुरूप वचन कहे थे ॥२०॥

अन्वय–नगर्या परिखायमाणो सोऽय पयोधि दूरोन्नमत् पाण्डुकुलाग्र्य रक्षोध्वज त्वां वाताहतैरम्बुकणै उच्चै त्याजयति।

लंकापुरीकी खाईके समान यह समुद्र दूरसे उड़कर उतरते हुए, विशुद्धवंशियोंके प्रमुख तथा राक्षसोंकी ध्वजा समान आपके श्रमको पवनके द्वारा उछाले गये जल-विन्दुओंसे बिल्कुल दूर कर रहा है। [द्वारका पुरीकी परिखाके समान तथा स्थूल शंखादि युक्त यह समुद्र चिरकालसे प्रतिष्ठित पाण्डुवंशियोंके प्रधान आपकी मार्गकी थकानको पवनप्रेरित जलविन्दुओंसे दूर करता है] ॥२१॥

अन्वय–आयातिपातिविसर अध जवनस्वर आविल अय अत्रअत्रासनक्रमकरै आविलोलं अल रय आयाति विसरोजवनस्वरोध पाति।

जिसका प्रसार जलकी आयका अतिक्रमण करता है, जिसमें नीचे-नीचे शीघ्रतापूर्वक

१. द्रुतविलम्बितवृत्तमत्र। २ इन्द्रवज्रा वृत्त, लक्षण हि "स्यादिन्द्रवज्रा यदि तौ जगौ गः" (वृ र ३।३०)।

न्निति सरःसमूहाः, वीना सरोविसरः पक्षिसमुदायः, आयमतिपततीत्येवशीलः आयातिपाती आयातिपाती विसरो यत्र स तथोक्तः। पुनः जवनस्वरः शीघ्रघोषः। कथम्? अधोऽधस्तात्। पुनः कथम्भूतः? आविल. कलुषः। कथम्भूत स्यम्? आविलोल सामस्त्येन चञ्चलम्। कैः? अत्रासनक्रमकरैः न विद्यते त्रासो येषा तेऽत्रासाः, नक्राश्च मकराश्च नक्रमकराः, अत्रासाश्च ते नक्रमकराश्चात्रासनक्रमकरास्तैः। आ सामस्त्ये-नासन क्षेपण येषा त आसनाः, क्रमाश्चरणाः, करा हस्ताः, क्रमाश्च कराश्च क्रमकराः, आसनाः क्रमकरा येषा ते आसनक्रमकरास्तैरासनक्रमकरैः। तथा च पाति रक्षत्यय पयोधिः। किम्? विसरोजवनस्वरोधः सरोजाना कमलाना वन सरोजवन विभिरुपलक्षित सरोजवन यत्र तद्विसरोजवन विसरोजवनञ्च तत्स्वरोधश्च विसरोजवनस्वरोध. विहङ्गमयुक्तकमलकान्तारस्वकीयतटमित्यर्थ.[1] ॥ २२

यद्वातकी यद्वलिभस्तरङ्गी तत्किं गतो वर्षिमहानियोगम्।
सत्त्वानुकम्पाभिरतो यदब्धिस्तत्किं गतो वर्षिमहानियोगम् ॥२३॥

यदिति–अत्र यत्तदो. सामान्योक्तिप्रयोगः। यद्वातकी वातोऽस्यास्तीति वातकी, यद्वलिभ. यत्तरङ्गी तरङ्गाः सन्त्यस्येति तरङ्गी, तत्किं गतः वर्षिमहानियोग वृद्धभावापचयनसम्बन्धम्? अत्र तात्पर्यार्थो निवेद्यते—यथाऽन्य. कश्चित्प्राणी किल वातकीवलिभिस्तरङ्गी सन् वृद्धभाव प्रयाति तथा समुद्रो न यातीति गम्यते। वा अथवा यदब्धिः यदुदधिः सत्त्वानुकम्पाभिरतो वर्त्तते, तत्किं गतः? किम्? ऋषिमहानियोग ऋषीणा मुनीना महानियोगम् महानुष्ठानम्। यथा किलान्योऽपि सत्त्वकरुणाभिरतो मुनीना तपश्चरणानुष्ठान प्राप्नोति तथा न सत्त्वानुकम्पाभिरतोऽपि समुद्र तपश्चरणानुष्ठान प्राप्नोति, तस्याचेतनत्वाद् जल(ड)स्वभावत्वाच्चेति भावः। सत्त्वाः मीनमकरादयः अनुकम्प कम्पस्य चञ्चलत्वस्य पश्चादनुकम्पम्, अभिरत सामस्त्येन क्रीडितम्, सत्त्वानामनुकम्पमभिरत यत्र स सत्त्वानुकम्पाभिरत इति[2] ॥ २३ ॥

अमुत्र मकरैः करैर्विरचिता चिता विनियतायताप्य च नभः।
नभस्वदयुतायुता दिशमितामिता समहिमा हिमा जलततिः ॥ २४ ॥

अमुत्रेति–इता गता। काऽसौ? जलतति पयःपूर.। काम्? दिशम्। क? अमुत्रास्मिन्प्रदेशे। कथम्भूता? विरचिता। कै. कर्तृभि.? मकरैः। कैः करणै? करैः शुण्डाभिः। कथम्भूता? चिता पुष्ट-मूलेत्यर्थ। पुनः कथम्भूता? विनियता विभिः पक्षिभिर्नियता सम्बद्धा विनियता, पुनरायता दीर्घा। किं कृत्वा? नभो गगनमाप्य प्राप्य, पुन. कथम्भूता? नभस्वदयुतायुता नभस्वता वायुना देवानामयुतेन दशसहस्र-सङ्ख्यया आयुता सामस्त्येन संयुक्ता पुनरमिता प्रचुरा पुन समहिमा महिम्ना सह वर्त्तमाना पुनः हिमा शीतला[3] ॥ २४ ॥

---

घोष होता रहता है तथा मलीन है ऐसा यह समुद्र यहाँपर निर्भय मगरमच्छोंकी क्रीड़ासे अत्यन्त चंचल है तथा परिपूर्ण वेगको प्राप्त है। अपने किनारेके पक्षियुक्त कमलवनोंकी रक्षा भी करता है ॥२२॥

जो यह समुद्र वायुपूरित (वातरोगी), वलिपूर्ण (झुर्रीदार) तथा लहरोंसे व्याप्त (झुका हुआ) हुआ है सो क्या वृद्धावस्थाके महाप्रभावको प्राप्त हुआ है? अथवा समुद्रवासी प्राणियोंके पालनमें लीन (प्राणिमात्रपर दयालु) जो यह समुद्र है सो क्या यतिकी साधनाको कर रहा है ॥२३॥

मकरोंकी सूँड़ोंके द्वारा फैलायी गयी, परिपुष्ट, पक्षियोंके द्वारा पीत और आकाशमें ऊपर तक उठी हजारों गुनी पवनके वेगसे युक्त, प्रत्येक दिशामें निःसीम, महत्त्वपूर्ण तथा शीतल जलराशि यहाँपर है ॥२४॥

१ अर्धसमयमकम्—द०, ना०। वसन्ततिलकावृत्तञ्चात्र। २. इन्द्रवज्रा वृत्तमत्र। ३. जलो-द्धतगति वृत्त, लक्षणञ्च "रसैर्जसजसा जलोद्धतगति" (वृ० र० ३।५४)।

समुन्नताम्भोजकुलाभिनन्द्यां विद्याधराणामधिवासभूमिम् ।
त्वं द्वारकान्तां खलु पश्यसीमां राजन्नलङ्कामहितां परेभ्यः ॥ २५ ॥

समुन्नतेति–हे राजन् ! न पश्यसि नावलोकसे त्वम् ? काम् ? इमा लङ्काम् । कथम्भूताम् ? परेभ्य शत्रुभ्योऽहिता दुःखहेतुम्, खल्विति निश्चयार्थे । तेनायमर्थ–परेभ्यो नान्येभ्यो जनेभ्यस्त्वस्तेभ्य इति भावः । पुन द्वारकान्ता गोपुरमनोहरा पुन विद्याधराणा खेचराणामधिवासभूमिमन्वयपरम्परायाता पुन समुन्नताम्भोजकुलाभिनन्द्या समुन्नतानि च तान्यम्भोजकुलानि च तैरभिनन्द्याम् । समुन्नता मान्यता अम्भोजकुला राक्षसा विभीषणादयस्तै. प्रशस्याम् । अथवोद्दण्डजलजराजिविराजमानामित्यर्थ ।

भारतीय –हे राजन् युधिष्ठिर ! त्व ता लोकप्रसिद्धा द्वारका द्वारवतीं पश्य । कथम्भूताम् ? सीमामवधि खलु खलुशब्दोऽवधारणार्थ. । तेनायमर्थ–अन्यासा नगरीणा मर्यादामेव तत्रैवानन्यसम्भविन्या विभूते सम्भवात् । पुन कामहिता कामाय अत्रैव वास्तव्यमस्माभिरित्यभिलाषाय हिता ता तथोक्ताम् । केभ्य. ? परेभ्यो धनिभ्य सत्पुरुषेभ्य । अस्यामेव योगक्षेमघटनाया सम्भवात् । "अलमिति योगेन परेभ्य इत्यत्र पष्ठ्या. प्राप्तौ चतुर्था ।" पुनरपि कथम्भूताम् ? विद्याधराणा शस्त्रशास्त्रपरिज्ञानवता पुसामधिवासभूमिं पुन भोजकुलाभिनन्द्या यादवकुलप्रशस्याम् । दाशार्हकुल वृष्णिकुल यादवकुलमिति हरिवंशस्य विशेषा. । पुन. समुन्नता तुङ्गाम्[1] ॥ २५ ॥

कल्लोलैरिह जलधेः सुधागृहाणि व्यज्यन्ते मुरजरवा न गर्जितेन ।
नाम्भोदैः सततगतैर्गवाक्षधूपाः प्राप्तापि व्रजति न लक्ष्यतां पुरीयम् ॥२६॥

कल्लोलैरिति–सुधागृहाणि जलधे कल्लोलैरुत्कलिकाभिर्न व्यज्यन्ते, क्व ? इह अस्या नगर्याम् । तथा न व्यज्यन्ते प्रकाश्यन्ते, के ? मुरजरवा. मृदङ्गध्वनय , केन ? गर्जितेन समुद्रध्वनिना । तथा न व्यज्यन्ते गवाक्षधूपा , कै ? सततगतैरनवरतप्रयोतैरम्भोदै., अतएवासावियं पुरी लङ्का द्वारवती च लक्ष्यता ज्ञेयत्व न व्रजति, कथम्भूता सती ? प्राप्तापि ज्ञातापि । 'प्राप्नोति[2] क्रियाया ज्ञानार्थत्व धातूनामनेकार्थत्वात्' ॥ २६ ॥

---

अन्वय–राजन् ! त्व समुन्नताम्भोजकुलाभिनन्द्या, विद्याधराणामधिवासभूमि द्वारकान्ता परेभ्य. अहिता इमा लङ्का न पश्यसि ?

हे रावण ! तुम इस लंकाको नहीं देखते हो ? जो प्रतिष्ठित राक्षसवंशियोंके द्वारा अभिनन्दनीय है । विद्याओंके धारकोंकी निवासभूमि है, गोपुरोंसे सुशोभित है तथा शत्रुओंके लिए अनिष्टकारी है ।

राजन् त्व, परेभ्य अल, खलु सीमां, कामहिता, भोजकुलाभिनन्द्या, विद्याधराणामधिवासभूमि ता द्वारका पश्य ।

हे धर्मराज ! आप सामने स्थित द्वारकाको देखें, यह शत्रुओंके लिए चुनौती है, राजपुरियोंकी अन्तिम सीमा है, निवासकी कामनाके लिए इष्ट है, यादवकुलको परम प्रिय है और शास्त्र तथा शास्त्रविद्याओंमें प्रवीण लोग यहाँ रहते हैं ॥२५॥

इस लका अथवा द्वारकामें चूनासे श्वेत भवन समुद्रकी लहरोंके कारण नहीं दिखते हैं, समुद्रकी गर्जनामें नगाड़ोंकी आवाज छिप जाती है तथा सदैव वर्तमान मेघोंके कारण खिड़कियोंसे निकलता सुगन्धित धुआँ भी अदृश्य हो जाता है । इस प्रकार सामने रहनेपर भी यह नगरी दिखती नहीं है ॥२६॥

---

१ उपजातिवृत्तम् , लक्षणञ्च–"अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता " (वृ० र० ३।३२) । २ प्राप्नोति क्रियाया कथ ज्ञानार्थत्वम् ? धातूनामनेकार्थत्वाल्लोकत सिद्धम् । यथा त्वदीय चित्त प्राप्तमित्यत्र ज्ञातमिति भाव –प०, द० । प्रहर्षिणीवृत्तम् ।

**धीरन्तुं गां गत्वा स यस्यामरस्य धीरं तुङ्गाङ्गत्वाच्छ्रियो वञ्चति द्याम् ।**
**रिक्तः स्वर्गेणाकारि मानोऽज्ञकेन साम्यं किं सोऽस्या याति मानोज्ञकेन ॥२७॥**

धीरिति–यस्यामरस्य रन्तु क्रीडितु धीर्बुद्धि. प्रवर्त्तते । किं कृत्वा ? अस्या नगर्या गा भूमिं गत्वा, अतएव वञ्चति त्यजति । कोऽसौ ? सोऽमरो देव. । काम् ? द्या स्वर्गम् । कथ यथा धीर नि.क्षोभम् । कस्मात् ? तुङ्गाङ्गत्वात् स्फीतावयवत्वात्, कस्याः ? श्रियः शोभाया, कस्या ? अस्या नगर्या इति सम्बन्ध. । अतोऽकारि कृतः । कोऽसौ ? मानोऽभिमान. । केन कर्त्रा ? स्वर्गेण । कथम्भूतः ? रिक्त. शून्यो वृथेत्यर्थः । कथम्भूतेन स्वर्गेण ? अज्ञकेन मूढेन, अतएव किं यात्यपि तु न याति । कोऽसौ ? स. स्वर्ग, किम् ? साम्य तुलाम्, केन हेतुना ? मानोज्ञकेन मनोहरत्वेन, कस्या ? अस्या नगर्या. लङ्काया द्वारवत्याश्चेति ॥ २७ ॥

**अस्याम्बुधेर्यातनिवृत्तमार्गे पुञ्जैः स्थिता ये मणिशुक्तिशङ्खाः ।**
**तथा त एवार्य निवेशनेऽपि स्थिता इवान्तर्बहिरप्यमुष्याः ॥२८॥**

अस्येति–यातनिवृत्तमार्गे गतागतपृथिव्या पुञ्जै राशिभि. अस्याम्बुधेः ये मणिशुक्तिशङ्खा. स्थितास्तथा तेनैव प्रकारेण हे आर्य स्वामिन् स्थिता इव भान्ति । के ? त एव मणिशुक्तिशङ्खाः । क्व ? निवेशनेऽपि राशिरचनायामपि । कथम् ? अन्त मध्यप्रदेशे बहिरपि बाह्यप्रदेशे । कस्या ? अमुष्या अस्या नगर्या इति[1] ॥२८॥

**यस्याः समीपेऽम्बुनिधिर्निषण्णो रत्नैः स्फुटं भोजनभाजनानि ।**
**स्त्रियश्च देवाप्सरसां सदृश्यः किं वर्ण्यतेऽस्या विभवो नगर्याः ॥२९॥**

यस्या इति–यतो यस्या नगर्या समीपे अम्बुनिधि. समुद्र निषण्ण. स्थितोऽत एवास्या भोजनभाजनानि स्थाल्कादीनि स्फुट प्रव्यक्त रत्नै. माणिक्यादिभि. विद्यन्ते । यतश्च स्त्रिय. देवाप्सरसाममराङ्गनाना सदृश्यस्तुल्याः विद्यन्ते । अत. कारणादस्या नगर्या विभव सम्पत् किं वर्ण्यते स्तूयते[1] ॥२९॥

**अत्र समेता मृदुरसमेता भ्रूकुटिलास्याः स्मरकुटिलास्याः ।**
**भूप रमन्ते ह्यनुपरमं ते वेगमनेन व्यभिगमनेन ॥३०॥**

अत्रेति–हे भूप रावण युधिष्ठिर च अत्र अस्या नगर्या मृदुरस माधुर्यरस यथा हि स्फुटमनुपरममनवरत वेग शीघ्रमेता. कामिन्यः रमन्ते क्रीडन्ति । केन हेतुना ? ते तवानेन व्यभिगमनेन सम्मुखगमनेन । कथम्भूताः ? मिलिता., पुन भ्रूकुटिलास्याः भ्रूभङ्गकुटिलाननाः । पुन. स्मरकुटिलास्या स्मरस्य कुटिः गृह लास्य नृत्य यासा ता[2] ॥३०॥

---

जिस देवको इस नगरीकी भूमिपर आकर रहनेकी इच्छा होती है वह विपुल लक्ष्मीके भंडार स्वर्गको भी निसंकोच भावसे छोड़ देता है। मूर्ख स्वर्ग भी व्यर्थका अभिमान करता है क्योंकि मनोहरतामें वह इस पुरी ( लंका या द्वारका ) की समानता करता है क्या ? अर्थात् नहीं ॥२७॥

हे आर्य ! इसके बाजारों (आयातनिर्यात मार्गों) में जिस प्रकार समुद्रके मणि, मोती और सीप ढेरोंके ढेर पड़े हैं उसी प्रकार इसके भवनोंमें भी ये सब भरे हैं। अर्थात् इसका बाहर भीतर के समान है ॥२८॥

इस लंका और द्वारकाके पास समुद्र फैला है अतएव इसमें भोजनके बर्तन भी रत्नोंके बने हैं। इसकी स्त्रियाँ भी देवोंकी अप्सराओंके समान हैं। अतएव इसके वैभवका क्या वर्णन किया जाय ॥२९॥

हे राजन् ! टेढ़ी-टेढ़ी भ्रुकुटियुक्त मुखधारिणी, कामदेवके निवास समान नृत्यकारिणी एकत्रित ये स्त्रियाँ आपके इस शुभागमनके कारण लगातार ही मृदु और सरस रमणको शीघ्रतासे कर रहीं हैं ॥३०॥

---

१ उपजातिवृत्तम् । २. अत्र मौक्तिकमालावृत्तम्–तल्लक्षणञ्च "मौक्तिकमाला यदि भतनाद् गौ" (वृ र. ३।४४) ।

कामिपरीता मधुविपरीता भूमिप कान्ता स्फुरदलकान्ता ।
काप्यनुगेयं लयमनुगेयं गायति मत्ता कृतरतिमत्ता ॥३१॥

कामीति–हे भूमिप! इय कापि कान्ता भामिनी गायति। कथम्भूता सती? ल्य द्रुतमध्यविलम्बित-रूपमनुगाऽनुगच्छन्ती। कथम्भूत ल्यम्? अनुगेय गेयस्यानु[1] पश्चादनुगेयम्। कथम्भूता? मत्ता पुन कृतरतिमत्ता विहितसम्भोगवत्ता पुन' कामिपरीता कामुकवेष्टिता पुन मधुविपरीता मधुना मद्येन विपरीता आचारेभ्य. प्रच्याविता, विह्वलीभूतेत्यर्थ। पुन स्फुरदल्कान्ता दीप्यमानकेशाग्रा ॥३१॥

वादयितारं प्रियदयितारं वाङ्मुखरा गाहितमुखरागा ।
तं वहुधा तु क्रमवहुधातु क्ष्माधिप हित्वाभिपतति हि त्वा ॥३२॥

वादयितारमिति–हे क्ष्माधिप भूपते! प्रियदयिता प्रिया चासौ दयिता च प्रियदयिता सस्नेहकामिनी त्वा भवन्तमभिपतति सम्मुखमायाति। कथम्? हि स्फुटम्। किं कृत्वा? त वादयितार चतुर्विधवाद्यस्य प्रकट-यितार हित्वा परित्यज्य। कथम्? वहुधा बहुप्रकारम्। कथम्? यथा भवति क्रमवहुधातु क्रमेण परिपाट्या वह्वो धातवो व्यञ्जनधातुप्रभृतयो यस्मिन्वादनकर्मणि तत्तथोक्तम्। एतेन वीणादिवादन व्याख्यातम्। कथम्? तु पुन। पुन कथम्भूता सती? वाङ्मुखरा वचनवाचाला। कथम्? अरमत्यर्थम्। पुन. कथम्भूता? गाहितमुखरागा गाहितो व्यालोडितो मुखे रागस्ताम्बूलादिजनितधर्मो यया सा तथोक्ता ॥३२॥

मङ्गलयुत्त्या मृदुगलयुत्त्या कोऽप्यनृशंसं परमनृशंसम् ।
लोक उदारः सहसुतदारस्त्वामभियातिस्थिरमभियाति ॥३३॥

मङ्गलेति–कोऽपि लोकः त्वा भवन्तमभियाति सम्मुखमागच्छति। कथम्भूतो लोक? मृदुगलः कल्कण्ठ.। कया? उत्त्या निर्वचनेन। कस्या? मङ्गल्युत्त्या कल्याणघटनाया। पुन. कथम्भूत? उदार। पुनः सहसुतदार.। कथम्भूत त्वाम्? अतिस्थिर नि क्षोभप्रकृतिं पुन. अनृशस दयालु पुन. परमनृशस परमा उत्कृष्टा नृभ्यो नरेभ्य शसा स्तुतिर्यस्य तमथवा परमाश्च ते नरश्च परमनर परमनृषु शसा यस्य यस्माद्वा स तथोक्तस्तम्? कया? अभिया नि शङ्कतया ॥ ३३ ॥

इत्यर्जुनोक्तां मनसा प्रसन्नः स्वसुः स्थिराभिः प्रतिमान्यवाग्भिः ।
राजा पुरं प्रापदरातिचारविद्रावणो धर्मकृतोद्भवस्ताम् ॥३४॥

इतीति–राजा रावण. ता लोकप्रसिद्धा लङ्का पुर पुरीं प्रापत्। कथम्भूताम्? इति पूर्वोक्तप्रकारेण? उक्ता स्तवनरूपेण निरूपिताम्। काभि.? स्थिराभि विचारसहाभि प्रमाणक्षोदाक्षुण्णाभि. स्वसु' भगिन्या.

---

हे भूपाल! यह कोई मदोन्मत्त सुन्दरी गीतको गाती है और उसकी लयके अनुसार ही चलती (नाचती) है। यह कामियोंसे घिरी है, मदिरा पानके कारण सदाचार-विमुख है, इसके वाल विखरे हुए हैं और रतिके कारण पागल हो रही है ॥३१॥

हे पृथ्वीपति! मुखको ताम्बूलकी लालीसे रंगे, अत्यन्त वाचाल यह प्यारी स्त्री नाना प्रकारके अनेक धातुओंसे निर्मित (अत्यन्त वीर्यवान्) चारों प्रकारके बाजोंको बजाने-वालोंको छोड़कर आपके सामने चली आ रही है ॥३२॥

कोमल कण्ठध्वनिसे कल्याण कामना करते हुए ये कोई उदार लोग निडर होकर अपनी स्त्री तथा बच्चोंके साथ मनुष्येतरो (राक्षसों)के स्तुत्य तथा अत्यन्त रुद्र (युधि-ष्ठिरके पक्षमें दयालु तथा श्रेष्ठ मनुष्यों-द्वारा प्रशंसित) तथा अत्यन्त दृढ़ आपकी तरफ आ रहे हैं ॥३३॥

वहिनकी विचार युक्त तथा माननीय वातोंके साथ अत्यन्त सरल मनके कारण प्रसन्न,

---

१ अनुपश्चाद्गेयं यस्य (तम्)–द०। २ "भोभगोअघोअपूर्वस्य योऽशि" इति रोर्यादेशे 'व्योर्लघुप्रयत्नतर शाकटायनस्य' इति लघूच्चारणयकारादेशे मृदुगलयुत्त्येति।

प्रतिमान्यवाग्भिः प्रशस्यवचनैः, कथम्भूतो राजा ? मनसा चेतसा प्रसन्नः स्वच्छः, कथम्भूतेन मनसा ? अर्जुना आ सामस्त्येन ऋजु अर्जु तेन अर्जुना अकुटिलेन समञ्जसेनेत्यर्थः। कथम्भूतः ? अरातिचारविच्छ त्रुचेष्टोपायज्ञाता, पुनः कथम्भूतः ? धर्मकृतोद्भवः पुण्यविहितविभवः।[१]

भारतीयः—राजा धर्मकृतोद्भवः धर्मेण पाण्डुना कृत उद्भव उत्पत्तिर्यस्य सः युधिष्ठिरः तां पुरं पुरीं द्वारका प्रापत्। कथम्भूतां पुरम् ? इति उक्तप्रकारेण अर्जुनोक्तां धनञ्जयोपदिष्टाम्, काभिः ? प्रतिमान्यवाग्भिः शिष्टेष्टाभिर्भारतीभिः, कथम्भूतो राजा ? स्वसुः शोभना असवः प्राणा यस्य स तथोक्तः, अजय्य इत्यर्थः। पुनर्मनसा प्रसन्नः पुनररातिचारविद्रावणः रिपुचेष्टानाशकः[२] ॥३४॥

**मनोभिरामप्रमदां विशन्तीं क्षणं निशायोपवने सुदृष्टिम्।**
**उत्कण्ठभावं गमितोनतात्मा प्रचक्रमेऽभ्यन्तरमेव गन्तुम् ॥३५॥**

मन इति—असौ रावणः अभ्यन्तरं मध्यप्रदेशं गन्तुं प्रचक्रमे प्रारब्धवान्। कथम्भूतः ? अनतात्माऽजितेन्द्रियः पुनरुत्कण्ठभावमौत्सुक्यं गमितः प्रापितः, किं कृत्वा ? उपवने सुदृष्टिं कर्णान्तविश्रान्तलोचना रामप्रमदा सीता निशाय सन्निवेश्य, किं कुर्वतीम् ? मनोभिश्चेतोभिः लक्ष्यीकृत्य क्षणं मुहूर्तं विशन्तीं प्रवेशं कुर्वन्तीम्।

भारतीयः—असौ युधिष्ठिरोऽभ्यन्तरमेव गन्तुं प्रचक्रमे। कथम्भूतः ? नतात्मा जितेन्द्रियः पुनरुत्कण्ठभावमूर्ध्वग्रीवत्वं गमितः, किं कृत्वा ? उपवने क्षणमभिरामप्रमदामभिरामस्यार्जुनस्य प्रमदा पत्नीं द्रौपदीं निशायोपवेश्य, किं कुर्वन्तीम् ? मनोविशन्तीं अथवा हे मनोभिराम श्रेणिक प्रचक्रमेऽभ्यन्तरमेव गन्तुं राजा। किं कृत्वा ? निशाय, काम् ? सुदृष्टिम्, क्व ? उपवने, कथम् ? क्षणम्। किं कुर्वन्तीम् ? विशन्तीम्, किम् ? उपवनम् अर्थवशाल्लब्धमिति सम्बन्धः। कथम्भूतम् ? प्रमदा प्रकृष्टो मदः इदमिदं पश्यामीत्याकाङ्क्षा लक्षणो यस्याः सा तां तथोक्तामन्यत्तुल्यम्[३] ॥३५॥

---

शत्रुओंकी प्रगतिका विनाशक तथा धर्मकी अवज्ञाकारक राजा रावण उक्त प्रकारसे वर्णित प्रसिद्ध लंकापुरीमें पहुँच गया था।

अन्वय—स्थिराभिः प्रतिमान्यवाग्भिः अर्जुनोक्तां तां पुरं मनसा प्रसन्नः, स्वसुः अरातिचारविद्रावणः धर्मकृतोद्भवः राजा प्रापत्।

अत्यन्त निर्मल चित्त, पुण्यात्मा, शत्रुओंके गुप्तचरोंसे परे तथा धर्मकी मर्यादाके संस्थापक राजा युधिष्ठिरने उक्त प्रकारसे स्पष्ट तथा शिष्ट जनोचित वचनों-द्वारा वर्णित उस विख्यात द्वारकापुरीमें प्रवेश किया था ॥३४॥

अन्वय—मनोभिः क्षणं विशन्तीं सुदृष्टिम् रामप्रमदां उपवने निशाय उत्कण्ठभावं गमितः, अनतात्मा, अभ्यन्तरमेव गन्तुं प्रचक्रमे।

मनसे ही अपने भले समयको सोचती, सम्यक् दर्शनधारिणी, रामकी पत्नीको उपवनमें बैठाकर अत्यन्त उत्कण्ठित, आत्म-नियन्त्रण हीन रावणने लंकाके भीतर चलना प्रारम्भ किया था।

अन्वय—विशन्तीं सुदृष्टिम् मनोभिरामप्रमदां क्षणं उपवने निशाय, उत्कण्ठभावं गमितः नतात्मा ... ।

साथ साथ पुरमें प्रवेश करती मनमोहिनी सुन्दर नेत्रवती अर्जुनकी पत्नीको क्षणभरके लिए उपवनमें छोड़कर (शिरको ऊपर उठाये) गर्दनको सीधा किये चलते आत्मजेता युधिष्ठिर नगरके भीतर चले जा रहे थे ॥३५॥

---

१ श्लेषः—द०, ना०। उपजातिवृत्तम्। २ पुण्यविनाशायोत्पन्न—द०, ना०। एतन्मतेऽधर्मकृतोद्भवः इतिच्छेदः। ३ रावणपक्षे सन्धिश्लिष्टः। ४ उपेन्द्रवज्रावृत्तम्। लक्षणञ्च—"उपेन्द्रवज्रा—जतजास्ततो गौ।" (वृ० र० ३।३१)।

विदेहसङ्कल्पजसम्भवायाः प्रीतेस्तदालोकसमुत्सुकाभिः ।
द्रागित्यभीये पुरसुन्दरीभिः सरोदसीतापहृतौ कृतार्थः ॥३६॥

विदेहेति–अभीय अभिगत', कोऽसौ कर्मतापन्न. ? रावण. । काभि. कर्त्राभि ? पुरसुन्दरीभिः ? कथम् ? द्राक् शीघ्रम्, इतिशब्दो वक्ष्यमाणार्थापेक्ष्य, कथम्भूत ? कृतार्थ. कृतकृत्यमात्मान मन्यमान, क ? सरोदसीतापहृतौ रोदेन रोदनेन सह वर्तमाना सरोदा सरोदा चासो सीता सरोदसीता तस्य अपहृतावपहरणे, कथम्भूताभि पुरसुन्दरीभि ? तदालोकसमुत्सुकाभि सीतावलोकनसमुत्कण्ठिताभि' । कस्या सकाशात् ? प्रीते स्नेहात्, कथम्भूताया ? विदेहसङ्कल्पजसम्भवाया विदेहस्य सङ्कल्पाज्जाता विदेहसङ्कल्पजा तस्या सकाशात्सम्भवो यस्यास्तस्या ।

भारतीय–असौ युधिष्ठिर पुरसुन्दरीभिरभीये अभियातः । कथम्भूत. ? कृतार्थ. निष्ठितार्थ., क ? रोदसीतापहृतौ रोदस्यो द्यावाभूम्योस्तापहरणे, कथम्भूताभि पुरसुन्दरीभि. ? तदालोकसमुत्सुकाभिः युधिष्ठिरावलोकनोत्कण्ठिताभि., कस्या ? प्रीते । कथम्भूताया प्रीते ? विदेहसङ्कल्पजसम्भवाया. विगतो देहो यस्य स विदेहोऽनङ्ग सङ्कल्पान्मानसिकपरिणामाज्जात सङ्कल्पज विदेहश्चासौ सङ्कल्पजश्च विदेहसङ्कल्पजस्तस्मात्सम्भव उत्पत्तिर्यस्यास्तस्या, प्रीते' सकाशात्, उक्तञ्च–"जाने सङ्कल्पतो मूलं काम कामस्य जायते । तन्नाशादपि तन्नाश कथ्यते मुनिपुङ्गवैरिति" ॥ ३६ ॥

श्लथं द्विरेफाकुलपुष्पभारं रुद्ध्वा व्रजन्ती चिहुरं करेण ।
पुङ्खानुपुङ्खं मदनेन मुक्तानुत्पाटयन्तीव शरान्पराभूत् ॥३७॥

श्लथमिति–पराऽन्या काचित्कामिनी मदनेन कन्दर्पेण मुक्तान् शरान् उत्पाटयन्तीव अभूदजनिष्ट । कथ मुक्तान् ? पुङ्खानुपुङ्ख पुङ्खस्यानु पश्चात् पुङ्ख यस्मिन्मोचनकर्मणि तत्पुङ्खानुपुङ्ख पिच्छानुपिच्छमित्यर्थ । किं कुर्वन्ती ? श्लथ शिथिल चिहुर केशपाश करेण रुद्ध्वा निरुध्य व्रजन्ती गच्छन्ती । कथम्भूतं चिकुरम् ? द्विरेफाकुलपुष्पभार द्विरेफैर्भ्रमरैराकुलो व्याप्तः पुष्पभारो यत्र तम् ॥ ३७ ॥

अन्यात्मदर्शे मुखमीक्षमाणा तथैव हस्तेन तमुद्वहन्ती ।
किं मे मुखं रम्यमुतेन्दुरेवं तं स्पर्धया दर्शयितुं गतेव ॥३८॥

अन्येति–अन्या काचित्कामिनी गता । किं कर्त्तुमिव ? दर्शयितुमिव । किमेवम् ? किं स्यान्मुख रम्य निष्कलङ्कतया कान्तिमत् ? कस्या ? मे मम, उताहो इन्दु किं रम्य स्यादिति, क दर्शयितुमिव गता ?

---

राजा विदेहके संकल्पमात्रसे उत्पन्न सीताकी प्रीतिके कारण उसे देखनेके लिए लालायित लंकापुरीकी सुन्दरियोंके द्वारा रोती-तड़पती सीताका अपहरण करनेमें ही संतुष्ट रावण तुरन्त घेर लिया गया था ।

शरीरहीन तथापि कल्पना मात्रसे उद्‌बुद्ध कामकी प्रीतिके कारण राजा युधिष्ठिरको देखनेके लिए उत्सुक द्वारकाकी कामिनियोंके द्वारा इस लोक परलोकके कष्ट दूर करनेमें ही अपनी सफलताको माननेवाला वह धर्मराज तुरन्त घेर लिया गया था ॥३६॥

ढीले पड़े केश-पाश तथा उसमें गुँथे फूलों और उनपर गूँजते भौंरोंको एक हाथसे सम्हालते सम्हालते साथ चलती कोई स्त्री ऐसी लगती थी मानो कामदेवके द्वारा पुंखानुपुंख रूपसे छोड़े गये बाणों ( फूलों )को उखाड़ती जा रही है ॥३७॥

दूसरी स्त्री दर्पणमें मुख देखते-देखते ही उसे उसीप्रकारसे हाथमें लिये चल दी थी ।

---

१ श्लेप–ब०, ना० ।

त राजानम्, कया हेतुभूतया ? स्पर्धया, किं कुर्वन्ती सती ? उद्वहन्ती । कम् ? तमात्मदर्शम्, केन कृत्वा ? हस्तेन । कथम् ? तयैव तेनैव गमनप्रकारेण, किं कुर्वाणोद्वहन्ती ? ईक्षमाणा पश्यन्ती, किम् ? तन्मुखम्, क्व ? आदर्शे मुकुरुन्दे[1] ॥ ३८ ॥

**महानिवेशं कुचभारमेका धृत्वा कराभ्यां त्वरितं जिहाना ।**
**उपर्युपर्युच्छ्वसिता नताङ्गी शून्यं तरन्तीव घटद्वयेन ॥३९॥**

महेति–नताङ्गी काचिदेका कामिनी उच्छ्वसिता । कथम् ? उपर्युपरि । कि कुर्वन्तीवोत्प्रेक्षिता ? तरन्तीव, केन कृत्वा ? घटद्वयेन, कथम् ? शून्यम् एवमेव, किं कुर्वाणा सती ? त्वरित द्रुत जिहाना गच्छन्ती सती, किं कृत्वा ? महानिवेश घनपीनोन्नतस्थितिमन्त कुचभार कराभ्या धृत्वा ॥३९॥

**विधूय लीलाम्बुजमुत्पलाशं निघ्नन्नलिं कर्णगमुत्पलाशम् ।**
**भ्रेजेऽङ्गनौघः सुरयो निजेन हावेन गच्छन्सुरयोनिजेन ॥४०॥**

विधूयेति–अङ्गनौघ· नितम्बिनीसमूहः सुरयोनिजेन सुराणा योनि· सुरयोनिः सुरयोनेर्जातः सुरयोनिजस्तेनामरनरसम्भवेन निजेनात्मीयेन हावेन मुखविकारेण हेतुना भ्रेजे रेजे । किं कुर्वन् ? गच्छन्, कथम्भूत· ? सुरयो अतिवेगः, किं कुर्वन् ? उत्पलाशमुद्गतपत्र व्याकोशमित्यर्थः । लीलाम्बुज क्रीडाकमल विधूय कम्पयित्वा कर्णग श्रवणस्थितम् उत्पलाशमुत्पले आशा वाञ्छा यस्य तम् अलिं भ्रमर निघ्नन्निवारयन्निति ॥४०॥

**दष्टाधरं तिष्ठतु सम्प्रहारः कस्याश्चिदास्तां कटकोपवेशः ।**
**सर्वान्व्रजन्त्यास्त्वरितं भुजस्य विक्षेपमात्रं विवशीचकार ॥४१॥**

दष्टेति–सम्प्रहार· परस्परताडनम्, "अत्र सम्भोगो व्यज्यते, तल्लक्षणाऽर्थाभिधायकत्वात् । यथा कुन्ता· प्रविशन्तीति प्रयोगे कुन्तधराः पुरुषा गृह्यन्ते । कथ यथा भवति ? दष्टाधरम्, तथाऽस्ताम्, कोऽसौ ? कटकोपवेशोऽव्यक्तकङ्कणरवः । यतो विवशीचकार विह्वलीचक्रे, किं तत् कर्तृ ? कस्याश्चित्कामिन्याः भुजस्य हस्तस्य विक्षेपमात्रमान्दोलनमात्रम् ? कान्वशीचकार ? सर्वान्समस्ताङ्गनान्, किं कुर्वन्त्या ? शीघ्र व्रजन्त्याः गच्छन्त्या· ॥४१॥

**अंसान्तविश्रान्तकुचान्तचक्रमाश्लिष्य कान्तेन तमर्धपीतम् ।**
**बिम्बोष्ठमाक्षिप्य निमीलिताक्षं सीत्कारपूर्वं कुलटाभ्यधावत् ॥४२॥**

असान्तेति–अभ्यधावदभिजगाम । काऽसौ ? कुलटा स्वैरिणी । किं कृत्वा ? आक्षिप्याकृष्य । कम् ? त बिम्बोष्ठम्, कथ यथा भवति ? सीत्कारपूर्वम्, कथम्भूत तुष्टम् (बिम्बोष्ठम्) ? अर्द्धपीतम्,

---

मानो किसी राजाको यही दिखाने गयी थी कि मेरा मुख सुन्दर है अथवा यह चन्द्रमा सुन्दर है ॥३८॥

कुच तथा यौवन भारसे झुकी, उत्तरोत्तर अधिक वेगसे साँस लेती कोई एक स्त्री अपने बड़े-बड़े कुचोंके भारको दोनों हाथोंसे सम्हाले तेजीसे आगे बढ़ती जाती ऐसी लगती थी मानो दो कलशोंके सहारे वह आकाशमें तैर रही है ॥३९॥

खिली पंखुड़ियोंसे सुन्दर लीला-कमलको हिलाकर कान पर लगे कमलके लोभी भौंरेको मारती हुई वेगसे बढ़ती कामिनियोंके झुण्डने अप्सराओंमें सुलभ अपने हावभावके द्वारा अद्भुत छटा दिखायी थी ॥४०॥

परस्पर ओष्ठ काटकर सम्प्रहारकी कथा ही क्या है ? किसीके कंकणकी ध्वनि भी बहुत बड़ा उद्दीपक है । इस समय तो किसी जाती हुई कामिनीका वेगसे हाथका हिला देना मात्र सबको विवश कर देता था ॥४१॥

स्तनके चूचुकको कंधेके ऊपर रखते हुए गाढ़ आलिंगन करके प्रेमीके द्वारा आधा

---

१ इन्द्रवज्रावृत्तम् । २ टीकेयमन्यदमुद्रयप्रतिमवलम्ब्य दत्ता ।

केन ? कान्तेन वल्लभेन, कथं यथा भवति ? निमीलिताक्षं सङ्कुचितलोचनम् , किं कृत्वा ? पूर्वमाश्लिष्यालिङ्ग्य, कथं यथा भवति ? असान्तविश्रान्तकुचान्तचक्रं स्कन्धमध्योपविष्टस्तनचूचुकमिति शेषः ॥४२॥

**आकृष्य हस्तं विधृतं वरित्रा काचिन्नवोढा सहसाऽभ्ययासीत् ।**
**प्रियानुबद्धं पटमालिखन्ती हित्वागमत्प्रोषितभर्तृकान्या ॥४३॥**

आकृष्येति–काचिन्नवोढा नवपरिणीता स्त्री सहसा शीघ्रमभ्ययासीदभिगता । किं कृत्वा ? वरित्रा वरेण विधृतं गृहीतं हस्तं करमाकृष्याक्षिप्य । तथा अन्या काचित्प्रोषितभर्तृका अगमत् । किं कुर्वन्ती सती, पटमालिखन्ती सती, कथम्भूतं पटम् ? प्रियानुबद्धम् , किं कृत्वा ? हित्वा मुक्त्वा, कम् ? तं प्रियानुबद्धं पटमिति शेषः[1] ॥४३॥

**उन्मील्य रूपं सह सामि ताभिस्तत्तूलिकाभिः सहसा मिताभिः ।**
**वर्णोत्करैश्चित्रकरः स्मयातिक्रान्तोऽखिलश्चित्रकरः स्म याति ॥४४॥**

उन्मील्येति–वर्णोत्करैः हिङ्गुलहरितालादिरञ्जनद्रव्यसमूहैश्चित्रकरः आश्चर्यकर्ता अखिलः समस्तश्चित्रकरश्चित्रशिल्पी सहसा द्रुतमभियाति स्माभिजगाम । किं कृत्वा ? साम्यर्धं रूपमुन्मील्य विरचय्य, कथमभियाति स्म ? मिताभिः स्तोकाभिस्ताभिर्लोकप्रसिद्धाभिस्तत्तूलिकाभिश्चित्रलेखनीभिः सह सार्द्धम्, कथम्भूतश्चित्रकरः ? स्मयातिक्रान्तः गर्वपर्वताधिरूढः । अत्र कौतुकरसरसिकतया विमनस्कत्वमभिहितम् ॥ ४४ ॥

**वक्रोक्तिमुत्प्रेक्षणमङ्गबन्धं श्लेषं स्मरन्कृत्यबलातिमूढः ।**
**द्विसन्धिचिन्ताकुलितो विषण्णः कविर्वियोगीव जनोऽभ्यसर्पत् ॥४५॥**

वक्रेति–कविर्जनः विषण्णः विमनस्कः सन्नभ्यसर्पदभिययौ । कथम्भूतः ? द्विसन्धिचिन्ताकुलितो द्वयोः कथयोर्द्वयोः पदयोर्वा सन्धिर्द्विसन्धिस्तत्र या चिन्ता तस्या तया वा आकुलितः, पुनः कृत्यबलातिमूढः कार्यसामर्थ्यानभिज्ञः, किं कुर्वन् ? स्मरञ्चेतोविषयीकुर्वन्, किं किम् ? वक्रोक्तिमलङ्कारविशेषम्, तथोत्प्रेक्षणमुत्प्रेक्षालङ्कारम्, तथाऽङ्गबन्धं षोडशदलपद्मादिसम्बन्धं तथा श्लेषं श्लेषालङ्कारम् । उपमार्थः प्रकल्प्यते । क इव ? वियोगीव यथा विरहीजनोऽभिसर्पति । कथम्भूतः ? विषण्णः, पुनः कथम्भूतः ? द्विसन्धिचिन्ताकुलितः द्वयोर्भार्ययोः सन्धिः परस्परमेलनं तत्र चिन्तयाकुलितः, पुनरबलातिमूढोऽबले भार्ये अतिमूढे यस्य सः, पुनः कृती कृतमस्यास्तीति कृती प्रतिज्ञावान्, पुनः किं कुर्वन् ? वक्रोक्तिं कुटिलवाचं तथोत्प्रेक्षणं रमणीयकटाक्ष

---

पिये गये ओठको सी-सी करते हुए आँखें विना खोले ही खींचकर कुलटा राजमार्ग पर चल पड़ी थी ॥४२॥

कोई नव-विवाहिता युवती वरके द्वारा पकड़े गये हाथको एकाएक खींचकर राजाको देखने चल पड़ी थी । पतिके विदेश जानेसे विरहिणी दूसरी स्त्री बैठकर पति-सम्बन्धी चित्र बना रही थी वह भी उसे छोड़कर चल पड़ी थी ॥४३॥

परिपूर्ण तथा रंगोंके सम्मेलन-द्वारा अद्भुत चित्रोंका निर्माता अतएव अहंकारके पर्वत पर बैठा चित्रकार भी कुछ गिनी चुनी कूचियोंसे आधे रूपको खींचकर सहसा ही राजाकी शोभायात्रामें चल पड़ा था ॥४४॥

वक्रोक्ति उत्प्रेक्षादि अर्थालंकार, कमल मुरजादि बन्धों, श्लेषोंको सोचता हुआ, द्व्यर्थक बनानेके लिए चिन्तित, रचनाके लिए आवश्यक बलसे अनभिज्ञ अतएव उदासीन कवि भी वियोगीके समान लोगोंके पीछे हो लिया था । [ वियोगी भी व्यंगोंमें बोलता है, कटाक्ष फेंकता है, ऋजु विपरीत आदि शरीर बन्ध करता है तथा आलिंगनको याद करता है

---

१ उपजातिवृत्तम् । –

त राजानम्, कया हेतुभूतया ? स्पर्धया, किं कुर्वन्ती सती ? उद्वहन्ती । कम् ? तमात्मदर्शम्, केन कृत्वा ? हस्तेन । कथम् ? तयैव तेनैव गमनप्रकारेण, किं कुर्वाणोद्वहन्ती ? ईक्षमाणा पश्यन्ती, किम् ? तन्मुखम्, क ? आदर्शे मुकुरुन्दे' ॥ ३८ ॥

**महानिवेशं कुचभारमेका धृत्वा कराभ्यां त्वरितं जिहाना ।**
**उपर्युपर्युच्छ्वसिता नताङ्गी शून्यं तरन्तीव घटद्वयेन ॥३९॥**

महेति–नताङ्गी काचिदेका कामिनी उच्छ्वसिता । कथम् ? उपर्युपरि । किं कुर्वन्तीवोत्प्रेक्षिता ? तरन्तीव, केन कृत्वा ? घटद्वयेन, कथम् ? शून्यम् एवमेव, किं कुर्वाणा सती ? त्वरितं द्रुतं जिहाना गच्छन्ती सती, किं कृत्वा ? महानिवेशं घनपीनोन्नतस्थितिमन्तं कुचभारं कराभ्यां धृत्वा ॥३९॥

**विधूय लीलाम्बुजमुत्पलाशं निघ्नन्नलिं कर्णगमुत्पलाशम् ।**
**भ्रेजेऽङ्गनौघः सुरयो निजेन हावेन गच्छन्सुरयोनिजेन ॥४०॥**

विधूयेति–अङ्गनौघः नितम्बिनीसमूहः सुरयोनिजेन सुराणां योनिः सुरयोनिः सुरयोनेर्जातः सुरयोनिजस्तेनामरनरसम्भवेन निजेनात्मीयेन हावेन मुखविकारेण हेतुना भ्रेजे रेजे । किं कुर्वन् ? गच्छन्, कथम्भूतः ? सुरयो अतिवेगः, किं कुर्वन् ? उत्पलाशमुद्गतपत्रं व्याकोशमित्यर्थः । लीलाम्बुजं क्रीडाकमलं विधूय कम्पयित्वा कर्णगं श्रवणस्थितम् उत्पलाशमुत्पले आशा वाञ्छा यस्य तम् अलिं भ्रमरं निघ्नन्निवारयन्निति ॥४०॥

**दष्टाधरं तिष्ठतु सम्प्रहारः कस्याश्चिदास्तां कटकोपवेशः ।**
**सर्वान्व्रजन्त्यास्त्वरितं भुजस्य विक्षेपमात्रं विवशीचकार ॥४१॥**

दष्टेति–सम्प्रहारः परस्परताडनम्, "अत्र सम्भोगो व्यज्यते, तल्लक्षणाऽर्थाभिधायकत्वात् । यथा कुन्ताः प्रविशन्तीति प्रयोगे कुन्तधराः पुरुषा गृह्यन्ते । कथं यथा भवति ? दष्टाधरम्, तथाऽस्ताम्, कोऽसौ ? कटकोपवेशोऽव्यक्तकङ्कणरवः । यतो विवशीचकार विह्वलीचक्रे, किं तत् कर्तृ ? कस्याश्चित्कामिन्याः भुजस्य हस्तस्य विक्षेपमात्रमान्दोलनमात्रम् ? कान्वशीचकार ? सर्वान्समस्ताङ्गनान्, किं कुर्वन्त्या ? शीघ्रं व्रजन्त्या गच्छन्त्या ॥४१॥

**अंसान्तविश्रान्तकुचान्तचक्रमाश्लिष्य कान्तेन तमर्धपीतम् ।**
**बिम्बोष्ठमाक्षिप्य निमीलिताक्षं सीत्कारपूर्वं कुलटाभ्यधावत् ॥४२॥**

असान्तेति–अभ्यधावदभिजगाम । काऽसौ ? कुलटा स्वैरिणी । किं कृत्वा ? आक्षिप्याकृष्य । कम् ? तं बिम्बोष्ठम्, कथं यथा भवति ? सीत्कारपूर्वम्, कथम्भूतं तुष्ठम् (बिम्बोष्ठम्) ? अर्द्धपीतम्,

---

मानो किसी राजाको यही दिखाने गयी थी कि मेरा मुख सुन्दर है अथवा यह चन्द्रमा सुन्दर है ॥३८॥

कुच तथा भारसे झुकी, उत्तरोत्तर अधिक वेगसे साँस लेती कोई एक स्त्री अपने बड़े-बड़े कुचोंके को दोनों हाथोंसे सम्हाले तेजीसे आगे बढ़ती जाती ऐसी लगती थी मानो दो कलशोंके सहारे वह आकाशमें तैर रही है ॥३९॥

खिली पंखुड़ियोंसे सुन्दर लीला-कमलको हिलाकर पर लगे कमलके लोभी भौंरेको मारती हुई वेगसे बढ़ती कामिनियोंके झुण्डने अप्सराओंमें सुलभ अपने हावभावके द्वारा अद्भुत छटा दिखायी थी ॥४०॥

परस्पर ओष्ठ कथा ही है ! किसीके कंकणकी ध्वनि भी बहुत बड़ा उद्दीपक है । तो वेगसे हाथका हिला देना मात्र सबको विवश कर देता था १॥

स्तनके चूचुकको

---

१ इन्द्रवज्रावृत्तम् । २

केन ? कान्तेन वल्लभेन, कथ यथा भवति ? निमीलिताक्ष सङ्कुचितलोचनम् , कि कृत्वा ? पूर्वमाश्लिष्यालिङ्ग्य, कथ यथा भवति ? असान्तविश्रान्तकुचान्तचक्र स्कन्धमध्योपविष्टस्तनचूचुकमिति शेष ॥४२॥

**आकृष्य हस्त विधृतं वरित्रा काचिन्नवोढा सहसाऽभ्ययासीत् ।**
**प्रियानुवद्धं पटमालिखन्ती हित्वागमत्प्रोपितभर्तृकान्या ॥४३॥**

आकृष्येति–काचिन्नवोढा नवपरिणीता स्त्री सहसा शीघ्रमभ्ययासीदभिगता । कि कृत्वा ? वरित्रा वरेण विधृत गृहीत हस्त करमाकृष्याक्षिप्य । तथा अन्या काचित्प्रोपितभर्तृका अगमत् । कि कुर्वन्ती सती, पटमालिखन्ती सती, कथम्भूत पटम् ? प्रियानुबद्धम् , कि कृत्वा ? हित्वा मुक्त्वा, कम् ? त प्रियानुबद्ध पटमिति शेष [1] ॥४३॥

**उन्मील्य रूपं सह सामि ताभिस्तत्तूलिकाभिः सहसा मिताभिः ।**
**वर्णोत्करैश्चित्रकरः स्मयातिक्रान्तोऽखिलश्चित्रकरः स्म याति ॥४४॥**

उन्मील्येति–वर्णोत्करै हिङ्गुलहरितालादिरञ्जनद्रव्यसमूहैश्चित्रकर आश्चर्यकर्त्ता अखिल समस्तश्चित्रकरश्चित्रशिल्पी सहसा द्रुतमभियाति स्माभिजगाम । किं कृत्वा ? साम्यर्धं रूपमुन्मील्य विरचय्य, कथमभियाति स्म ? मिताभि स्तोकाभिस्ताभिर्लोकप्रसिद्धाभिस्तत्तूलिकाभिश्चित्रलेखनीभि. सह सार्द्धम्, कथम्भूतश्चित्रकर· ? स्मयातिक्रान्त गर्वपर्वताधिरूढ. । अत्र कौतुकरसरसिकतया विमनस्कत्वमभिहितम् ॥ ४४ ॥

**वक्रोक्तिमुत्प्रेक्षणमङ्गवन्धं श्लेपं स्मरन्कृत्यवलातिमूढः ।**
**द्विसन्धिचिन्ताकुलितो विपण्णः कविर्वियोगीव जनोऽभ्यसर्पत् ॥४५॥**

वक्रेति–कविर्जन विषण्ण विमनस्क. सन्नभ्यसर्पदभिययौ । कथम्भूत. ? द्विसन्धिचिन्ताकुलितो द्वयोः कथयोर्द्वयो. पदयोर्वा सन्धिर्द्विसन्धिस्तत्र या चिन्ता तस्या तया वा आकुलित , पुन· कृत्यबलातिमूढ. कार्यसामर्थ्यानभिज्ञ , किं कुर्वन् ? स्मरञ्चेतोविपयीकुर्वन् , कि किम् ? वक्रोक्तिमलङ्कारविशेषम् , तथोत्प्रेक्षणमुत्प्रेक्षालङ्कारम्, तथाऽङ्गबन्ध षोडशदलपद्मादिसम्बन्ध तथा श्लेष श्लेषालङ्कारम् । उपमार्थं प्रकल्प्यते । क इव ? वियोगीव यथा विरहीजनोऽभिसर्पति । कथम्भूत. ? विषण्ण., पुन. कथम्भूतः ? द्विसन्धिचिन्ताकुलित द्वयोर्भार्ययो. सन्धि परस्परमेलनं तत्र चिन्तयाकुलित., पुनरबलातिमूढोऽबले भार्ये अतिमूढे यस्य स., पुन कृती कृतमस्यास्तीति कृती प्रतिज्ञावान्, पुन किं कुर्वन् ? वक्रोक्ति कुटिलवाच तथोत्प्रेक्षण रमणीयकटाक्ष

---

पिये गये ओठको सी-सी करते हुए आँखें विना खोले ही खींचकर कुलटा राजमार्ग पर चल पड़ी थी ॥४२॥

कोई नव-विवाहिता युवती वरके द्वारा पकड़े गये हाथको एकाएक खींचकर राजाको देखने चल पड़ी थी । पतिके विदेश जानेसे विरहिणी दूसरी स्त्री बैठकर पति-सम्बन्धी चित्र बना रही थी वह भी उसे छोड़कर चल पड़ी थी ॥४३॥

परिपूर्ण तथा रंगोंके सम्मेलन-द्वारा अद्भुत चित्रोंका निर्माता अतएव अहंकारके पर्वत पर बैठा चित्रकार भी कुछ गिनी-चुनी कूचियोंसे आधे रूपको खींचकर सहसा ही राजाकी शोभायात्रामें चल पड़ा था ॥४४॥

वक्रोक्ति उत्प्रेक्षादि अर्थालंकार, कमल मुरजादि बन्धों, श्लेषोंको सोचता हुआ, द्व्यर्थक बनानेके लिए चिन्तित, रचनाके लिए आवश्यक बलसे अनभिज्ञ अतएव उदासीन कवि भी वियोगीके समान लोगोंके पीछे हो लिया था । [ वियोगी भी व्यंगोंमें बोलता है, कटाक्ष फेंकता है, ऋजु विपरीत आदि शरीर बन्ध करता है तथा आलिंगनको याद करता है

---

१, उपजातिवृत्तम् ।

तथाऽङ्गबन्ध चतुःषष्टिभेद शरीरबन्धमृजुविपरीतत्र्यत्तदण्डकार्द्धदण्डकप्रभृतिकरणाख्य तथा श्लेषमालिङ्गन स्मरन्' ॥४५॥

**शालस्य हर्म्यस्य च गोपुरस्य पुरस्य शृङ्गेष्वतिरञ्जनेन ।**
**जनेन द्रष्टुं निचितेन पूर्वापूर्वाधिरूढासुमतां छलेन ॥४६॥**

शालस्येति–भातीति क्रियाया अध्याहारोऽत्र गम्यते । भाति, काऽसौ ? पू: नगरी, केन ? जनेन लोकेन, कथम्भूतेन ? अतिरञ्जनेनातिशयेनानुरागवता, पुन, निचितेन सम्भृतेन, कस्ये ? द्रष्टुं राजान द्रष्टुम्, क्व ? निचितेन ? शृङ्गेपु शिखरेपु, कस्य कस्य च ? शालस्य प्राकारस्य तथा हर्म्यस्य मन्दिरस्य तथा गोपुरस्य राजद्वारस्य । अत्र जात्यपेक्षयैकवचन यतो हर्म्याणि गोपुराणि बहूनि सन्ति । कस्य सम्बन्धित्वेन ? पुरस्येति सम्बन्ध. । इदानीमुत्प्रेक्षा–वेत्यक्षरमुत्प्रेक्षाया गम्यते । तेनायमर्थ.–केवोत्प्रेक्षिता ? अपूर्वा पूरिव, कथम्भूता ? अधिरूढा, केन ? छलेन व्याजेन, केपाम् ? असुमता प्राणिनामिति ॥४६॥

**दिदृक्षमाणस्य जनस्य तस्मिन्कालेऽखिलानि क्षणमिन्द्रियाणि ।**
**तं नेत्रमात्रस्थितिमेव जग्मुः स्वस्थाननिर्वेगंमिवागतानि ॥४७॥**

दिदृक्षमाणस्येति–तस्मिन्काले राज्ञो नगरप्रवेशसमये क्षण मुहूर्त्तमेक त राजान दिदृक्षमाणस्य द्रष्टुमिच्छोर्जनस्य अखिलानीन्द्रियाणि श्रोत्रादीनि नेत्रमात्रस्थितिमेव जग्मुः, कानीवोत्प्रेक्षितानि ? स्वस्थाननिर्वेग[1]मात्मीयवसतेर्वैराग्यमिवागतानि ॥४७॥

**स धृतव्यजनेन जनेन पुरं परमङ्गलमङ्गलघोषकृता ।**
**नगरीमभिरञ्जयता जयतादिति वाक्यविभागमितो गमितः ॥४८॥**

स धृतेति–स राजा पुरी नगरीमित प्राप्त । कथम्भूत. सन् ? वाक्यविभाग वचनविपय गमितो नीतः । कथमिति ? जयतादिति नगरनागरिकलोक रक्षन् सन् सर्वोत्कर्पण वर्त्तस्वेति, केन कर्त्रा ? जनेन, कि कुर्वता ? अभिरञ्जयता अय राजा चिरायुर्भूयादित्यनुरागविपय नयता, काम् ? नगरीम्, कथम्भूतेन ? परमङ्गलमङ्गल घोषकृता पर केवल मङ्गलमेव मङ्गलघोप करोतीति तेन तथोक्तेन पुन. धृतव्यजनेन गृहीततालवृन्तेन[4] ॥४८॥

**स्वगोचरं जल्पमधिश्रि शृण्वन्संमान्यलङ्कारमणीन्निरूप्य ।**
**हर्म्यस्थकन्योज्झितपुष्पलाजं स राजमार्गं नृपतिः प्रपेदे ॥४९॥**

---

प्रतिज्ञा करता है, अनेक व्यभिचारी भावोंके मिलनेसे आकुल रहता है, स्त्रीके लिए पागल होता है तथा दुखी होकर दौड़ता फिरता है ] ॥४५॥

राजा रावण अथवा धर्मराजको देखनेके लिए नगरके कोटों अथवा उन्नत भवनों अथवा गोपुरोंकी शिखरोंपर चढ़े अत्यन्त विनोदी नागरिकोंसे भरे वे नगर ऐसे लगते थे मानो छल करके प्रविष्ट विपक्षियोंने पहिलेसे ही उनपर आक्रमण कर दिया है ॥४६॥

राजाको देखनेमें लीन जनसमूहकी समस्त इन्द्रियाँ अपने-अपने स्थानसे विरक्तके समान होकर एक क्षणके लिए केवल नेत्र इन्द्रिय रूपसे ही रह गयी थीं ॥४७॥

पूरी नगरीको सब प्रकारसे सजानेवाले, सर्वोत्कृष्ट मंगलका मंगल घोप करनेमें लीन तथा हाथसे बीजना हिलाते हुए नागरिकोंके द्वारा जय-जय घोपपूर्वक स्वागत किया गया राजा नगरमें चला जा रहा था ॥४८॥

---

१ श्लेप–द०, मा० । २ निवेद–द०, ना० । ३. निर्वेद–प०, द०, ना० । ४ तोटकवृत्तम् । लक्षणञ्च "इह तोटकमम्बुधि सै: प्रथितम्" ( वृ० र० ३।४१ ) ।

स्वगोचरमिति—स नृपती रावण' राजमार्गं प्रपेदे, कथम्भूतम् ? हर्म्यस्थकन्योज्झितपुष्पलाज हर्म्यस्था' सौवस्थिता' या. कन्यास्ताभिरुज्झितानि पुष्पाणि लाजा आर्द्रतण्डुला यत्र त मन्दिरगतकुमार्य्युपक्षिप्तकुसुम-जलार्द्रतण्डुलमित्यर्थ.। किं कृत्वा ? सम्मान्यलङ्कारमणीं लङ्कावनरक्षकस्य वनमालिकाख्यस्य भार्याम् अथवा (लङ्का) नगरीसंज्ञा सम्मान्या चासौ लङ्का च सम्मान्यलङ्का सम्मान्यलङ्कैव रमणी सम्मान्यलङ्कारमणी ता तथोक्ताम्, किं कुर्वन्? स्वगोचरमात्मविषयम् अधिस्त्रि स्त्रीषु प्रवृत्त जल्प शृण्वन्नाकर्णयन्।

भारतीय—स नृपतिर्युधिष्ठिर राजमार्गं प्रपेदे, किं कृत्वा ? पूर्वं निरूप्य, कान् ? सम्मान्यलङ्कारमणीन् सम्मानिन सम्यक् प्रकारेण मा लक्ष्मीमनन्ति प्राणन्ति पुष्टिं नयन्तीति सम्मानिन अलङ्कारभूता मणय सम्मानिनश्च तेऽलङ्कारमणयश्च सम्मान्यलङ्कारमणयस्तान् अथवाऽलङ्कारे मणयो येषा ते तान्, सम्मान्यलङ्कार-मणीन् लक्ष्मीवत प्रधानपुरुषानित्यर्थ.। शेषोऽर्थ प्राग्वत्[1] ॥४९॥

**आर्द्रां बालाश्चिक्षिपुस्तस्य शेषामुच्चैरूढा येन सा धूर्वराया:।**
**आलोकान्तं कीर्त्तिलक्ष्मीप्रतापैरुच्चै रूढायेन सा धूर्वरायाः ॥५०॥**

आर्द्रामिति—बाला मुग्धा. कामिन्य आर्द्रा शेषा तस्य राज्ञ चिक्षिपु. क्षिप्तवन्त्य.। तस्य कस्य ? येन राज्ञा वराया शोभनाया उर्वराया भूमेरुच्चैर्वोढम् उच्चै महती सा लोकप्रसिद्धा, धूर्धुरा ऊढा धृता। कथ यथा भवति ? आलोकान्त लोकत्रय यावत्, पुन कथ यथा भवति ? साधु लोकप्रशसाविषयत्वात् मनोहारि, कै कृत्वोढा धू ? कीर्त्तिलक्ष्मीप्रतापैः, कथम्भूतेन येन ? रुढायेन अय शुभावहो विधि, रुढ. जगद्विख्या-तोऽयो यस्य तेन[2] ॥५०॥

**विभीपणाभ्युन्नतकुम्भकर्णमुख्यैर्महानागबलैर्युतेन।**
**पराक्रमेणेन्द्रजितोद्धतेन प्रत्यभ्युदीये हरिणेक्षणेन ॥५१॥**

विभीपणेति—इन्द्रजिता इन्द्रजिदाख्येन पुत्रेण प्रत्यभ्युदीये प्रत्यभ्युत्थितम्। कथम्भूतेन ? हरिणेक्ष-णेन मृगलोचनेन, पुनरुद्धतेन गर्वपर्वताधिरूढेन, पुन पराक्रमेण परान् शत्रून् आक्रमतीति पराक्रमस्तेन पुन महानागमिव बल येषा तै महानागबलैर्युतेनान्वितेन, कथम्भूतै ? विभीषणाभ्युन्नतकुम्भकर्णमुख्यै, विभीषणश्चाभ्युन्नत उदय प्राप्तश्चासौ कुम्भकर्णश्च मुख्यौ प्रधाने येषा तै।

भारतीय—हरिणा नारायणेन ईक्षणेन कृत्वा प्रत्यभ्युदीये। कथम्भूतेन हरिणा ? विभीपणाभ्युन्नत-कुम्भकर्णमुख्यै, विभीषणानि भीष्माणि अभ्युन्नतास्तुङ्गा कुम्भाश्च कर्णाश्च मुख्यानि च येषा तैस्तथोक्तैर्महा-

---

अपनी परम प्रिय लंकाकी स्त्रियोंको देखकर रावण अथवा अत्यन्त सम्पत्तिशाली नागरिकोंके मणियुक्त भूपणधारियोंके अभिवादन स्वीकार करके धर्मराजने अपनेको लेकर स्त्रियोंमें चलती बाते सुनते हुए उस राज-मार्गपर प्रस्थान किया था जिसपर भवनोंके ऊपर बैठी कन्याओंने फूल तथा लावेकी वर्षा की थी ॥४९॥

जो शुभ कार्योंका पोषक है तथा जिसने शेष तथा उर्वरा भूमिका वह महान् दायित्व साहसके साथ यश, सम्पत्ति और प्रभुताके द्वारा तीनों लोकोंमें पूर्ण रूपसे धारण किया है उस पर लड़कियोंने आर्द्र पूर्णाहुति छोड़ी थी ॥५०॥

महान् नागोंके समान बलशाली विभीषण तथा अत्यन्त ऊँचा कुम्भकर्ण आदि प्रमुखों सहित हरिण समान चंचलनेत्र, शत्रुओंके आक्रामक इन्द्रजीत नामक पुत्रने रावण की अगवानी की थी।

अत्यन्त भयंकर और ऊँचे सविशेष गण्डस्थल तथा कर्णधारी विशाल हाथियोंकी

---

१ श्लेष—च०, ना०। उपजातिवृत्तम्। २. शालिनीवृत्तम्। लक्षण हि—"शालिन्युक्ता मतौ तगौ गोऽब्धिलोकै" (वृ० र० ३।३५)।

नागवलैः गजसैन्यैर्युतेन, पुनः कथम्भूतेन ? इन्द्रजिता इन्द्र जयतीति इन्द्रजित्तेन तथोक्तेन, पराक्रमेण हेतुना उद्धतेन सगर्वेण[1] ॥५१॥

**अत्र स्नुताधिकमनोजवधूतमालपत्रप्रयुक्तकुसुमाञ्जलिसिक्तमूर्त्तिः ।**
**अत्रस्नुताधिकमनोजवधूतमालमाल्येन तेन सहितः स्वगृहं विवेश ॥५२॥**

अत्रेति–स राजा रावणः गृहं विवेश, कथम्भूतः ? तेनेन्द्रजिता सहितः, क ? अत्रास्मिन्नवसरे, कथम्भूतः ? स्नुताधिकमनोजवधूतमालपत्रप्रयुक्तकुसुमाञ्जलिसिक्तमूर्त्तिः, स्नुतेन स्वेदोद्गमेनोपलक्षितोऽधिको मनोजः कन्दर्पो यासां ताः स्नुताधिकमनोजाः ताश्च ता वध्वश्च ताभिः प्रयुक्तो यः कुसुमाञ्जलिस्तेन सिक्ता मूर्त्तिर्यस्य सः, कथम्भूतेनेन्द्रजिता ? अत्रस्नुताधिकमनोजवधूतमाल्माल्येन त्रसनशीलः त्रस्नुः, "त्रसिगृधृधृषिभ्यः क्नुः" न त्रस्नुरत्रस्नुस्तस्य भावो ऽत्रस्नुता तया, अधिकश्चासौ मनोजवो निर्भयत्वादधिकमनोवेगस्तेन धूतानि कम्पितानि माल्माल्यानि मालार्हकुसुमानि यस्य तेन । अत्र युधिष्ठिररावणयोर्विशेषणे पूर्वोक्त एव बोद्धव्ये[2] ॥५२॥

**सुसहायतया सुसहायतया मधुरं मधुरञ्जितयाजितया ।**
**शमितः शमितः सहितः सहितः प्रतिवासरवासरतिं प्रययौ ॥५३॥**

सुसहायतयेति–प्रययौ गतवान्, कोऽसौ ? स राजा, काम् ? प्रतिवासरवासरतिं प्रतिवासर प्रतिदिन प्रतिवास प्रतिमन्दिर यथा रतिः प्रीतिस्ताम्[3], कथम्भूतः ? श सुखमितः प्राप्तः, पुनः शमितः शान्त, पुनः सुसहायतया निर्व्यभिचारिमित्रसमूहेन सहितो युक्तः, कथम्भूतया ? सुसहायतया सहायस्य भावः सहायता शोभना सहायता यस्यास्तया मित्रधर्मवत्येत्यर्थः । पुनः मधुरञ्जितया मधुना वसन्तेनाह्लादितया, कथं यथा भवति ? मधुरमत्यन्तपेशल पुनः अजितया जेतुमशक्यया, कथम्भूतो राजा ? सहितः हित सुख हिताः सुखहेतवो मनुष्याः हितेन हितैश्च सह वर्त्तमानः[4] ॥५३॥

**तां श्रीवधूं चिन्तयतान्यभोग्यां तेन स्वसात्कर्त्तुमपार्यमाणाम् ।**
**न शीतमुष्णं न मतं सुखाय स्वावस्थयातप्यत केवलं सः ॥५४॥**

तामिति–परमतप्यत सतापं प्राप्तः, कोऽसौ ? स रावणः, कया कर्त्र्या ? स्वावस्थयेति, कथं परमतप्यत ? तदेवाह–न मत नेष्टम्, किम् ? शीत श्रीगन्धकमलकर्पूरादिवस्तु, तथा नमनम्, किम् ? उष्ण वीर्यं कुङ्कुमादिवस्तु, केन ? तेन रावणेन, कस्मै ? सुखाय, किं कुर्वता ? तां जगद्विख्यातां श्रीवधूं सीतां

---

सेनासे सज्जित, इन्द्रको जीतनेमें समर्थ पराक्रमधारी तथा आत्मगौरवी विष्णु (कृष्णजी) ने धर्मराजको आँखोंपर लिया था ॥५१॥

बहते पसीनेसे व्यक्त अधिकतर कामासक्ति युक्त नागरिक वन्धुओंके द्वारा तमालके पत्तेमें रखकर छोड़ी गयी पुष्पाञ्जलियोंसे आर्द्र रावण अथवा युधिष्ठिरने निर्भयताके आधि-युक्त मनोभावशाली तथा मालाके फूलोंके विखेरते इन्द्रजीत अथवा विष्णुके साथ वहाँपर अपने गृहमें प्रवेश किया था ॥५२॥

अजेय, सर्वथा समर्थ तथा विस्तृत निर्दोष मित्रमण्डलीसे युक्त वसन्त अथवा मदिरासे रंगीन सुखको प्राप्त तथा शान्त और कल्याणकारी राजाने प्रतिदिन प्रत्येक निवासमें मधुर रतिको दिया था ॥५३॥

दूसरेके द्वारा भोग्य लक्ष्मी स्वरूपिणी सीता अथवा राज्यलक्ष्मी रूपी वधूको सोचते हुए तथा उसे अपने आधीन करनेमें असमर्थ उस रावण अथवा युधिष्ठिरके लिए शीतल

१ श्लेषः–च०, ना० । उपजातिवृत्तम् । २. वसन्ततिलकावृत्तम् । ३ प्रतिवासर वासे रतिस्ताम् । ४, तोटकवृत्तम् ।

मनसा चिन्तयता, कथम्भूताम् ? अन्यभोग्या राघवसेव्या पुन स्वसादात्मसात् कर्तुमपार्यमाणामशक्याम् अतएव केवलम् अतप्यत।

भारतीयः पक्ष –तेन युधिष्ठिरेण सुखाय शीत न मतमुष्ण न मतम्, कथम्भूतेन तेन ? ताम् आबाल गोपालादिप्रसिद्धा श्रीवधू राज्यलक्ष्मीं चिन्तयता, कथम्भूताम् ? अन्यभोग्या दुर्योधनसेव्याम्, किं कर्तुम् ? स्वसात् स्वाधीनाम्, केवलमतप्यत, कया ? स्वावस्थया दुर्दशयेति[1] ॥५४॥

**त्रेपे नृपाणां समवस्थयोच्चैः सेहे न दुर्योधनकामबाधाम्।**
**बालाङ्गनापाङ्गकृतापहासं रहस्यसौभाग्यमलं निनिन्द ॥५५॥**

त्रेप इति–त्रेपे लज्जित, कोऽसौ ? स रावण, कया ? समवस्थया, केषाम् ? नृपाणाम्, कथम् ? उच्चैः अतिशयेन। तथा न सेहे न सोढु समर्थोऽभूत्, काम् ? दुर्योधनकामबाधा दु खेन योद्धु शक्यो दुर्योधन स चासौ कामस्तस्य बाधा पीडाम्। निनिन्द, किम् ? असौभाग्यमल दौर्भाग्यरज, क ? रहस्येकान्ते, कथम्भूतम् ? बालाङ्गनापाङ्गकृतापहासम्, बालाङ्गनाना मुग्धस्त्रीणामपाङ्गा कटाक्षास्तै कृतमपहास यस्य तत्।

भारतीय.–असौ नृपाणा समवस्थया त्रेपे। तथा दुर्योधनकामबाधा गान्धारीतनयाभिलापपीडा न सेहे। तथा भाग्य दैव रहस्यलमत्यर्थं निनिन्द। कथम्भूत बालाङ्गनापाङ्गकृतापहास बाल शिशवोऽङ्गना कामिन्यस्ताभिरपाङ्गनिन्द्य यथा भवति तथा कृतमपहास यस्य तत्तथोक्तम्। कर्मण्येतदेव रूपम्[2] ॥५५॥

**न गुणैर्वधूभिरमितो रमितो न विलेपनं निजगृहे जगृहे।**
**विभवेषु नो वशमितः शमितः स गतो यतित्वमुदितो मुदितः ॥५६॥**

न गुणैरिति–स राजा वधूभिर्न रमित., कथम्भूत सन् ? गुणैरौदार्यधैर्यादिभिरमितोऽगाधस्तथा विलेपन श्रीगन्धादिलक्षण न जगृहे नाङ्गीचकार, क्व ? निजगृहे आत्मीयमन्दिरे, तथा विभवेषु परिच्छदादिषु लक्षणेषु न वशमित गत., तथा स राजा गत, किम् ? यतित्व मुनिरूपताम्, कथम्भूत सन्, उदितोऽभ्युन्नत, श्रमित, शान्त, पुन कथम्भूत सन् ? अमुदितोऽहृष्ट सन्निति[3] ॥५६॥

**स वैरिणा श्रीमदनेन राजा निगूहमानो हृदयं विदीर्णम्।**
**अगाधगम्भीरमुदात्तसत्त्वमाकारमग्र्यं विभरां बभूव ॥५७॥**

स इति–स राजा रावण आकार कोपप्रसादजनिता शरीरप्रकृतिं बिभराम्बभूव बभार। किं कुर्वाण ? श्रीमदनेन श्रीकन्दर्पेण विदीर्ण विदारित हृदय निगूहमान सवृण्वन् दुर्जनजनहास्यभयान्न प्रकटयन्, कथम्भूत हृदयम् ? अगाधगम्भीरमगाधमकल्पित तथा गम्भीर निःक्षोभम्, अग्र्य प्रधानम्, उदात्तसत्त्वमुदात्तमुत्कृष्ट सत्त्व बल यस्मिन् तत्।

भारतीय –स राजा युधिष्ठिर आकार विभराम्बभूव, कथम्भूतम् ? अग्र्यमादेय पुनरुदात्तसत्त्वमुल्बण-

---

अथवा उष्ण पदार्थ भी सुख नहीं देते थे। वह क्रमशः अपनी कामदशा अथवा दुरवस्थासे ही जल रहे थे ॥५४॥

रावण तथा युधिष्ठिर दोनों ही अन्य राजाओंके सामने आते लजाते थे। कष्टसे सामना करने योग्य कामदेवकी बाधाको रावण नहीं सह पाता था तथा कौरव दुर्योधनकी मनमानी युधिष्ठिरको असह्य थी। और बालकों, स्त्रियों तथा अपगोंके द्वारा भी हँसे जाने वाले अपने अभागेपनको एकान्तमें धिक्कारते थे ॥५५॥

निःसीम गुणोंका भण्डार वह रानियोंके साथ रमण नहीं करता था, अपने भवनमें भी किसीसे लेपादि नहीं कराता था, और भोग-विलासोंमें उसका मन नहीं लगता था। सुखोंसे घिरे, प्रतापी तथा प्रसन्न यतिके रूपको वह प्राप्त हुआ था ॥५६॥

श्री कामदेव रूपी शत्रुके द्वारा खंड-खंड किये अपने हृदयको छिपाते हुए वह राजा रावण अत्यन्त गुप्त, सहिष्णु, विशाल शक्ति सम्पन्न बाह्य आकारको धारण किये था [ इस

---

१ श्लेष –व०, ना०। उपजातिवृत्तम्। २ श्लेष –व०, ना०। ३. प्रमिताक्षरा वृत्तम्। लक्षण हि–"प्रमिताक्षरा सजससैरुदिता" ( वृ० र० ३।६२ )।

नागबलैः गजसैन्यैर्युतेन, पुनः कथम्भूतेन ? इन्द्रजिता इन्द्र जयतीति इन्द्रजित्तेन तथोक्तेन, पराक्रमेण हेतुना उद्धतेन सगर्वेण[1] ॥५१॥

**अत्र स्नुताधिकमनोजवधूतमालपत्रप्रयुक्तकुसुमाञ्जलिसिक्तमूर्त्तिः ।**
**अत्रस्नुताधिकमनोजवधूतमालमाल्येन तेन सहितः स्वगृहं विवेश ॥५२॥**

अत्रेति–स राजा रावणः गृह विवेश, कथम्भूतः ? तेनेन्द्रजिता सहित', क्व ? अत्रास्मिन्नवसरे, कथम्भूतः ? स्नुताधिकमनोजवधूतमालपत्रप्रयुक्तकुसुमाञ्जलिसिक्तमूर्त्तिः, स्नुतेन स्वेदोद्गमेनोपलक्षितोऽधिको मनोज. कन्दर्पो यासा ताः स्नुताधिकमनोजा. ताश्च ता वध्वश्च ताभि. प्रयुक्तो य. कुसुमाञ्जलिस्तेन सिक्ता मूर्त्तिर्यस्य स., कथम्भूतेनेन्द्रजिता ? अत्रस्नुताधिकमनोजवधूतमालमाल्येन त्रसनशील. त्रस्नु', "त्रसिगृधृधृषिभ्यः क्नु." न त्रस्नुरत्रस्नुस्तस्य भावो ऽत्रस्नुता तया, अधिकश्चासौ मनोजवो निर्भयत्वादधिकमनोवेगस्तेन धूतानि कम्पितानि माल्यमाल्यानि मालार्हकुसुमानि यस्य तेन । अत्र युधिष्ठिररावणयोर्विशेषणे पूर्वोक्त एव बोद्धव्ये[2] ॥५२॥

**सुसहायतया सुसहायतया मधुरं मधुरञ्जितयाजितया ।**
**शमितः शमितः सहितः सहितः प्रतिवासरवासरतिं प्रययौ ॥५३॥**

सुसहायतयेति–प्रययौ गतवान्, कोऽसौ ? स राजा, काम् ? प्रतिवासरवासरतिं प्रतिवासर प्रतिदिन प्रतिवास प्रतिमन्दिर यथा रति प्रीतिस्ताम्[3], कथम्भूतः ? श सुखमितः प्राप्त', पुन. शमित. शान्त, पुनः सुसहायतया निर्व्यभिचारिमित्रसमूहेन सहितो युक्त', कथम्भूतया ? सुसहायतया सहायस्य भावः सहायता शोभना सहायता यस्यास्तया मित्रवर्मवत्येत्यर्थः । पुनः मधुरञ्जितया मधुना वसन्तेनाह्लादितया, कथ यथा भवति ? मधुरमत्यन्तपेशल पुन. अजितया जेतुमशक्यया, कथम्भूतो राजा ? सहितः हित सुख हिता सुखहेतवो मनुष्याः हितेन हितैश्च सह वर्त्तमान.[4] ॥५३॥

**तां श्रीवधूं चिन्तयतान्यभोग्यां तेन स्वसात्कर्त्तुमपार्यमाणाम् ।**
**न शीतमुष्णं न मतं सुखाय स्वावस्थयातप्यत केवलं सः ॥५४॥**

तामिति–परमतप्यत सताप प्राप्त., कोऽसौ ? स रावण., कया कर्त्र्या ? स्वावस्थयेति, कथ परमतप्यत ? तदेवाह–न मत नेष्टम्, किम् ? शीत श्रीगन्धकमलकर्पूरादिवस्तु, तथा नमनम्, किम् ? उष्ण वीर्यं कुङ्कुमादिवस्तु, केन ? तेन रावणेन, कस्मै ? सुखाय, किं कुर्वता ? ता जगद्विख्याता श्रीवधू सीता

---

सेनासे सज्जित, इन्द्रको जीतनेमें समर्थ पराक्रमधारी तथा आत्मगौरवी विष्णु ( कृष्णजी ) ने धर्मराजको आँखोंपर लिया था ॥५१॥

बहते पसीनेसे व्यक्त अधिकतर कामासक्ति युक्त नागरिक वन्धुओंके द्वारा तमालके पत्तेमें रखकर छोड़ी गयी पुष्पाञ्जलियोंसे आर्द्र रावण अथवा युधिष्ठिरने निर्भयताके आधि-युक्त मनोभावशाली तथा मालाके फूलोंके बिखेरते इन्द्रजीत अथवा विष्णुके साथ वहाँपर अपने गृहमें प्रवेश किया था ॥५२॥

अजेय, सर्वथा समर्थ तथा विस्तृत निर्दोष मित्रमण्डलीसे युक्त वसन्त अथवा मदिरा से रंगीन सुखको प्राप्त तथा शान्त और कल्याणकारी राजाने प्रतिदिन प्रत्येक निवासमें मधुर रतिको दिया था ॥५३॥

दूसरेके द्वारा भोग्य लक्ष्मी स्वरूपिणी सीता अथवा राज्यलक्ष्मी रूपी वधूको सोचते हुए तथा उसे अपने आधीन करनेमें असमर्थ उस रावण अथवा युधिष्ठिरके लिए शीतल

---

१. श्लेषः–च०, ना० । उपजातिवृत्तम् । २. वसन्ततिलकावृत्तम् । ३ प्रतिवासरं वासे रतिस्ताम् । ४. तोटकवृत्तम् ।

मनसा चिन्तयता, कथम्भूताम् ? अन्यभोग्या राघवसेव्या पुनः स्वसादात्मसात् कर्त्तुमपार्यमाणामशक्याम् अतएव केवलम् अतप्यत ।

भारतीयः पक्षः—तेन युधिष्ठिरेण सुराय शीत न मतमुष्ण न मतम्, कथम्भूतेन तेन ? ताम् आबाल गोपालादिप्रसिद्धा श्रीवधू राज्यलक्ष्मीं चिन्तयता, कथम्भूताम् ? अन्यभोग्या दुर्योधनसेव्याम्, किं कर्त्तुम् ? स्वसात् स्वाधीनाम्, केवलमतप्यत, कया ? स्वावस्थया दुर्दशयेति[1] ॥५४॥

**त्रेपे नृपाणां समवस्थयोच्चैः सेहे न दुर्योधनकामबाधाम् ।**
**बालाङ्गनापाङ्गकृतापहासं रहस्यसौभाग्यमलं निनिन्द ॥५५॥**

त्रेप इति—त्रेपे लज्जित, कोऽसौ ? स रावण, कया ? समवस्थया, केषाम् ? नृपाणाम्, कथम् ? उच्चै. अतिशयेन । तथा न सेहे न सोढु समर्थोऽभूत्, काम् ? दुर्योधनकामबाधा दुःखेन योद्धु शक्यो दुर्योधन स चासौ कामस्तस्य बाधा पीडाम् । निनिन्द, किम् ? असौभाग्यमल दौर्भाग्यरज, क्व ? रहस्येकान्ते, कथम्भूतम् ? बालाङ्गनापाङ्गकृतापहासम्, बालाङ्गनाना मुग्धस्त्रीणामपाङ्गा कटाक्षास्तै कृतमपहास यस्य तत् ।

भारतीय.—असौ नृपाणा समवस्थया त्रेपे । तथा दुर्योधनकामबाधा गान्धारीतनयाभिलापपीडा न सेहे । तथा भाग्य दैव रहस्यलमत्यर्थं निनिन्द । कथम्भूत बालाङ्गनापाङ्गकृतापहास बाला शिशवोऽङ्गना· कामिन्यस्ताभिरपाङ्गनिन्य यथा भवति तथा कृतमपहास यस्य तत्तथोक्तम् । कर्मण्येतदेव रूपम्[2] ॥५५॥

**न गुणैर्वधूभिरमितो रमितो न विलेपनं निजगृहे जगृहे ।**
**विभवेषु नो वशमितः शमितः स गतो यतित्वमुदितो मुदितः ॥५६॥**

न गुणैरिति—स राजा वधूभिर्न रमित., कथम्भूत सन् ? गुणैरौदार्यधैर्यादिभिरमितोऽगाधस्तथा विलेपन श्रीगन्धादिलक्षण न जगृहे नाङ्गीचकार, क्व ? निजगृहे आत्मीयमन्दिरे, तथा विभवेषु परिच्छदादिषु लक्ष्मणेषु न वशमित. गत, तथा स राजा गत, किम् ? यतित्व मुनिरूपताम्, कथम्भूत सन्, उदितोऽभ्युन्नत, श्रमित, शान्त, पुन कथम्भूत सन् ? अमुदितोऽहृष्ट सन्निति[3] ॥५६॥

**स वैरिणा श्रीमदनेन राजा निगूहमानो हृदयं विदीर्णम् ।**
**अगाधगम्भीरमुदात्तसत्त्वमाकारमग्र्यं विभरां बभूव ॥५७॥**

स इति—स राजा रावण आकार कोपप्रसादजनिता शरीरप्रकृतिं विभराम्बभूव बभार । किं कुर्वाण. ? श्रीमदनेन श्रीकन्दर्पेण विदीर्णं विदारित हृदय निगूहमान संवृण्वन् दुर्जनजनहास्यभयान्न प्रकटयन्, कथम्भूत हृदयम् ? अगाधगम्भीरमगाधमकलित तथा गम्भीर नि क्षोभम्, अग्र्य प्रधानम्, उदात्तसत्त्वमुदात्तमुत्कृष्ट सत्त्व बल यस्मिन् तत् ।

भारतीय —स राजा युधिष्ठिर आकार विभराम्बभूव, कथम्भूतम् ? अग्र्यमादेय पुनरुदात्तसत्त्वमुल्वण

---

अथवा उष्ण पदार्थ भी सुख नहीं देते थे । वह क्रमशः अपनी कामदशा अथवा दुरवस्थासे ही जल रहे थे ॥५४॥

रावण तथा युधिष्ठिर दोनों ही अन्य राजाओंके सामने आते लजाते थे । कष्टसे सामना करने योग्य कामदेवकी बाधाको रावण नहीं सह पाता था तथा कौरव दुर्योधनकी मनमानी युधिष्ठिरको असह्य थी । और बालकों, स्त्रियों तथा अंपगोंके द्वारा भी हँसे जाने वाले अपने अभागेपनको एकान्तमें धिक्कारते थे ॥५५॥

नि.सीम गुणोंका भण्डार वह रानियोंके साथ रमण नहीं करता था, अपने भवनमें भी किसीसे लेपादि नहीं कराता था, और भोग-विलासोंमें उसका मन नहीं लगता था । सुखोंसे घिरे, प्रतापी तथा प्रसन्न यतिके रूपको वह प्राप्त हुआ था ॥५६॥

श्री कामदेव रूपी शत्रुके द्वारा खंड-खंड किये अपने हृदयको छिपाते हुए वह राजा रावण अत्यन्त गुप्त, सहिष्णु, विशाल शक्ति सम्पन्न बाह्य आकारको धारण किये था [ इस

---

१ श्लेप —व०, ना० । उपजातिवृत्तम् । २. श्लेप —व०, ना० । ३ प्रमिताक्षरा वृत्तम् । लक्ष्महि—"प्रमिताक्षरा सजससैरुदिता" ( वृ० र० ३।६२ ) ।

सामर्थ्यम्, पुनः कथम्भूतम् ? अगाधगम्भीरम् अनाकलितनिःक्षोभम्, कथम्भूतो राजा ? हृदय निगूहमानः, कथम्भूतम् ? अनेन वैरिणा दुर्योधनेन विदीर्णं पुनः श्रीमल्लक्ष्मीवत्। शेष तुल्यम्[1] ॥५७॥

स सदसि हृषीकेशेनोच्चैर्बलेन गरीयसा
परमतनयेनार्यं भ्रातृव्रजेन च सङ्गतः।
विलुलितकथः शस्त्रे शास्त्रे कलासु कथासु च
प्रभुरगमयत्कञ्चित्कालं धनञ्जयमूर्जयन् ॥५८॥

इति श्रीधनञ्जयकृतौ राघवपाण्डवीये महाकाव्ये रावणयुधिष्ठिरलङ्काद्वारवतीप्रवेश-कथनो नामाष्टम सर्गः ॥८॥

स इति–सोऽय रावण. कञ्चित्काल समयमगमयत् निनाय, किं कुर्वन् ? धन द्रव्य तथा जयमूर्जयन्नुपार्जयन्, कथम्भूतः ? प्रभुः विभुः, पुन. विलुलितकथः विलुलिता कथा येन सः, विहितविचारण इत्यर्थः। क ? शस्त्रे चापतोमरादिलक्षणे तथा शास्त्रे व्याकरणतर्कादिलक्षणे जात्यपेक्षयैकवचनम्। तथा कलासु वेणुवीणादिषु तथा कथासु कादम्बर्यादिषु। क ? सदसि सभायाम्, पुन. कथम्भूत. ? गरीयसा गरिष्ठेनाजय्येन बलेन सैन्येन सङ्गतः सयुक्तस्तथा परमतनयेन परमा श्रीर्यस्य स परमः परमश्चासौ तनयश्च परमतनयस्तेन श्रीमदिन्द्रजिता पुत्रेण सङ्गतः, कथम्भूतेन ? हृषीकेशेनेन्द्रियनियन्त्रा इष्टस्रग्वनिताचन्दनादीननुभवितुमित्यर्थः, कथम् ? उच्चैरत्यर्थ तथा भ्रातृव्रजेन विभीषणादिसमूहेन सङ्गत.।

भारतीयः–धनञ्जयमर्जुनम् ऊर्जयन्प्रौढिं नयन्, हृषीकेशेन नारायणेन बलेन बलभद्रेण तथा परमतनयेन पर केवल मत इष्टः नयो दुष्टशिष्टनिग्रहानुग्रहलक्षणो येन तेन दुष्टाना निग्रह. शिष्टाना प्रतिपालन राज्ञा धर्मो न तु जटाधारण शिरोमुण्डन चेति वचनात्। यद्वा परेषामरीणा मतो ज्ञातो नयो नीतिर्येन तेन, भ्रातृव्रजेन भीमादिसमूहेन सङ्गतः गरीयसेति कृष्णबलयोर्विशेषण लोकपूज्यत्वात्। शेष पूर्ववत्[2] ॥५८॥

इति निरवद्यविद्यामण्डनमण्डितपण्डितमण्डलीमण्डितस्य पट्तर्कचक्रवर्तिन श्रीमद्विनयचन्द्र-पण्डितस्य गुरोरन्तेवासिनो देवनन्दिनाम्न शिष्येण सकलकलोद्भवचारुचातुरी-चन्द्रिकाचकोरेण नेमिचन्द्रेण विरचितायां पदकौमुदी नाम दधानाया टीकाया रावणयुधिष्ठिरलङ्काद्वारवतीप्रवेशकथनोऽष्टमः सर्ग ॥८॥

---

राज्य-लक्ष्मीयुक्त शत्रु दुर्योधनके द्वारा खण्डित मनको छिपाते हुए राजा युधिष्ठिर ] ॥५७॥

इन्द्रिय जेता, बलवान, गौरवशाली भाइयों तथा श्रेष्ठ पुत्रके साथ राजसभामें शासन, शास्त्र और ललित कलाओंकी चर्चा करता हुआ तथा अपनी सम्पत्ति और विजयके साधनों को बढ़ाता हुआ राजा रावण कुछ समय बिता रहा था।

परम बली, सबके श्रेष्ठ, हृषीकेश कृष्णजी तथा भाइयोंके साथ शत्रुओंकी योजनाएँ जाननेमें व्यस्त इस राजा युधिष्ठिरने यादव राजसभामें शस्त्र-शास्त्र तथा संगीतादिकी चर्चाएँ करते हुए और अर्जुनकी प्रतिष्ठा बढ़ाते हुए कुछ समय व्यतीत किया था ॥५८॥

निर्दोषविद्याभूषण भूषित पण्डितमण्डलीके पूज्य, षट्तर्कचक्रवर्ती श्रीमान् पंडितविनयचन्द्र गुरुके प्रशिष्य, देवनन्दिके शिष्य, सकलकलाचातुर्य-चन्द्रिकाके चकोर, नेमिचन्द्र द्वारा विरचित कवि धनञ्जयके राघव-पाण्डवीय नामसे ख्यात द्विसन्धान काव्यकी पदकौमुदी टीकामें रावण युधिष्ठिर-लङ्काद्वारावती-प्रस्थान कथन' नामका अष्टम सर्ग समाप्त।

१ श्लेष–च०, ना०। उपजातिवृत्तम्। २ श्लेष–च०, ना०। हरिणीवृत्तम्। लक्षणं हि "रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा।" (वृ० र० ३।९३)।

# नवमः सर्गः

तस्मिन्काले जरासन्धो वैरामोघभिया युतः ।
चित्तस्थमनुजं पश्यन्दूरतः पुरुषोत्तमम् ॥१॥
तथा विराधितं वैरिभीमहानियमोद्यतम् ।
उद्युक्त्याश्वासयन्ख्यातस्तं कौरव्यंशुभावहः ॥२॥
पृथ्व्याः पाताललङ्कान्तः श्रीगृह प्राप्य भूषणम् ।
सीताचिन्ताकुलः कार्यं दुःखमालोचयन्स्थितः ॥३॥
अज्ञातचरितं शत्रुं श्रीवधूहरणोद्यतम् ।
विरित्सन्विधुना धौते सौधे शीतेऽप्यतप्यत ॥४॥

श्लोकचतुष्टयमतप्यतेति क्रियया व्याख्यायते–तस्मिन्निति–अतप्यत, कोऽसौ ? रामो राघव, कथम् ? वै स्फुटम्, क्व ? तस्मिन्काले सीतापहरणसमये, कि कुर्वन् ? पश्यन्नस्मिन्नवसरे नान्य, कश्चित्सहायो ममास्तीति अन्तर्मुखाकारतया वीक्ष्यमाण' । कम् ? अनुज भ्रातरम । किमाख्यम् ? पुरुषोत्तम लक्ष्मणम्, कथम्भूतम् ? चित्तस्थ मनोगतम् । कथम्भूतो राम. अघभिया पापभयेन दूरतो दूरादयुतोऽसङ्गत. निष्पापो निर्भयश्चेत्यर्थ., पुन जरासन्ध जरयाऽसन्धोऽसम्बन्धो यस्य स, वार्द्धक्याविषय चरमाङ्गत्वात्, शरीराविकारित्वात्, मोक्षगामित्वात्तस्येति सम्बन्ध । भारतीय –अतप्यत कोऽसौ ? जरासन्ध जरासन्धाभिधानो नारायणप्रतिकूलो विद्याधरचक्रवर्त्ती, किं कुर्वन् ? पश्यन् । कम् ? चित्तस्थमनुज मनोगतमनुष्यम्, किमाख्यम् ? पुरुषोत्तम नारायणम्, कस्मात् ? दूरतः दूरात् । कस्मिन् ? तस्मिन्काले शरत्समये, कथम्भूत सन् ? युतो युक्त, कया ? वैरामोघभिया वैरात् कंसस्य स्वभागिनेयस्य वधसमुत्पन्नात् अमोघा चासौ भीश्च वैरामोघभीस्तया वैराप्रतिहताशङ्कयेति ।

तथेति–कथम्भूतो राम. ? ख्यात प्रसिद्ध क्व ? कौ भुवि, किं कुर्वन् ? श्वासयन् धीरयन्, कम् ? त प्रसिद्ध विराधित खरदूषणनिर्द्धाटित चन्द्रोदरपुत्रम्, कथम् ? तथा तेनैव लक्ष्मणस्मरणप्रकारेण वैरिभीमहानियमोद्यत वैरिभ्या खरदूषणाभ्या भी वैरिभी. वैरिभिया वैरिवैरे सति महानियम खरदूषणयोर्वधघटनायां यावन्ममेष्टस्रग्वनिताचन्दनादिपरित्यागलक्षण व्रत वैरिभी महानियम तत्रोद्यतस्त तथोक्तम्, कया ? उद्युक्त्या महाविचारणया, पुन कथम्भूत' ? रव्यशुभावह. रवेरशव रव्यशवस्तेषा भाव सत्ता स्वरूप वा हन्तीति रव्यंशुभावह. आत्मप्रतापेनार्कप्रतापस्य जेतेत्यर्थ । दिनकरकिरणदीप्तिभृदिति ।

---

तस्मिन्, काले चित्तस्थ पुरुषोत्तमम्, अनुज दूरत पश्यन् वै जरासध राम अघभिया युत कौ ख्यात रव्यशुभावहा, तथा विराधित वैरिभी महा नियमेनोद्यत तम् आश्वासयन् पृथ्व्या पाताललकान्त• श्रीगृहभूषण प्राप्य सीताचिन्ताकुल कार्यमालोचयन्दुख स्थित ।

सीताका अपहरण हो जानेके समय पुरुषश्रेष्ठ मनमोहन अनुज लक्ष्मणको दूर गया देखकर वार्द्धक्यसे परे ('चरम शरीर', युवक) रामको निश्चयसे रावणके पाप अर्थात् सीताहरणकी आशका हो गयी थी। पृथ्वीपर विख्यात, सूर्यकी किरणोंके प्रतापके तिरस्कारक राघव, लक्ष्मणके द्वारा कथित प्रकारसे सताये गये अतएव शत्रुके भयकी समाप्तिके लिए कठोर प्रतिज्ञाओंमें बद्ध, उसको साहसके वचनोंसे समझाता हुआ, भारत भूमिसे लेकर पाताल लंका पर्यन्त लक्ष्मीके निवासभूत सीताके भूषणोंको पा कर सीताकी चिन्तामें विभोर तथापि कर्त्तव्यका विचार करता हुआ, दुखसे समय बिता रहा था।

भारतीयः—कथम्भूतो जरासन्धः ? ख्यातः प्रसिद्धः, किं कुर्वन् ? त प्रसिद्ध कौरव्य दुर्योधनमाश्वासयन् जरासन्धगृह्याः कौरव्या इति वचनात्। कया ? उद्युक्त्या उच्चैर्विचारणया, कथ तथा ? दूरस्थस्यापि पुरुषोत्तमस्य चित्तस्थस्यावलोकनप्रकारेण कथम्भूत कौरव्यम् ? विराधितम्, कै. ? पाण्डवैरिति सम्बन्धो बोद्धव्यः, पुनः कथम्भूतम् ? वैरिभीमहानियमोद्यत वैरी चासौ भीमश्च तस्य हानौ वध उद्यत प्रतिकूलवृकोदर-प्राणत्यागव्रतोद्यमपरमित्यर्थः। कथम्भूतो जरासन्ध. ? शुभावह. शुभमावहतीति शुभावहः अथवा शुभ न वहतीति सः नारायणहस्ताद्व्यापादनावधिसमलतया दुर्दशा वहमान इत्यर्थः।

पृथ्व्या इति—कथम्भूतो राम. ? स्थितः, कथ यथा भवति ? दु.खम्, किं कुर्वन् ? आलोचयन् अन्तर्मुखाकारतया व्यालोकमानः, किम् ? कार्यं कर्त्तव्यम्, कथम्भूतः ? सीताचिन्ताकुलः जानकीचिन्तनव्यग्रः, किं कृत्वा ? पूर्वं प्राप्य प्रविश्य, किम् ? श्रीगृह विलासमन्दिरम्, क ? पाताललङ्कान्त· पाताललङ्कामध्ये, कथम्भूतम्, पृथिव्या मेदिन्या भूषणमलङ्कारम्। भारतीयः—कथम्भूतः जरासन्धः ? स्थितः कथ यथा ? दु खम्, किं कुर्वन् ? आलोचयन्, किम् ? कार्यम्, कथम्भूत ? सीताचिन्ताकुलः भूमिचिन्तया व्यग्रः केनोपायेनावनिर्मम स्थिरा भविष्यतीति स्मरणव्याप्तः, किं कृत्वा ? श्रीगृह प्राप्य, कथम्भूतम् ? भूषणम्, पुन कथम्भूतम् ? आल्ल मनोहरहरितालादिरसचित्रलिखितभित्तिकमित्यर्थ.। कथम्भूत. ? कान्तः कमनीयमूर्त्तिः, पुनः पृथ्व्याः पाता रक्षक.।

अज्ञातेति—अतप्यत सन्तापेनान्वभूयत स रामः, क्व ? सौधे[1], कथम्भूते ? शीतेऽपि शीतलेऽपि पुनः धौते शुद्धीकृते, केन ? विधुना चन्द्रेण, किं कुर्वन् ? शत्रु रावण विरित्सन् सहर्त्तुमिच्छन्, कथम्भूतम् ? अज्ञातचरितमविदितचेष्ट खेचरविद्याभ्याससम्भूते., पुनः श्रीवधूहरणोद्यत सीताहरणतत्परम्।

भारतीयः—जरासन्धः सौधेऽतप्यत, कथम्भूते सौधे ? विधुना कर्पूरेण धौते शुद्धे, किं कुर्वन् ? शत्रु नारायण विरित्सन्, कथम्भूतम् ? श्रीवधूहरणोद्यत लक्ष्मीललनापहारोद्यतम्। शेष प्राग्वत्[2] ॥१—४॥

**सत्यग्रेसरसीतापहारिण्येषेत्यलोकयत्।**
**यां यां तया तयारत्या दूनः परमकाष्ठया ॥५॥**

---

अन्वय—तस्मिन्काले चित्तस्थमनुज पुरुषोत्तम दूरत पश्यन् जरासंधो वैरामोघभिया युत तथा विराधित वैरिभीमहानियमोद्यत त कौरव्यम् उद्युक्त्या आश्वासयन् शुभाऽवह, ख्यात पृथिव्या पाता कान्त, सीता चिन्ताकुल कार्यम् आलोचयन् दु ख स्थितः।

उस शरत्कालमे भी अहर्निश मनमें वसे पुरुषोत्तम नारायण रूपी शत्रुको दूरसे ही सोचकर जरासंधपर शत्रुका व्यर्थ न होनेवाला भय छा जाता था, पूर्वोक्त प्रकारसे उत्तेजित किये गये प्रमुख शत्रु भीमके विनाशकी प्रतिज्ञाके पालक कौरव राजा दुर्योधनको बड़े-बड़े आश्वासन देकर स्थिर करते हुए यह पुण्यसे विमुख तथापि ख्यात, अपने राज्यकी सुरक्षाके लिए चिन्तित, पृथ्वीके पालक रूपसे ज्ञात तथा सुन्दर वह (जरासंध) सुसज्जित तथा पूर्ण रूपसे चित्रित शोभन भवनमें पहुँचकर भावी कर्त्तव्यका विचार करता हुआ दुःखसे समय विता रहा था ॥१–३॥

प्रतिष्ठा तथा पत्नीके हरणके लिए प्रवृत्त तथा अज्ञात शील एवं गन्तव्य शत्रुके वधके लिए उत्सुक राम चन्द्रिकासे प्लावित, सुधामय तथा शीतल वातावरणमें भी सन्तप्त हुए थे [ राज्यलक्ष्मी रूपीके वधूके अपहरणके लिए तत्पर तथा अपनी आक्रमण योजना और तयारीको गुप्त रखते हुए शत्रु श्रीकृष्णजीके वधके लिए व्याकुल जरासंध कपूरसे धुले अत्यन्त शीतल राजभवनमें भी जल रहा था ] ॥४॥

---

१ सुधामय इत्यर्थं वनस्थत्वात्। २. श्लेष—द०, ना०। सर्गेऽस्मिन्ननुष्टुप्छन्द। ३ अग्रे सरतीत्यग्रेसरा "पुरोऽग्रतोऽग्रेषु सर्त्ते" इति ट। सतीनामग्रेसरा सत्यग्रेसरा सा चासौ सीता च सत्यग्रेसरा सीता "स्त्रीपुंनपुंसकादनूरेकार्थे स्त्रियां पुंवत्" इति पुंवद्भाव। सत्यग्रेस—प०, द०।

सतीति–हे परम उत्कृष्टविभूतिक श्रेणिक ! असौ रामः दून कदर्थित., कया ? तया तया काष्ठया दिशा, कया ? अरत्या पीडया, अलोकयद् दृष्टवान्, काम् ? या या काष्ठाम्, कथम् ? इति वर्त्तते का ? एपा काष्ठा, कथम्भूता ? सत्यग्रेसरसीतापहारिणी सत्यग्रेसरसीतामपहरतीत्येव शीला पतिव्रताग्रणीजानक्य-पहारिणीति ।

भारतीय –दून:, कोऽसौ ? जरासन्ध, कया कर्त्र्या ? तया तया सरस्या सरोवरेण, क्या कृत्वा ? अरत्या, कथम्भूतया ? परमकाष्ठया परमोत्कर्पया, अलोकयत्, काम् ? या या सरसीम्, कथम् ? इति वर्त्तते, का ? एपा सरसी, क्व ? अग्रे पुरत., कथम्भूता ? तापहारिणी पुन सीता मनोज्ञा[1] ॥५॥

**स्तनभारोधिकगुरुर्मध्यस्थो वलिविभ्रमः ।**
**तथापि साधुसंयोगात्तं न जहुः पुरेऽङ्गनाः ॥६॥**

स्तनेति–न जहु न हृतवत्य, का ? अङ्गना कामिन्य., कम् ? त पूर्वोक्तम्, कस्मात् ? साधु-सयोगात्, क्व ? पुरे नगरे, कथम् ? तथापि ? यद्यपि विद्यते क. ? स्तनभार, कथम्भूत ? अधिकगुरु घनपीनोन्नत, तथा यद्यपि विद्यते वलिविभ्रम वलित्रयोल्लास, कथम्भूत. सन् ? मध्यस्थ, यत्राधिको गुरु शिक्षादायक पुरुप, यत्र च मध्यस्थो वलिविभ्रम बलिना विजृम्भण मध्यगत तत्र तत्सयोगेनान्य कश्चिद्ब-लवान् पुरुषोऽपि पुरुप पराजयत इति तद्वत्सयोगात् । किं रामा राम जरासन्धश्च शत्रुजयचिन्ताकुलित जहु ? अपि तु न जहुरित्यनेन रामायणापेक्षया रावणपराजयमन्तरेण भारतीयकथापेक्षया नारायणपराजयमन्तरेण रामजरासन्धाभ्या रमणीकर्पूरादि न रोचते स्मेति भाव ॥६॥

**मत्तवारणमारुह्य सन्दशन्दशनच्छदम् ।**
**जातु भ्रूभङ्गविक्षेपमीक्षाञ्चक्रे दिगन्तरम् ॥७॥**

मत्तेति–स राम. जातु कदाचित् भ्रूभङ्गविक्षेप यथा तथा दिगन्तरमीक्षाञ्चक्रे ददर्श, कि कुर्वन् ? मत्तवारण बालाणकमारुह्य दशनच्छदमोष्ठ दशन् सन् ।

भारतीय.–मत्तवारण मत्तदन्तिनम्, शेप समम् ॥७॥

**कदाचित्कृतनेपथ्यं स तुरङ्गमधिष्ठितः ।**
**उपरुद्धः क्षणं तस्थौ तैः सुमित्रात्मजादिभिः ॥८॥**

---

सती शिरोमणि सीताका इधर अपहरण हुआ होगा इस विचारसे रामने जिस-जिस दिशाको खोजा, उस-उस दिशाने उनको शोकसे संतप्त किया था ।

अन्वय—एषा सती सरसी अग्रे तापहारिणी इति या या अवलोकयत् ।

यह सुन्दर झील पहिले संतापको दूर करती थी इस दृष्टिसे जरासंध जिस-जिस पर गया उसी-उसीने अन्तिम सीमाको प्राप्त अरतिका दुःख दिया था ॥ ५ ॥

उस राम अथवा जरासंधके मनको नगरमें अत्यन्त उन्नत स्तनभारवती तथा त्रिवलियुक्त कटिधारिणी स्त्रियाँ इसलिए नहीं हरण कर सकी थीं कि ये राम-जरासन्ध क्रमश साधुओंकी संगतिमें तथा साध्यकी पूर्तिमें लीन थे ॥ ६ ॥

क्रोधसे ओठोंको चबाते हुए राम जंगली हाथीपर चढ़कर भ्रकुटी टेढ़ी करके कभी-कभी समस्त दिशाओंको खोजते थे । [ जरासंध राजभवनके छज्जेपर खड़ा होकर कृष्णजी-की दिशामें देखता था ] ॥ ७ ॥

1. श्लेष –ब०, ना० ।

कदाचिदिति–स रामः क्षण मुहूर्त्तं सुमित्रात्मजादिभिः लक्ष्मणविराधिताद्यैरुपरुद्ध आवृत्तः सन् तस्थौ स्थितः, कथम्भूतः ? अधिष्ठितः आरूढः, कम् ? तुरङ्गमश्वम्। कथम्भूतम् ? कृतनेपथ्य विहितभूषणम्।

भारतीयः–सुमित्रात्मजादिभिः सुमित्रा[1] शोभनानि मित्राणि येषा ते, ते च आत्मजादयश्च तैरुपरुद्धः। शेष समम्[1] ॥८॥

**कल्याणनिक्कणा वीणा श्रुती नृत्यं विलोचने।**
**हरिचन्दनमप्यङ्गं तानि तस्य न पस्पृशुः ॥९॥**

कल्याणेति–कल्याणनिक्कणा वीणा तस्य नरेन्द्रस्य श्रुती कर्णे तथा नृत्य विलोचने, तथा हरिचन्दनम् अङ्गम् इत्थ तानि वस्तूनि न पस्पृशु. ॥९॥

**प्रौढे मन्त्रिणि तद्राज्यं प्राज्यं क्षिप्त्वा विराधिते।**
**भोगेषु विरतोऽरातिघातदीक्षामुपाददे ॥१०॥**

प्रौढ इति–भोगेषु ताम्बूलमाल्यादिषु विरतो विरक्तो रामोऽरातिघातदीक्षाम् उपाददेऽङ्गीचकार। किं कृत्वा ? तद्राज्य पातालल्ङ्काया राज्य विराधिते चन्द्रोदरपुत्रे क्षिप्त्वा, कथम्भूते ? प्रौढे अजय्ये, पुन. मन्त्रिणि हेयोपादेयतत्त्वविवेचके, कथम्भूत राज्यम् ? प्राज्य सर्वाङ्गपरिपूर्णम्। जरासन्धपक्षे–अविराधिते अविरोधिते[2] ॥१०॥

**अन्यदा साहसगतेर्विघातेन सदागतेः।**
**उद्धूतभूपरागेण विलोलितगृहाश्रमः ॥११॥**
**उत्सन्नगौरवकुलः पुंनागोल्लासवर्जितः।**
**निरन्तरवितापात्मा निजभूमहिमोज्झितः ॥१२॥**
**येन श्रीरुद्धृता मुक्ताफलसङ्घातपत्रजा।**
**तेन श्रीवृक्षमात्रेण किञ्चिदालक्षितोदयः ॥१३॥**
**उद्गिरन्निव सन्तापमभ्यग्रामन्दमाकुलम्।**
**सुग्रीवोपेतदारं तं नृपतिं शुचिरायर्यौ ॥१४॥**

अन्यदेति–चतुष्कुलकेन व्याख्यास्याम.। सुग्रीवो नाम विद्याधरचक्रवर्ती त प्रसिद्ध नृपति रामम् आययावागत., कथम्भूतः ? विलोलितगृहाश्रम विलोलित परित्याजित. गृहाश्रमो गृहस्थधर्मो यस्य स,

---

कभी-कभी राम सुसज्जित घोड़ेपर (सीताजीको खोजनेके लिए) चढ़ते थे तो सुमित्राके पुत्र लक्ष्मणजी, भील आदिके द्वारा रोके जानेपर क्षण भरके लिए रुक जाते थे। [सुन्दर वेश-भूषायुक्त रंगस्थलीमें बैठा जरासंध भी हितैषी मित्रों और पुत्रादिसे घिर जानेपर क्षण भरके लिए शान्त होता था] ॥ ८ ॥

आनन्ददायक ध्वनि करती वीणाका राग इनके कानतक न पहुँचता था, नृत्य आँखोंको न रुचता था और हरिचन्दनका लेप भी उसके शरीरको न छूता था ॥ ९ ॥

विलासादिसे रिक्त रामने वयस्क अथवा अनुभवी, मंत्र विचारमें दक्ष, चन्द्रोदरके पुत्रको शत्रु रावणका सर्वाङ्गपूर्ण लंकाका राज्य देकर प्रतिज्ञा कर ली थी। [जरासंधने भी अनुकूल गामी, गम्भीर तथा मंत्रीको द्वारकाका समृद्ध राज्य देकर शत्रुभूत नारायणके घातकी प्रतिज्ञाकी पूर्तिके लिए ताम्बूलादि छोड़ दिये थे] ॥ १० ॥

जिसका कोई अवरोध नहीं कर सकता था उस साहसगति (सुग्रीव) का राजाके

---

१ श्लेष–न०, ना०। २. एष श्लोक प०द० मुद्रित पुस्तकेषु "मत्तवारण" इति श्लोकात्पूर्ववर्ती।

३. श्लेष –य०, ना०।

केन ? विघातेन उपघातेन, कथम्भूतेन ? उद्धूतभूपरागेण उद्धूतः भूपस्य रागो येन तेन, कस्य ? साहसगतेः विकटसुग्रीवस्य, कथम्भूतस्य साहसगते ? सदागतेरप्रतिहतशासनस्य, कदा ? अन्यदाऽन्यस्मिन्नहनि। भारतीयः—शुचिर्ग्रीष्मस्त नृपतिं जरासन्धमाययौ। कथम्भूतः ? विलोलितगृहाश्रम विलोलिता' गृहा. मन्दिराण्याश्रमास्तपस्विना वसतय. मठादयो येन स, केन ? सदागतेर्वातस्य विघातेनोपप्लवेन, कथम्भूतेन ? उद्धूतभूपरागेण उद्धूत' भुवः परागो येन तेनोत्क्षिप्तभूमिरेणूत्करेणेत्यर्थ.। कथम्भूतस्य सदागते' ? साहसगतेः शीघ्र प्रवर्त्तमानस्य, अन्यदाऽन्यस्मिन्काले।

उत्सन्नेति। कथम्भूत' ? उत्सन्नगौरवकुल उत्सन्न गौरव यस्य तत्कुल यस्य स ध्वस्तमाहात्म्यवश, पुन कथम्भूत. ? पुन्नागाना प्रधानपुरुषाणामुल्लासेन आनन्देन वजित, पुन निरन्तरवितापात्माऽहोरात्रसन्तापात्मा पुन निजभूमिहिमोज्झित आत्मीयपृथिवीमाहात्म्यपरित्यक्तः। भारतीय —कथम्भूत शुचि. ? उत्सन्नगौरवकुल. उत्सन्ना. शुष्का गौरवकुला यत्र स, पुन पुन्नागोल्लासवजित, पुन्नागाना वृक्षविशेषाणामुल्लासेन पल्लवितकुसुमितभावलक्षणेन वर्जित दूरीकृत, पुनर्निरन्तरवितापात्माऽन्तान्निष्क्रान्तो निरन्त स चासौ रविताप सूर्यताप, तद्रूप आत्मा स्वरूप यस्य सः पुन. निजभूमहिमोज्झित निज स्वाभाविक भूमा बाहुल्य यस्य तन्निजभूम निजभूम च तद्धिम निजभूमहिम तेनोज्झित उत्सृष्ट., तस्य विश्वस्मिन् सन्तापविधायिस्वरूपत्वात्।

येनेत्यादि—कथम्भूतो राजा ? आलक्षितोदय आलक्षित उदयो यस्य स। कथम् ? किञ्चित्स्वल्प यथा, केन कृत्वा ? श्रीवृक्षमात्रेण श्रीवृक्षो नाम दक्षिणस्तनोपरि शुभलाञ्छनविशेषः श्रीवृक्ष एव मात्र परिमाण श्रीवृक्षमात्रस्तेन, येन श्रीवृक्षमात्रेण मुक्ता परित्यक्ता, का ? श्री लक्ष्मी., कथम्भूता ? उद्धता उल्वणा पुन फलसङ्घातपत्रजा फलाना भोगोपभोगलक्षणाना सङ्घात. फलसङ्घातः फलसम्पत्ति., पत्राणि गजतुरगादीनि तेभ्यो जाता, अथवा येनोद्धताऽतिशयेन विध्वस्ता, का ? श्री शोभा, कथम्भूता ? मुक्ताफलसङ्घातपत्रजा मुक्ताफलाना सङ्घो यत्र तन्मुक्ताफलसङ्घ मुक्ताफलसङ्घञ्च तदातपत्रञ्च मुक्ताफलसङ्घातपत्र तस्माज्जाता। भारतीय —कथम्भूत शुचि. ? किञ्चिदालक्षितोदय. किञ्चिदालक्षित उदयो जन्म यस्य स., केन ? तेन श्रीवृक्षमात्रेण पिप्पलवृक्षपरिमाणेन, येन श्रीवृक्षमात्रेण मुक्ता, का ? श्री शोभा, कथम्भूता ? उद्धतोत्कटा, पुन फलसङ्घातपत्रजा फलवृन्दपल्लवजा।

उद्गिरन्नित्यादि—सुग्रीवो राममाययौ। कथम् ? अभ्यक् सम्मुखम्, कथम्भूतम् ? दमाकुल दण्डनीतिव्यग्र पुन अपेतदारम् अपहृतकलत्रम्, कथम्भूत सुग्रीव ? शुचिरकुटिल. किं कुर्वन्निव ? सन्तापमुद्गिरन्निव वमन्निव। भारतीय.—शुचि जरासन्धमाययौ सन्तापमुद्गिरन्निव। कथम्भूत सन्तापम् ? अभ्यग्रामन्दमभ्यग्रश्चासावमन्दश्च तम् अभिनववेगम्, कथम्भूतम् ? आकुल व्यग्र पुन' सुग्रीवोपेतदार सुग्रीवाभिरुपेता. दारा कलत्राणि यस्य तम्[1] ॥११-१४॥

---

अकस्मात् उत्पन्न क्रोधके द्वारा विनाश होनेपर गृहस्थाश्रमसे उदासीन अपने वंशकी गरिमासे हीन, श्रेष्ठ पुरुषोंकी सेवा संगतिसे रहित, दिनरात मन ही मन जलता, अपने ही राज्यमें प्रभावहीन सूचित जिसके द्वारा लक्ष्मी, विपुल भोगोपभोग, गजतुरग, आदि रूप होती है उस अकेले श्रीवृक्ष (दक्षिण स्तनपरके चिह्न) के द्वारा ही जिसके प्रतापका कुछ कुछ आभास मिलता था वह शुद्धाचार-युक्त सुग्रीव, आत्मसतापको उगलता हुआ सा दण्डनीतिकी योजनामें लीन, पत्नीसे बिछुड़े राजा रामके सामने एक दिन उपस्थित हुआ था।

अत्यन्त तीव्रगति वायुके विरूप हो जाने तथा उड़ती हुई धूलके कारण गृहों तथा आश्रमोंको व्याकुल करता गौर वकुलादि पुष्प फलोंका विनाशक, पुन्नागादि वृक्षोंके विकास हीन, सर्वदा गर्मी ही गर्मी फैलाता, अपने प्रतापसे शीतका उन्मूलक, फलसमूह तथा पत्रोंकी शोभाके विस्तारक केवल पीपलके वृक्षके द्वारा ही जिसके प्रतापका कुछ आभास मिलता है ऐसा ग्रीष्म काल अभिनव तथा उग्र उष्णताका वमन करता हुआ सुन्दर ग्रीवाधारिणी स्त्रियोंसे घिरे राजा जरासंधके सम्मुख आया था ॥ ११-१४ ॥

---

१ श्लेप —व०, ना०।

कदाचिदिति—स राम' क्षण मुहूर्त्तं सुमित्रात्मजादिभिः लक्ष्मणविराधिताद्यैरुपरुद्ध आवृत्त. सन् तस्थौ स्थितः, कथम्भूतः ? अधिष्ठितः आरूढ , कम् ? तुरङ्गमश्वम्। कथम्भूतम् ? कृतनेपथ्य विहितभूषणम्।

भारतीयः—सुमित्रात्मजादिभिः सुमित्राः शोभनानि मित्राणि येषा ते, ते च आत्मजादयश्च तैरुपरुद्धः। शेप समम्[1] ॥८॥

**कल्याणनिक्कणा वीणा श्रुती नृत्यं विलोचने।**
**हरिचन्दनमप्यङ्गं तानि तस्य न पस्पृशुः ॥९॥**

कल्याणेति—कल्याणनिक्कणा वीणा तस्य नरेन्द्रस्य श्रुती कर्णौ तथा नृत्य विलोचने, तथा हरिचन्दनम् अङ्गम् इत्थ तानि वस्तूनि न पस्पृशु. ॥९॥

**प्रौढे मन्त्रिणि तद्राज्यं प्राज्यं क्षिप्त्वा विराधिते।**
**भोगेषु विरतोऽरातिघातदीक्षामुपाददे ॥१०॥**

प्रौढ इति—भोगेषु ताम्बूलमाल्यादिषु विरतो विरक्तो रामोऽरातिघातदीक्षाम् उपाददेऽङ्गीचकार। किं कृत्वा ? तद्राज्य पातालल्ङ्काया राज्य विराधिते चन्द्रोदरपुत्रे क्षिप्त्वा, कथम्भूते ? प्रौढे अजय्ये, पुनः मन्त्रिणि हेयोपादेयतत्त्वविवेचके, कथम्भूत राज्यम् ? प्राज्य सर्वाङ्गपरिपूर्णम्। जरासन्धपक्षे–अविराधिते अविरोधिते[2] ॥१०॥

**अन्यदा साहसगतेर्विघातेन सदागतेः।**
**उद्धूतभूपरागेण विलोलितगृहाश्रमः ॥११॥**
**उत्सन्नगौरवकुलः पुंनागोल्लासवर्जितः।**
**निरन्तरवितापात्मा निजभूमहिमोज्झितः ॥१२॥**
**येन श्रीरुद्धृता मुक्ताफलसङ्घातपत्रजा।**
**तेन श्रीवृक्षमात्रेण किञ्चिदालक्षितोदयः ॥१३॥**
**उद्गिरन्निव सन्तापमभ्यग्रामन्दमाकुलम्।**
**सुग्रीवोपेतदारं तं नृपतिं शुचिरायपौ ॥१४॥**

अन्यदेति—चतुष्कुलकेन व्याख्यास्याम.। सुग्रीवो नाम विद्याधरचक्रवर्ती त प्रसिद्ध नृपति रामम् आययावागत., कथम्भूत ? विलोलितगृहाश्रम. विलोलित. परित्याजित. गृहाश्रमो गृहस्थधर्मो यस्य स,

---

कभी-कभी राम सुसज्जित घोड़ेपर (सीताजीको खोजनेके लिए) चढ़ते थे तो सुमित्राके पुत्र लक्ष्मणजी, भील आदिके द्वारा रोके जानेपर क्षण भरके लिए रुक जाते थे। [सुन्दर वेश-भूषायुक्त रंगस्थलीमें बैठा जरासंध भी हितैषी मित्रों और पुत्रादिसे घिर जानेपर क्षण भरके लिए शान्त होता था] ॥ ८ ॥

आनन्ददायक ध्वनि करती वीणाका राग इनके कानतक न पहुँचता था, नृत्य आँखोंको न रुचता था और हरिचन्दनका लेप भी उसके शरीरको न छूता था ॥ ९ ॥

विलासादिसे रिक्त रामने वयस्क अथवा अनुभवी, मंत्र विचारमे दक्ष, चन्द्रोदरके पुत्रको शत्रु रावणका सर्वाङ्गपूर्ण लंकाका राज्य देकर प्रतिज्ञा कर ली थी। [जरासंधने भी अनुकूल गामी, गम्भीर तथा मंत्रीको द्वारकाका समृद्ध राज्य देकर शत्रुभूत नारायणके घातकी प्रतिज्ञाकी पूर्तिके लिए ताम्बूलादि छोड़ दिये थे] ॥ १० ॥

जिसका कोई अवरोध नहीं कर सकता था उस साहसगति (सुग्रीव) का राजाके

१ श्लेप–च०, ना०। २. एप श्लोक प०द० मुद्रित पुस्तकेषु "मत्तवारण" इति श्लोकात्पूर्ववर्ती।
३ श्लेप.–च०, ना०।

केन ? विघातेन उपघातेन, कथम्भूतेन ? उद्धूतभूपरागेण उद्धूत. भूपस्य रागो येन तेन, कस्य ? साहसगते' विकटसुग्रीवस्य, कथम्भूतस्य साहसगते ? सदागतेरप्रतिहतशासनस्य, कदा ? अन्यदाऽन्यस्मिन्नहनि। भारतीय'–शुचिर्ग्रीष्मस्त नृपतिं जरासन्धमाययौ। कथम्भूतः ? विलोलितगृहाश्रम विलोलिताः गृहा मन्दिराण्याश्रमास्तपस्विना वसतय. मठादयो येन स, केन ? सदागतेर्वातस्य विघातेनोपप्लवेन, कथम्भूतेन ? उद्धूतभूपरागेण उद्धूत भुव परागो येन तेनोत्क्षिप्तभूमिरेणूत्करेणेत्यर्थ.। कथम्भूतस्य सदागते' ? साहसगते शीघ्र प्रवर्त्तमानस्य, अन्यदाऽन्यस्मिन्काले।

उत्सन्नेति। कथम्भूत. ? उत्सन्नगौरवकुल उत्सन्न गौरव यस्य तत्कुल यस्य स ध्वस्तमाहात्म्यवश, पुन कथम्भूत. ? पुन्नागाना प्रधानपुरुषाणामुल्लासेन आनन्देन वर्जित, पुन निरन्तरवितापात्माऽहोरात्रसन्तापात्मा पुन निजभूमिहिमोज्झित आत्मीयपृथिवीमाहात्म्यपरित्यक्तः। भारतीय–कथम्भूत शुचि. ? उत्सन्नगौरवकुल उत्सन्ना. शुष्का गौरवकुला यत्र स, पुन पुन्नागोल्लासवर्जित, पुन्नागाना वृक्षविशेषाणामुल्लासेन पल्लवितकुसुमितभावलक्षणेन वर्जित दूरीकृत, पुनर्निरन्तरवितापात्माऽन्तान्निष्क्रान्तो निरन्त स चासौ रवितापः सूर्यताप, तद्रूप आत्मा स्वरूप यस्य सः पुन. निजभूमहिमोज्झित निज स्वाभाविक भूमा बाहुल्य यस्य तन्निजभूम निजभूम च तद्धिम निजभूमहिम तेनोज्झित उत्सृष्ट, तस्य विश्वस्मिन् सन्तापविधायिस्वरूपत्वात्।

येनेत्यादि–कथम्भूतो राजा ? आलक्षितोदय आलक्षित उदयो यस्य स.। कथम् ? किञ्चित्स्वल्प यथा, येन कृत्वा ? श्रीवृक्षमात्रेण श्रीवृक्षो नाम दक्षिणस्तनोपरि शुभलाञ्छनविशेषः श्रीवृक्ष एव मात्र परिमाण श्रीवृक्षमात्रस्तेन, येन श्रीवृक्षमात्रेण मुक्ता परित्यक्ता, का ? श्री लक्ष्मी., कथम्भूता ? उद्धता उल्वणा पुन फलसङ्घातपत्रजा फलाना भोगोपभोगलक्षणाना सङ्घात फलसङ्घात फलसम्पत्ति, पत्राणि गजतुरगादीनि तेभ्यो जाता, अथवा येनोद्धताऽतिशयेन विध्वस्ता, का ? श्री शोभा, कथम्भूता ? मुक्ताफलसङ्घातपत्रजा मुक्ताफलाना सङ्घो यत्र तन्मुक्ताफलसङ्घ मुक्ताफलसङ्घञ्च तदातपत्रञ्च मुक्ताफलसङ्घातपत्र तस्माज्जाता। भारतीय–कथम्भूत शुचि. ? किञ्चिदालक्षितोदय. किञ्चिदालक्षित उदयो जन्म यस्य स., केन ? तेन श्रीवृक्षमात्रेण पिप्पलवृक्षपरिमाणेन, येन श्रीवृक्षमात्रेण मुक्ता, का ? श्री शोभा, कथम्भूता ? उद्धतोत्कटा, पुन फलसङ्घातपत्रजा फलवृन्दपल्लवजा।

उद्गिरन्नित्यादि–सुग्रीवो राममाययौ। कथम् ? अभ्यक् सम्मुखम्, कथम्भूतम् ? दमाकुल दण्डनीतिव्यग्र पुन अपेतदारम् अपहृतकलत्रम्, कथम्भूत' सुग्रीव ? शुचिरकुटिल. किं कुर्वन्निव ? सन्तापमुद्गिरन्निव वमन्निव। भारतीय'–शुचि जरासन्धमाययौ सन्तापमुद्गिरन्निव। कथम्भूत सन्तापम् ? अभ्यग्रामन्दमभ्यग्रश्चासावमन्दश्च तम् अभिनववेगम्, कथम्भूतम् ? आकुल व्यग्र पुन सुग्रीवोपेतदार सुग्रीवाभिरुपेता दारा कलत्राणि यस्य तम्[1] ॥११-१४॥

---

अकस्मात् उत्पन्न क्रोधके द्वारा विनाश होनेपर गृहस्थाश्रमसे उदासीन अपने वंशकी गरिमासे हीन, श्रेष्ठ पुरुषोंकी सेवा संगतिसे रहित, दिनरात मन ही मन जलता, अपने ही राज्यमें प्रभावहीन सूचित जिसके द्वारा लक्ष्मी, विपुल भोगोपभोग, गजतुरंग, आदि रूप होती है उस अकेले श्रीवृक्ष (दक्षिण स्तनपरके चिह्न) के द्वारा ही जिसके प्रतापका कुछ कुछ आभास मिलता था वह शुद्धाचार-युक्त सुग्रीव, आत्मसतापको उगलता हुआ सा दण्डनीतिकी योजनामें लीन, पत्नीसे बिछुड़े राजा रामके सामने एक दिन उपस्थित हुआ था।

अत्यन्त तीव्रगति वायुके विरूप हो जाने तथा उड़ती हुई धूलके कारण गृहों तथा आश्रमोंको व्याकुल करता गौर वकुलादि पुष्प फलोंका विनाशक, पुन्नागादि वृक्षोंके विकास हीन, सर्वदा गर्मी ही गर्मी फैलाता, अपने प्रतापसे शीतका उन्मूलक, फलसमूह तथा पत्रोंकी शोभाके विस्तारक केवल पीपलके वृक्षके द्वारा ही जिसके प्रतापका कुछ आभास मिलता है ऐसा ग्रीष्म काल अभिनव तथा उग्र उष्णताका वमन करता हुआ सुन्दर ग्रीवाधारिणी स्त्रियोंसे घिरे राजा जरासधके सम्मुख आया था॥ ११-१४॥

---

1 श्लेप–व०, ना०।

कदाचिदिति–स रामः क्षण मुहूर्त्त सुमित्रात्मजादिभिः लक्ष्मणविराधिताद्यैरुपरुद्ध आवृत्तः सन् तस्थौ स्थित., कथम्भूत. ? अधिष्ठितः आरूढ., कम् ? तुरङ्गमश्वम्। कथम्भूतम् ? कृतनेपथ्य विहितभूषणम्।

भारतीयः–सुमित्रात्मजादिभिः सुमित्राः शोभनानि मित्राणि येषा ते, ते च आत्मजादयश्च तैरुपरुद्धः। शेष समम्[1] ॥८॥

**कल्याणनिक्कणा वीणा श्रुती नृत्यं विलोचने।**
**हरिचन्दनमप्यङ्गं तानि तस्य न पस्पृशुः ॥९॥**

कल्याणेति–कल्याणनिक्कणा वीणा तस्य नरेन्द्रस्य श्रुती कर्णौ तथा नृत्य विलोचने, तथा हरिचन्दनम् अङ्गम् इत्थ तानि वस्तूनि न पस्पृशु. ॥९॥

**प्रौढे मन्त्रिणि तद्राज्यं प्राज्यं क्षिप्त्वा विराधिते।**
**भोगेषु विरतोऽरातिघातदीक्षामुपाददे ॥१०॥**

प्रौढ इति–भोगेषु ताम्बूलमाल्यादिषु विरतो विरक्तो रामोऽरातिघातदीक्षाम् उपाददेऽङ्गीचकार। किं कृत्वा ? तद्राज्य पाताललङ्काया राज्य विराधिते चन्द्रोदरपुत्रे क्षिप्त्वा, कथम्भूते ? प्रौढे अजय्ये, पुन. मन्त्रिणि हेयोपादेयतत्त्वविवेचके, कथम्भूत राज्यम् ? प्राज्य सर्वाङ्गपरिपूर्णम्। जरासन्धपक्षे–अविराधिते अविरोधिते[2] ॥१०॥

**अन्यदा साहसगतेर्विघातेन सदागतेः।**
**उद्धूतभूपरागेण विलोलितगृहाश्रमः ॥११॥**
**उत्सन्नगौरवकुलः पुंनागोल्लासवर्जितः।**
**निरन्तरवितापात्मा निजभूमहिमोज्झितः ॥१२॥**
**येन श्रीरुद्धृता मुक्ताफलसञ्जातपत्रजा।**
**तेन श्रीवृक्षमात्रेण किञ्चिदालक्षितोदयः ॥१३॥**
**उद्गिरन्निव सन्तापमभ्यग्रामन्दमाकुलम्।**
**सुग्रीवोपेतदारं तं नृपतिं शुचिरायतौ ॥१४॥**

अन्यदेति–चतुष्कुलकेन व्याख्यास्याम.। सुग्रीवो नाम विद्याधरचक्रवर्ती त प्रसिद्ध नृपति रामम् आययावागत., कथम्भूत. ? विलोलितगृहाश्रम. विलोलित. परित्याजित. गृहाश्रमो गृहस्थधर्मो यस्य स,

---

कभी-कभी राम सुसज्जित घोड़ेपर ( सीताजीको खोजनेके लिए ) चढ़ते थे तो सुमित्राके पुत्र लक्ष्मणजी, भील आदिके द्वारा रोके जानेपर क्षण भरके लिए रुक जाते थे। [ सुन्दर वेश-भूषायुक्त रंगस्थलीमें बैठा जरासंध भी हितैषी मित्रों और पुत्रादिसे घिर जानेपर क्षण भरके लिए शान्त होता था ] ॥ ८ ॥

आनन्ददायक ध्वनि करती वीणाका राग इनके कानतक न पहुँचता था, नृत्य आँखोंको न रुचता था और हरिचन्दनका लेप भी उसके शरीरको न छूता था ॥ ९ ॥

विलासादिसे रिक्त रामने वयस्क अथवा अनुभवी, मंत्र विचारमें दक्ष, चन्द्रोदरके पुत्रको शत्रु रावणका सर्वाङ्गपूर्ण लंकाका राज्य देकर प्रतिज्ञा कर ली थी। [ जरासंधने भी अनुकूल गामी, गम्भीर तथा मंत्रीको द्वारकाका समृद्ध राज्य देकर शत्रुभूत नारायणके घातकी प्रतिज्ञाकी पूर्तिके लिए ताम्बूलादि छोड़ दिये थे ] ॥ १० ॥

जिसका कोई अवरोध नहीं कर सकता था उस साहसगति ( सुग्रीव ) का राजाके

1 श्लेष –र०, ना०। २ एष श्लोक प०द० मुद्रित पुस्तकेषु "मत्तवारण" इति श्लोकात्पूर्ववर्ती। ३. श्लेष –र०, ना०।

वैरानुबन्धात् भ्रुकुटिभङ्गुराननः, तस्मात् सम्प्रति पादयोः पत नम्रो भव । किं कृत्वा ? तं जरासन्धनामधेयं मम स्वामिनं समेत्य, कथम्भूतः सन् ? समाहिताञ्जलिः कुड्मलीकृतकरयुग्मः[1] ॥९॥

**अग्रतो भव शुभे पथि तिष्ठ प्रश्रयं भज जहीहि निजौजः ।**
**स्वामिनः श्रुतिपथातिथिभावं प्रापय प्रियजनैः प्रियवार्ताम् ॥१०॥**

अग्रत इति—अग्रतः पुरतो भव जायस्व, शुभे पथि मार्गे तिष्ठ आस्व, प्रश्रयं भज सेवस्व, तथा निजौजः स्वकीयं बलं स्तब्धत्वमित्यर्थः । जहीहि परित्यज । तथा चोक्तम्—"स्तब्धमुत्खनति किन्न मूलतः पादपं तटरुहं नदीरयः । चेतसः प्रणमनाद्विवर्द्धते चातुरेव कुरुते हि जीवितम् ॥" तथा प्रियवार्तां श्रुतिपथातिथिभावं कर्णपदवीविषयं गमय प्रापय, कैः कृत्वा ? प्रियजनैः सविश्रम्भैः लोकैः, कस्य ? स्वामिनः प्रभोः । प्रापयेति क्रियायाः मुख्यामुख्यतया कर्मद्वयं ज्ञेयम्[2] ॥१०॥

**वाचमेवमुपकर्ण्य कर्णयोः कर्कशामकृशयोः कशोपमाम् ।**
**क्षोभमब्धय इवाययुस्तया वात्यया सदसि वानराधिपाः ॥११॥**

वाचमिति—वानराधिपा सुग्रीवप्रभृतयः शाखामृगस्वामिनः क्षोभमाययुः प्रापुः । केन हेतुना ? तया वाचा, क्व ? सदसि सभायाम्, किं कृत्वा ? वाचमुपकर्ण्य श्रुत्वा, कथम् ? एवमुक्तप्रकारेण, कथम्भूतां वाचम् ? कर्कशां कठिनाम्, कयोः ? कर्णयोः, कथम्भूतयोः कर्णयोः ? अकृशयोरदुर्बलयोः न्याय्यात्मविषयग्रहणप्रवीणयोः, कथम्भूताम् ? कशोपमां चर्मवद्ध्रीसदृशीम् कर्कशत्वात्तस्याः, कया क इव क्षोभमाययुः ? वात्यया वातमण्डलेन अब्धय इव समुद्रा इव ।

भारतीय—नराधिपा बलभद्रादयो नरेन्द्रा अथवा नरोऽर्जुनोऽधिपो येषाम् अर्जुनस्वामिका नरेन्द्राः क्षोभमाययुः, कथम् ? यथा भवति । सदसि, उत्पातखड्गं, यथा भवति, क्रियाविशेषणमेतत् । अन्यत्प्राग्वत्[3] ॥११॥

**श्रीदशार्हकुलजाः किल केचिन्मानिनः स्थितिविघातभयेन ।**
**क्रोधवह्निशिखया स्वयमन्तर्दाहदूनहृदयाः क्लममापुः ॥१२॥**

श्रीति—किल अरुचौ लोकोक्तौ वा । आपुः प्रापुः, के ? केचिच्छ्रीदशार्हकुलजाः कुलजाताः कुलजाः श्रीदशामर्हन्ति श्रीदशार्हाः भाग्यावस्थोचिताः श्रीदशार्हाश्च ते कुलजाश्च श्रीदशार्हकुलजाः नलनीलादयः, कम् ? क्लमं खेदम्, केन हेतुना ? स्थितिविघातभयेन स्थानविध्वंसनभीत्या, कथम्भूताः सन्तः ? मानिनोऽहं

---

हाथ जोड़े हुए उसके पैरोंमें प्रणाम करो [ राज्य-लक्ष्मीरूपी पत्नीके विवाह ( श्रीवधू-उह ) भूत रणमें बँधे वैरके कारण भृकुटि चढ़ाकर मुखको टेढ़ा किये बैठा मेरा स्वामी जरासंध आप पर रुष्ट न हो जाय ] ॥९॥

आगे बढ़ो, कल्याण मार्ग पर आओ, विनम्रताको धारण करो, अपने प्रतापको छोड़ दो, प्रिय लोगोंके द्वारा सीता प्रियाके समाचारको मेरे स्वामी रामके कानोंका अतिथि बनाओ। [ जरासंधके प्रिय लोगोंके द्वारा अपनी अनुकूलताकी चर्चा उसके कानों तक पहुँचाओ ] ॥१०॥

कानोंके लिए अत्यन्त कठोर चाबुकके समान उक्त बातको सुपुष्ट कानोंसे सुनकर वानरवंशी राजा लोग राजसभामें उसी प्रकार क्षुभित हो उठे थे जिस प्रकार तूफानमें समुद्र हो जाता है [ अर्जुन आदि श्रेष्ठ राजा तलवार उठाकर ( सदसि ) क्षुब्ध हो पड़े थे ] ॥११॥

लक्ष्मीसम्पन्न मान्य कुलोंमें उत्पन्न अपनेको ही सब कुछ समझते नल-नील-आदि राजा अपनी मर्यादा और राज्यके विनाशके भयसे अपने आप ही दुःखी हो गये थे क्योंकि

---

१ रथोद्धतावृत्तम् । २ स्वागतावृत्तम् । ३ रथोद्धताछन्दसि ।

मिति प्रत्ययगोचराः पुनरन्तर्दाहदूनहृदया अन्तर्दाहकदर्थितचित्ताः क्रोधवह्निशिखया क्रोधज्वलनज्वालया, कथम् ? स्वयमात्मनेति ।

भारतीयः-किल आपुः प्रापुः, के ? केचित्कतिपयाः श्रीदशार्हकुलजा समुद्रविजयादयः अक्षोभः-तिमितसागरः हिमवान् विजयः-अचल आरणः पूरणः-अभिचन्द्र' वसुदेवश्चैते दशार्हाः. श्रियोपलक्षिताश्च ते दशार्हाश्च श्रीदशार्हास्तेषा कुले जाता बलभद्रादयः, कम् ? क्लम खेदम, केन ? स्थितिविघातभयेन स्थितिभङ्गशङ्कया स्वयमात्मीयप्रकृत्या । शेष समम्[1] ॥१२॥

**भोजकाः सुखनिबद्धसम्पदः स्वेदसेकनिचिताङ्गयष्टयः ।**
**केऽपि कोपशिखिशान्तये बभुर्मुक्तवारिकलशा इवोपरि ॥१३॥**

भोजका इति-केऽपि केचिन्नरेन्द्रा बभु भान्ति स्म, कथम्भूता इव ? कोपशिखिशान्तये क्रोधाग्निविध्यापनाय, उपरि मुक्तवारिकलशा इव गलितपयःकुम्भा इव, कथम्भूताः सन्तः ? स्वेदसेकनिचिताङ्गयष्टय. घर्मस्यन्दसम्भृतगात्रलता', पुन भोजका. भोक्तार', कस्या ? सुखनिबद्धसम्पद सुखेन निबद्धा चासौ सपत्तस्या सुखसयुक्तविभूते. ।

भारतीय -भोजकाः यादवा. । अशेष शेष समम् ॥१३॥

**आशुशुक्षणिरिवाशु स कश्चिद्भूपतिः प्रबलयादवजन्मा ।**
**प्रज्वलन्कपिशतान्वितकायः सह्यते स्म परुषो न रुषान्यैः ॥१४॥**

आश्विति-न सह्यते स्म सोढु शक्यते स्म । कः कर्मतापन्न ? स कश्चिद्भूपति. नरेन्द्र', कै कर्तृभि' ? अन्यैरपरै नरेन्द्रै., कथम्भूत' ? परुषो निष्ठुरः, कया ? प्रबलया प्रचुरया रुषा क्रोधेन, कथम्भूत' ? कपिशतान्वितकाय' वानरशतसयुक्तशरीर, किं कुर्वन् सन् सह्यते स्म ? प्रज्वलन् दैदीप्यमानः सन्, क इव ? दवजन्माऽरण्यभवः आशुशुक्षणिरग्निरिव, कथम् ? आशु शीघ्रम् ।

भारतीय -प्रबल्यादवजन्मा प्रबलश्चासौ यादवजन्मा प्रबल्यादवजन्मा स कश्चिद्भूपोऽन्यै न सह्यते स्म, कथम्भूतः ? परुष., किं कुर्वन् ? रुषा कोपेन आशुशुक्षणिरग्निरिव प्रज्वलन्, कथम्भूत. ? कपिशतान्वितकायः पिङ्गतायुक्तशरीर' ॥१४॥

**केऽपि वृष्णिकुलजाः समागताः साम्यमम्बुधिगभीरचेतसः ।**
**आसनानि न बभञ्जुरूर्जिताः क्वापि किं भुवि चलन्त्यभीरवः ॥१५॥**

केऽपीति-केऽपि नरेन्द्रा आसनानि न बभञ्जु. न भञ्जन्ति स्म । कथम्भूता ? कुलजा. कुलीना.,

---

'क्रोधरूपी अग्निकी ज्वालासे इनके मनमे ताप था जिससे इनके हृदय दुःखी थे [समुद्रविजय, आदि दश पूज्य कुलोंमें उत्पन्न, आत्मगौरवके पुजारी बलभद्र, आदि राजा परिस्थिति बिगड़नेकी आशंकासे खिन्न हो गये थे। क्रोध ] ॥१२॥

सुखोंसे संयुक्त सम्पत्तिके भोक्ता, पसीनाकी धारसे आर्द्र शरीर, दूसरे राजा लोग ऐसे लगते थे मानो क्रोधाग्निकी ज्वालाको बुझानेके लिए इनके ऊपर जलके कलश ही छोड़े गये हैं [सुखसे संचित सम्पत्तिके धारक दूसरे यादव लोग ऐसे ] ॥१३॥

जंगलमें लगी जलती हुई प्रबल दावाग्निके समान उग्र क्रोधके कारण अत्यन्त कठोर कोई राजा सैकड़ों वानरोंके द्वारा पकड़े जाने पर भी नहीं सम्हाला जा सकता था [अत्यन्त वीर यादव वंशमें उत्पन्न कोई अतिसाहसी राजा जलती अग्निकी ज्वालाके समान उत्तेजित हो रहा था, दूसरोंके द्वारा नहीं रोका जा सकता था तथा उसका सारा शरीर क्रोधसे पिंग हो गया था] ॥१४॥

इन्द्रकी समताको प्राप्त, समुद्रके समान गंभीर चित्त तथा प्रौढ़ तेजस्वी कुछ कुलीन

---

१ स्वागताछन्दसि ।

पुन. वृष्णि इन्द्रे साम्य सादृश्य समागता , पुन' अम्बुधिगभीरचेतस' अम्बुधिरिव गभीर चेतो येषा ते, पुन. ऊर्जिता प्रौढा । युक्तमेतत् किम् अभीरवो धीराश्चलन्ति ? अपि तु न चलन्तीत्यर्थ. । क ? क्वापि कस्या भुवीति ।

भारतीय –न बभञ्जु । के ? केऽपि वृष्णिकुलजा. दशार्हाणामाद्यो वृष्णिरन्धकवृष्णि , नामैकदेशो नाम्नि प्रवर्त्तते यथा भीमो भीमसेन., बलो बलभद्र , भामा सत्यभामा । वृष्णे. कुल वृष्णिकुल तस्मिञ्जाता वृष्णिकुलजा कानि ? आसनानि, कथम्भूता ? समागता , किम् ? साम्यम् , कस्य ? अम्बुधिगभीरचेतस., अम्बुधिरिव गभीर चेतो यस्य तस्य तथोक्तस्य सत्पुरुषस्येत्यर्थ । पुनरूर्जिता । सममितरत् ॥१५॥

**स्विन्नवान्स हरिचन्दनदेहः कम्पवाँश्चटुलपाटलदृष्टिः ।**
**क्षोभमात्मनि नियन्तुमशक्तः कामकातर इवाजनि भीमः ॥१६॥**

स्विन्नवानिति–हरिचन्दनदेह हरिचन्दनाख्यस्य वानरस्य देह शरीरम् , कथम्भूत ? अशक्तोऽसमर्थ , किं कर्तुम् ? आत्मनि विषये क्षोभ नियन्तु निरोद्धुम् , क इव ? कामकातर इव, कथम्भूत ? स्विन्नवान् स्वेदजलयुक्त पुन कम्पवान् , पुनश्चटुलपाटलदृष्टिश्चञ्चलकर्बुरलोचन., पुन भीमः भयानक ।

भारतीय –हरेश्चन्दनोपलक्षितो देह हरिचन्दनदेह आत्मनि क्षोभ नियन्तुमशक्त , अथवा भीमो वृकोदर आत्मनि क्षोभ नियन्तुमशक्तोऽजनि, कथम्भूतो भीम हरिचन्दनदेह हरिचन्दन प्रधानश्रीखण्ड. तद्गन्धो देहो यस्य स , अन्यत्समानार्थम् ॥१६॥

**अस्त्यशक्यमपि दूरमर्जुनः कार्यमित्युपरि धूनयञ्शिरः ।**
**गौरवेण गुरु गन्धमादनः सामजस्य निजसौष्ठवं ययौ ॥१७॥**

अस्तीति–गन्धमादनो नाम वानरराज निजसौष्ठव स्वकीयप्रौढिमान ययौ । कस्य ? सामजस्य गजेन्द्रस्य, केन कृत्वा ? गौरवेण गरिमा, किं कुर्वन् ? धूनयन् , किम् ? शिरो मस्तकम् , कथम् ? उपरि, कथम् ? इति हे दूरम दु खेन रम्यते क्रीड्यतेऽसौ दूरम तस्यामन्त्रण हे दूरम, अस्ति, किम् ? कार्यम् , कथम्भूतम् ? अशक्यम् । केषाम् ? नोऽस्माकम् , कथम्भूतमपि ? ऋज्वपि प्राञ्जलमपि पुनर्गुरु गरिष्ठम् ।

भारतीय –ययौ, कोऽसौ ? अर्जुन सव्यसाची, किम् ? निजसौष्ठवम् , कस्य ? सामजस्य, किं कुर्वन् ? शिर धूनयन् , कथम् ? उपरि, कथम् ? इति, किम् ? अस्ति, किम् ? कार्यम् , कथम्भूतम् ? अशक्यमपि पुन. दूरमपि पुन गुरु, कथम्भूतोऽर्जुनः ? गौरवेण गरिष्ठभावेन गन्धमादन पर्वतविशेष. ॥१७॥

---

राजपुत्रोंने अपने आसनोंको नहीं तोड़ा था । उचित ही है निर्भय वीर पुरुष पृथ्वीमें कभी भी अस्थिर नहीं होते हैं [ साम्य अथवा मानसिक संतुलनको प्राप्त, समुद्रके समान, अगाध चित्त तथा तेजस्वी अन्धकवृष्णिकुलमें उत्पन्न कुछ राजपुत्र आसनसे हिले भी न थे । उचित ] ॥ १५ ॥

उस चन्दन नामके वानरवशी राजा का शरीर पसीनेसे लथपथ था, कॉप रहा था, नेत्र लाल तथा चंचल थे । और अपने क्षोभको स्वयमेव न रोक सकनेके कारण वह भयंकर कामपीडित सा प्रतीत होता है । [ अपने क्रोधको सभॉलनेमें असमर्थ भीमके शरीरसे भी पसीना चल रहा था । चन्दन लेपसे युक्त उसका शरीर प्रायः कॉप रहा था, ऑखें लाल और चंचल हो उठी थीं । ] ॥ १६ ॥

हमारे लिए अशक्य कार्य भी सरल है इस प्रकारसे अपने मस्तकको झटकेसे हिलाता हुआ गम्भीर गन्धमादन नामक वानरराज ऐरावतके समान अपने गौरवके कारण स्वाभाविक प्रौढ़तासे आलोकित हो उठा था [ अपनी महत्ताके कारण गन्धमादन पर्वत तुल्य अर्जुनके लिए कोई कार्य अशक्य अथवा दूर अथवा गुरु होता है, इस विचारके निषेधमें शिर हिला दिया था फलतः वह सन्तुलनजन्य अपने प्राकृतिक सौन्दर्यको प्राप्त हुआ था ] ॥ १७ ॥

**योनलोभरमितः कदनेषु स्थेमवृत्तिरवहद्भुवि कीर्तिम् ।**
**पाण्डुमद्र्युचितमुन्नतिभावं सोऽवलम्ब्य नकुलप्रभुरस्थात् ॥१८॥**

य इति– नास्थादपि त्वस्थादेव स्थितवानेव । कः ? स नलः नलनामधेयो वानरराजः, किं कृत्वा ? पूर्वमवलम्ब्य समाश्रित्य, कम् ? उन्नतिभावम्, कथम्भूतम् ? अद्र्युचितम्, कथम्भूतो नलः ? कुलप्रभुः वंशस्वामी अथवा कु पृथ्वीं लान्ति आददते ये ते कुलाः राजानस्तेषां प्रभुः नरेन्द्रस्वामीत्यर्थः । पुनः कथम्भूतः ? स्थेमवृत्तिः स्थिरतरवृत्तिः यः अवहद् वहतिस्म । काम् ? कीर्त्तिम्, कथम्भूताम् ? पाण्डु शुभ्राम् । कस्याम् ? भुवि, कथम्भूतः सन् ? इतः गत, कथम् ? भरं तत्परताम्, केषु ? कदनेषु सङ्ग्रामेष्विति शेषः ।

भारतीयः–अस्थात् स्थितवान्, कोऽसौ ? स नकुल प्रभु चतुर्थपाण्डवः, किं कृत्वा ? पूर्वम् अवलम्ब्य, कम् ? उन्नतिभावम्, कथम्भूतम् ? पाण्डुमद्र्युचितम् पाण्डुः पिता, मद्री माता पाण्डुश्च मद्री च पाण्डुमद्र्यौ तयोरुचितं योग्यं पाण्डुमद्रीयोग्यम् ? कथम्भूत. ? स्थेमवृत्तिः स्थिरतरवृत्तिः, कथम्भूतो नलः ? अनल इवानलः स्वरूपेणाग्निरित्यर्थः । यः अवहद् कीर्त्तिम, कस्याम् ? भुवि, कथम्भूत सन् ? इतो गतः, कम् ? भरम्, केषु ? कदनेषु । अथवा न लोभरमित. न लोभे रमितो नलोभरमितोऽथवा न लोभे रमितं निश्चलत्वं यस्य स तथोक्तः अन्यत् सुगमम् ॥१८॥

**तं विलोक्य सहदेवविक्रमं बिभ्रतं कुमुदमायतायतिम् ।**
**जृम्भमाणमभिमानसंश्रयं तत्र तत्रसुरितस्ततो जनाः ॥१९॥**

तमिति–तत्रसुस्त्रस्ता. के ? जना., क्व ? तत्र सदसि, कथम् ? इतस्ततोऽत्र तत्र, किं कृत्वा ? पूर्वं विलोक्य, कम् ? तं लोकप्रसिद्धं कुमुदं कुमुदनामधेयं वानरराजम्, किं कुर्वाणम् ? सह युगपत्, देवविक्रमं सुरप्रतापं बिभ्रतं दधानम्, कथम्भूतम् ? आयतायतिं विस्तृतकीर्त्तिं पुनरभिमानसंश्रयं गर्वमन्दिरम्, किं कुर्वाणम् ? जृम्भमाणं प्रवर्तमानम् ।

भारतीय.–तत्र सदसि सहदेवो नाम पञ्चमपाण्डवो राजा तस्य विक्रमं प्रौढिं विलोक्य जनास्तत्रसुः, सहदेवविक्रमं किं कुर्वाणम् ? कुमुदं पृथ्वीहर्षं बिभ्रतम्, कथम्भूतं तम् ? आयतायतिमायताऽऽयतिर्यस्मात्त तथोक्तम्, अथवा कथम्भूता कुमुदम् ? आयतायतिमायताऽऽयतिर्यस्यास्ता दीर्घोत्तरफला लोकेभ्यश्चिरकालं यावल्लब्धप्रशंसामित्यर्थः । पुन. कथम्भूतम् ? अभिमानसंश्रयम्, किं कुर्वाणं सन्तम् ? जृम्भमाणं स्वेच्छया प्रवर्त्तमानम् ॥१९॥

**तं समुद्रविजयं प्रतापतः शूरतैकपरमञ्जनोद्भवम् ।**
**सुप्रतिष्ठितमवेक्ष्य लज्जितः सोऽखिलोऽभवदुपप्लुतो नृपः ॥२०॥**

तमिति–अभवदजनि, कोऽसौ ? स लोकविख्यातोऽखिलो नृप., किंविधोऽभवत् ? लज्जितस्त्रपावान्, किं कृत्वा ? अञ्जनोद्भवमञ्जनाया. सकाशादुद्भवो यस्य तं हनूमन्तम्, कथम्भूतम् ? रविजय रवेरिव जयो

---

जो राजा नल युद्धमें तत्परतामय हो जाता है, स्वभावसे स्थिर है, संसारमें विमल कीर्तिका स्वामी है । अपने वंशका प्रधान वह पर्वत सदृश उच्चताके भावको धारण करके क्या जमा नहीं रहा ? अर्थात् वह अडिग ही था [ जो स्वभावसे ही अग्नि है, युद्ध संचालनमें पारङ्गत है, अडिग प्रकृति है तथा विश्वमें विख्यात है वह नकुलराज अपने पिता पाण्डु और माता मद्रीके अनुरूप बड़प्पनको निभाता हुआ गम्भीर रूपसे बैठा रहा था । ] ॥ १८ ॥

सुग्रीवकी सभामें अकस्मात् ही देवोंके पराक्रमधारी, सुविस्तृत यशके स्वामी, अहंकारके आधार और आवेशसे टहलते उस कुमुद नामके राजाको देखकर इधर-उधरके लोग भयभीत हो गये थे । [ पृथ्वीके हर्षके विधायक, विशाल भावी पुण्यके स्वामी, आत्मगौरवके निधान, उस सहदेवके पराक्रमको तथा उसको यादव सभामें चंक्रमण करता देखकर सर्वत्र जनता भयभीत हो उठी थी ] ॥ १९ ॥

प्रतापमें सूर्यसे भी आगे, सदैव प्रसन्न, एकमात्र वीरताके कार्यमें लीन और सर्वत्र

यस्य तम्, कस्मात् ? प्रतापत, पुन शूरतैकपर वैरभावैकनिष्ठ क्षात्रधर्मपरिणतमित्यर्थ., पुन सुप्रतिष्ठितम्, कथम्भूतो नृप ? उपप्लुत उपद्रुत, पुन. समुत्सहर्ष. ।

भारतीय.—त समुद्रविजय नेमीश्वरजनकम् अवेक्ष्य स लज्जितोऽभवत् । कथम्भूतम् ? प्रतापात् शूरतैकपरम शूरताया एकाऽसाधारणा परोत्कृष्टा मा यस्य तम्, पुनर्जनोद्भव जनानामुद्भवो यस्मात् । शेपमशेष समम् ॥२०॥

**इत्यपायवदुपायवन्नयैरेकतश्चलितमन्यतः स्थिरम् ।**
**राजकार्यमिव राजपुत्रकं दुर्धरं सुधरमप्यजायत ॥२१॥**

इतीति—राजपुत्रक नरेन्द्रतनयसमूह दुर्द्धर दु खेन धर्त्तु शक्यमजायताऽभवत् । किमिव ? राज. कार्यमिव, कथम्भूत सत् ? एकतश्चलितमेकस्मिन्स्थाने चलम्, कै. ? अपायवन्नये पुनरन्यतोऽन्यस्मिन् स्थाने स्थिरम्, कै ? उपायवन्नयै सामवन्नीतिभि , कथम्भूतम् ? सुधर सुखेन धर्त्तु शक्यमपि ॥२१॥

**कोपरक्तकपिलालसदृष्टिस्तां सभां ननु चलाङ्गलशोभी ।**
**वारयन्निति स दूतगुणाढ्यं तं जगाद मृदुवानरराजः ॥२२॥**

कोपेति—नन्वहो जगाद उक्तवान् । कोऽसौ ? स वानरराज सुग्रीव , कम् ? त लक्ष्मणम्, कथम्भूतम् ? दूतगुणाढ्य दूतगुणा —मानित्वम्, धीरत्वम्, शुण्डीरत्वम् ( त्यागशौर्याभ्या विख्यातता शुण्डीरत्वमभिधीयते ), तेजस्वित्वम्, विक्रमित्वम्, वपुष्मत्त्वम्, नीतिमत्त्वम्, वाग्मित्वञ्चेत्यष्टौ दूतगुणा । दूतस्य गुणा. दूतगुणास्तैराढ्यस्तम्, तथा चोक्तम्—

"मानी धीरश्च शुण्डीरस्तेजस्वी विक्रमी तथा । वपुष्मान्नीतिमान् वाग्मी दूत स्यादष्टभिर्गुणैरिति" ॥

कथ जगाद ? इति वक्ष्यमाणप्रकारेण, किं कुर्वन् ? चला चपला ता सभा वारयन्निषेधयन्, कथम् ? मृदु श्रवणयो सुखदायकत्वात्सुकोमल यथा भवति, कथम्भूत ? गलशोभी मनोहरकण्ठ , पुन कोपरक्तकपिलालसदृष्टि कोपेन रक्ताश्च ते कपयश्च ते लालसा दृष्टिर्यस्य स ।

भारतीय'—ननु च स नरराज नरेन्द्र. जगाद । किमाख्य ? लाङ्गलशोभी बलभद्र , कम् ? त जरासन्धपुरुषम्, कथम्भूतम् ? दूतगुणाढ्य मृद्विति क्रियाविशेषणम् अथवा अमृदु कथम् ? इति वक्ष्यमाणप्रकारेण, वा इवार्थवाची, किं कुर्वन् ? ता सभा वारयन् निषेधयन् , कथम्भूत ? कोपरक्तकपिलालसदृष्टि रक्ता चासौ कपिला च सा चासावलसा च कोपेन रक्तकपिलालसा दृष्टिर्यस्य स तथोक्त. ॥२२॥

**अन्तरङ्गमनुभावमाकृतिः संयमो गुरुकुलं श्रुतं शमः ।**
**वागियं च तव तात सौष्ठवं साधु सेधयति मार्दवं क्षमा ॥२३॥**

---

सम्मानित उस अञ्जनीपुत्र हनूमान्को देखकर आतंकग्रस्त संसारप्रसिद्ध वे समस्त राजा लज्जित हो गये थे । [ जन अर्थात् जिन नेमिनाथके जनक शूरता में अद्वितीय तथा अग्रणी अपने प्रतापके कारण सर्वमान्य राजा समुद्रविजयको देखकर व्यर्थ ही उत्तेजित, वे सब राजा लजा गये थे । ] ॥ २० ॥

हानिकर नीतिके कारण एक ओरसे चंचल तो साधक नीतिके कारण स्थिर फलदायक राजकार्यके समान वानर-यादव सभामें दूसरी ओरसे एकत्रित राजाओंका समूह कष्टकर प्रतिरोध-द्वारा आरम्भ होकर भी सुसंयत अथवा अनुशासित हो गया था ॥ २१ ॥

क्रोधसे लाल वानर सेनाके द्वारा लालसापूर्वक देखे गये, मधुरकण्ठसे शोभित अर्थात् मृदुभाषी वानरवंशी राजा सुग्रीवने अपनी चंचल राजसभाको नियन्त्रित करते समान मान, धैर्य, आदि दूतके गुणोंसे युक्त लक्ष्मणको कोमलतासे कहा था । [क्रोधसे रक्त, जलती तथा एकटक दृष्टियुक्त मनुष्योंके स्वामी कृष्णने तथा लाङ्गलधारी बलरामने पूरी यादव-सभाको आवेशमें आनेसे रोकते हुए दूतगुणसम्पन्न जरासंधके दूतको कहा था । ] ॥ २२ ॥

अन्तरङ्गमिति–सेधयति, 'अत्र ज्ञानविषयत्वात्सेधयतेरात्व न स्यात् । ज्ञापयति का ? आकृतिः, कम् ? अनुभाव परिणामम्, कथम्भूतम् ? अन्तरङ्गम्, तथा सेधयति, कोऽसौ ? सयमः व्रतरक्षणलक्षणो धर्मः, किम् ? गुरुकुलम्, तथा सेधयति कः ? शम उपशम., किम् ? श्रुत शास्त्रम्, तथा च सेधयति, का ? इयं वाक् भारती, किम् ? तातसौष्ठव पितु. पाटवम्, कथम्भूतम् ? साधु मनोहारि । तथा सेधयति का ? क्षमा क्षान्ति, किम् ? मार्दव मृदुत्वम्, कस्य ? तव, अथवा हे तात पितः । अत्रैकत्र श्लाघाऽन्यत्र वक्रोक्तिरिति बोद्धव्यम् ॥२३॥

**रूपमेव तव शीलमुदारं स्थेयसी प्रकृतिमुन्नतिभावः ।**
**स्वामिभक्तिमुचितामनुरागः सूचयत्यनुनयं नयमार्गः ॥२४॥**

रूपमिति–सूचयति कथयति, किम् कर्तृ ? रूपमेव हि, किम् ? उदारमुत्कट शीलम् । तथोन्नतिभाव आदेय[1]त्व स्थेयसी स्थिरतरा प्रकृतिं स्वभाव सूचयति । तथाऽनुराग. स्वामिभक्तिं प्रभुसेवा सूचयति, कथम्भूताम् ? उचिता योग्या तथा नयमार्ग. नीतिमार्ग. तवानुनयमनुमनन सूचयति ॥२४॥

**वेलया विहितकार्यसाधनं धैर्यविक्रममगाधतां गुरुम् ।**
**बिभ्रतस्तव पयोनिधेरपि क्षोभमेकमपहाय नान्तरम् ॥२५॥**

वेलयेति–तव पयोनिधेरन्तर भेदो न विद्यते । किम् कृत्वा ? एक क्षोभमपहाय परित्यज्य, किम् कुर्वत· ? धैर्यविक्रम बिभ्रतो दधानस्य, धैर्यमन्तरङ्गावष्टम्भः, विक्रम. पराक्रमः, धैर्यञ्च विक्रमश्च धैर्यविक्रमम्, कथम्भूतम् ? विहित कार्य साधन यस्य तत्, कया ? वेलया कालकल्या च बिभ्रतः, काम् ? गुरुमगाधताम् ॥२५॥

**उन्नतोऽसि विशदोऽसि हिमानीगौरवं समुपयञ्छिशिरोऽसि ।**
**हन्त ते हिमवतश्च कथं वागर्हिता दहनवृत्तिरियं स्यात् ॥२६॥**

उन्नत इति–हन्त कष्ट स्यादियमसौ वाग्भारती कथम्भूता ? दहनवृत्ति दहनस्य ज्वलनस्येव वृत्तिर्वर्त्तन यस्या. सा सन्तापिकेत्यर्थ. । कथम्भूता सती ? अर्हिता पूजिता, कस्य ? ते तव, यद्यप्युन्नतोऽसि विशदोऽसि, हि स्फुटम्, कः ? त्व मानी, तथाऽसि, कथम्भूतः ? शिशिरोऽतीव्र., किं कुर्वन् ? समुपयन्नुपचिन्वन्, किम् ? गौरव गुरुत्वमिति ।

---

हे तात ! तुम्हारी यह आकृति ही मनके भावोंको बता रही है, आत्मनियन्त्रण महान् कुलको, शान्ति शास्त्र ज्ञानको तथा वचन शिष्टताको और सहिष्णुता कोमलताको भली भाँति प्रकट कर रही है [वक्रोक्तिके कारण—तुम्हारी आकृति कुभावोंको, असंयम बापके वंशको, उग्रता निरक्षरताको, भाषा अशिष्टताको और उग्रता अहंकारको प्रकट कर रहे हैं ] ॥ २३ ॥

आपका रंगरूप उदात्त स्वभावको, उदारता अथवा उच्च विचार दृढ़ प्रकृतिको, राजाके प्रति प्रेम स्वामिभक्तिको, यथायोग्य और नीतिपूर्वक आचरण विनम्रता अथवा अनुशासनके प्रख्यापक हैं [ वक्रोक्ति श्लोक २३ के समान पलटकर चलेगी ] ॥२४॥

महान् धैर्य, पराक्रम, गम्भीरता तथा समयसे अपना कार्य पूरा करनेकी प्रकृतिके धारक आप और समुद्रमें केवल क्षोभके सिवा और कोई अन्तर नहीं है [ समुद्र भी स्थिर, पशु-पक्षी संचार युक्त, गहरा तथा किनारेके द्वारा कार्य करता है । ] ॥२५॥

आप उन्नत हैं, निर्मल अथवा स्वच्छ हैं, बर्फके गौरवको भी नीचा दिखानेमें समर्थ शिशिर हैं । इस प्रकार परम शीतलताके धारक आपकी अग्निके समान यह भाषा कैसे

---

१ अदैन्यम्–द० ।

भारतीयः—अहो कथ वा कथमिव स्यात्, का ? इय दहनवृत्ति, कस्य ? हिमवतो हिमाचलस्य, कथम्भूता दहनवृत्ति ? गर्हिता निन्द्या यत्रप्यस्ति, क. ? उन्नत उत्तुङ्ग, तथाऽन्ति विशद, पुनरस्ति तथा शिशिर. शीतल, किं कुर्वन् ? हिमानीगौरव हिमसन्ततिगरिमाण समुपनन् । तुल्योपमा ॥२६॥

**संविधाय बहुमानमुच्चकैर्विप्रियं यदभिधीयते गिरा ।**
**अम्बु शीतमभिवृष्य चित्रया तद्वितप्यत इवोत्कटातपम् ॥२७॥**

सविधायेति—तद्वितप्यते । कया ? गिरा वाण्या, यदभिधीयत उच्यते, किम् ? विप्रिय दु खदम्, किं कृत्वा ? पूर्वं सविधाय सम्पाद्य, कम् ? बहुमान प्रचुरसत्कारम्, कथम् ? उच्चैरतिशयेन । उपमार्थ प्रकस्यते—इव यथा तद्वितप्यते, कया ? चित्रया नक्षत्रेण, कथ यथा भवति ? उत्कटातपमुल्वणोष्ण तथा तद्विधीयते, किम् ? अम्बु जल कथम्भूतम् ? शीत शीतलम्, किं कृत्वा ? पूर्वमभिवृष्य सित्त्वा । अत्रोपमालम्भो[1] दर्शित ॥२७॥

**ज्ञायते च भवतः पतिरुच्चैर्विक्रमेण भुवनं विजिगीषुः ।**
**देशकालबलबोधपरीक्षा पौरुषेऽपि ननु सा परिचिन्त्या ॥२८॥**

ज्ञायत इति—ज्ञायते बुध्यते, क. ? पति. प्रभु, कस्य ? भवत, कथम्भूत ? विक्रमेण भुवन जगत् विजिगीषु विजेतुमिच्छु, कथम् ? उच्चैरतिशयेन, नन्वहो परिचिन्त्या चित्ते वितर्क्या, का ? सा देशकालबल बोधपरीक्षा, क्व सति ? पौरुषेऽपि विक्रमेऽपि ॥२८॥

**पञ्जरे किल करोति किं शुकः पक्षवानपि विदेशमागतः ।**
**किं शुचावसमये शिखावलः कोकिलश्च मधुरं स कूजति ॥२९॥**

पञ्जर इति—किल लोकोक्तौ । किं करोति ? अपि तु न किमपि, क ? शुक कीर., क्व ? पञ्जरे, कथम्भूतोऽपि ? पक्षवानपि, कथम्भूत सन् ? विदेशमागत, तथा शुचौ घर्मे शिखावलो मयूर मधुर यथा तथा किं कूजति शब्दायते ? अपि तु न । मेघोन्नतिकालस्तु कूजनहेतुर्नेतरो धर्म., तस्य तत्कूजनहेतुत्वाभावात् । चकारेण समुच्चयार्थो गम्यते । कोकिल. पिकश्च, किं मधुर सुकोमलम् असमये मेघोन्नतिकाले कूजति ? अपि तु न । चैत्रकालस्तु कूजनहेतुस्तथा नेतरो मेघोन्नतिकाल, तस्य तत्कूजनहेतुत्वाभावात् । अत्र तेषामेव देशकालबलबोधानामन्वयव्यतिरेकौ दर्शितौ ॥२९॥

**देशकालकलया बलहीनः किं व्यवस्यति युतोऽपि शृगालः ।**
**स त्रयेण सहितश्च्युतबोधः किं न याति शरभस्तनुभङ्गम् ॥३०॥**

---

अभिनन्दनीय होगी ? [ उन्नत, धवल आत्मगौरवके निर्वाहकर्त्ता, स्वाभिमानी वर्फके धारक शीतल हिमालयकी निन्दनीय दाहक प्रकृति कैसे हो गयी ? ] ॥२६॥

सर्वथा सम्मान करनेके बाद जो वाणीके द्वारा अनिष्ट प्रस्ताव आपके द्वारा किया जाता है वह पहिले शीतल जलकी मूसलाधार वृष्टि करनेके उपरान्त चित्रा नक्षत्रके द्वारा भयकर आतप करनेके समान है ॥२७॥

आपका स्वामी राम अथवा जरासध प्रबल पराक्रमके द्वारा विश्वकी विजय करनेके लिए आतुर है ऐसा प्रतीत होता है । किन्तु पुरुषार्थ होनेपर भी देश, समय, शत्रुबल तथा आत्मबलका विवेक और आक्रमणके पहिले समस्त बातोंकी परीक्षा भी तो विचारणीय है ॥२८॥

विदेशमें आकर पिंजड़ेमें फँसा तोता पखे रहनेपर भी क्या करता है ? कुछ भी नहीं । क्या गर्मीमें मयूर और असमय शीतकालादिमें कोकिल मधुर शब्द करता है ? ॥२९॥

---

1. अत्रोपमोपालम्भो दर्शित –ज०, ना० ।

देशेति– किं व्यवस्यति किमुत्सहते ? अपि तु न । कोऽसौ ? शृगालः क्रोष्टा, कीदृशः ? बलहीनः, किं विशिष्टोऽपि ? देशकालकलया युतोऽपि । अत्र बलव्यतिरेको दर्शितः । स शरभोऽष्टापदः, किं तनुभङ्ग शरीरनाशं न याति न गच्छति ? अपि तु यात्येव । कथम्भूतः ? च्युतबोधः परित्यक्तज्ञानः, कथम्भूतः ? देशकालबलत्रयेण सहितोऽपि । अत्र बोधव्यतिरेक उक्तः ॥३०॥

**बुद्धिसत्त्वबलभाग्ययोग्यतां सर्वतः प्रकृतिरागमात्मनः ।**
**यः परस्य च न चिन्तयत्ययं यातृयेयसमये विनश्यति ॥३१॥**

बुद्धीति–विनश्यति, कोऽसौ ? सोऽयम् , क्व ? यातृयेयसमये यदा याता गन्ता, येयो गम्यः शत्रुः, परप्रेरणमन्तरेण प्रयाणोद्योगं करिष्यते, समयो यदा येयो यातव्यः शत्रुस्तस्मिन्काले गन्तृगम्यसमये यो बुद्धि-सत्त्वबलभाग्ययोग्यतां बुद्धिर्हिताहितविवेचनी वाक् , सत्त्वमन्तरङ्ग तेज , बलं सैन्यम् , भाग्यं दैवम् , योग्यता-सामग्री । बुद्धिश्च सत्त्वञ्च बलञ्च भाग्यञ्च बुद्धिसत्त्वबलभाग्यानि तेषां योग्यता सा तां न चिन्तयति न जानाति, कथम् ? सर्वतः सामस्त्येन, तथा यो न चिन्तयति, कम् ? प्रकृतिरागं प्रकृतयः स्वाम्यमात्यादयः सप्तप्रकृतीनामनुरागञ्च, कस्य ? परस्य शत्रोरात्मनश्चेति ॥३१॥

**इत्युपायमविचार्य तवार्यः केवलं बलवतीरितकोपः ।**
**विश्रुतः समरणोद्यमचेताः मामृजुप्रकृतिकः प्रतिभाति ॥३२॥**

इतीति–भाति । कोऽसौ ? अर्यः स्वामी, कस्य ? तव, कथम्भूतो भाति ? ऋजुप्रकृतिकः प्राञ्जलस्वभावः, कं प्रति ? मां प्रति, कथम्भूतः ? इति उक्तप्रकारेण उपायम् अविचार्य बलवति बलिष्ठे रावणे ईरितकोपः ईरितः कोपो येन सः, कथम् ? केवलम् , कथम्भूतः ? विश्रुतो विख्यातः पुनः समरणोद्यमचेताः समं युगपत् रणोद्यमे चेतो यस्य स तथोक्तः ।

भारतीयः—भाति ? कः ? सोऽर्यः स्वामी, कस्यः ? तव, कथम्भूतो भाति ? केवलम् ऋजुप्रकृतिकः कम्प्रति ? माम्प्रति, पुनः कथम्भूतस्तत्कार्ये ? बलवति बलोऽस्यास्तीति बलवांस्तस्मिन् बलभद्रेण युक्ते कृष्णे, ईरितकोपः, किं कृत्वा ? पूर्वमविचार्य, कम् ? उपायम्, कथम् ? इत्युक्तप्रकारेण पुनः कथम्भूतः ? विश्रुतः विगतं श्रुतं यस्य स हेयोपादेयविकलः पुनर्मरणोद्यमचेताः मरणोद्यमे चेतो यस्य सः मरणोद्यमयुक्त इति शेषः ॥३२॥

**दृष्टवान्न स दशास्यतेजसो भूभृतः खलु निरुन्धतीं दिशः ।**
**तिग्मतां यदुदयानुबन्धिनस्तद्व्यवस्यति वृथा तवाधिपः ॥३३॥**

---

देश, काल तथा चातुरीमें पूर्ण शृगाल क्या साहस कर सकता है ? यदि उसके शरीर-में ही शक्ति न हो । तथा देश काल और बलकी अनुकूलतासे पुष्ट सिंह भी विवेक-विमुख होकर आक्रमण करके अपने शरीरको क्षतविक्षत नहीं करता है ? ॥३०॥

जो अपनी अथवा शत्रुके हिताहित विवेक, आत्मबल, सेना, भाग्य और प्रजा अधिकारियों और साधन सामग्रीका सब दृष्टियोंसे विचार नहीं करता है वह आक्रम्यके ऊपर आक्रमण करते ही विनष्ट हो जाता है ॥३१॥

हे लक्ष्मण ! आपका ज्येष्ठ भ्राता उक्त प्रकारसे उपायोंका विचार बिना किये ही अत्यन्त बलवान् रावणके विरुद्ध कुपित होकर एकाएक रण करनेका संकल्प करता है अतएव वह मुझे शुद्ध शास्त्रज्ञ (पंडित) और सीधे स्वभावका प्रतीत होता है । [ हे दूत ! नीतिशास्त्र-ज्ञान शून्य तुम्हारा स्वामी जरासंध उक्त प्रकारसे उपायोंका सांगोपांग विचार बिना किये ही बलराम युक्त मुझपर जो क्रोध करता है वह उसका मरनेके प्रयत्नका ही विचार है । मुझे वह अविवेकी ही मालूम देता है ] ॥३२॥

दृष्टवानिति–[द्वि°] तत्तस्माद्वृथैवमेव व्यवस्यत्युत्सहते । कोऽसौ ? अधिपः स्वामी, कस्य ? तव, यद् यस्मात्कारणान्न दृष्टवान्नावलोकितवान्, क ? स तवाधिपो राम, काम् ? दशास्यतेजसो रावणप्रतापस्य तिग्मता तीव्रताम् । कथम्भूतस्य ? भूभृतो पुन पृथिवीं बिभर्तीति भूभृत्तस्यावने पोषकस्येत्यर्थ ? कथम्भूता तिग्मताम् ? दिश खलु निश्चयेन निरुन्धतीं प्रच्छादयन्तीम्, कथम्भूतस्य दशास्यतेजस ? उदयानुबन्धिन उदयमनुबध्नातीत्येवशीलस्य ।

भारतीय –अस्य भूभृतो नारायणस्य तेजसस्तीव्रता न दृष्टवान् । कीदृशीं तिग्मताम् ? दश दिशो निरुन्धतीम् । कथम्भूतस्य नारायणस्य ? यदुदयानुबन्धिनो यदूना यादवाना दया करुणामनुबध्नातीत्येवशील स्तस्य । शेष समम् ॥३३॥

**अन्तकोऽपि वरुणोऽपि कुबेरो वासवोऽपि स यमेव भयार्तः ।**
**पश्यति प्रकुपितं प्रहरन्तं स्वप्नदर्शनकृपाणतलेषु ॥३४॥**

अन्तकोऽपीति–पश्यति निरीक्षते । क कर्ता ? स लोकप्रसिद्धोऽन्तकोऽपि दक्षिणाशाऽधिपोऽपि, तथा वरुणोऽपि पाशपाणिरपि, तथा कुबेरोऽपि धनदोऽपि वासवोऽपि वज्रपाणिरपि, कम् ? यमेव रावण नारायणश्चैव, किं कुर्वन्त सन्तम् ? प्रहरन्त पुन प्रकुपितम्, केषु विषयेषु पश्यति ? स्वप्नदर्शनकृपाणतलेषु स्वप्नदर्शनेषु खड्गतलेषु च, तथा कथम्भूत सन् पश्यति ? भयार्त्तो भयपीडित अत्रान्तकादीना साहचर्यादन्येषा नैर्ऋतादीना चतुर्णां ग्रहणमिति ॥३४॥

**योऽन्यमर्यमणमप्यतिक्रमप्रक्रमं न सहते प्रतापिनम् ।**
**नागमन्तमनयन्महोद्धतिं यो जगन्नयबलेन तायते ॥३५॥**

य इति–न सहते न सोढु शक्नोति । कोऽसौ ? यो रावणः, कम् ? अन्यमर्यमण सूर्यम्, कथम्भूतमपि ? प्रतापिनमपि, पुन कथम्भूत सन्तम् ? अतिक्रमप्रक्रममतिक्रम प्रक्रमत इत्यतिक्रमप्रक्रमस्तम् । अथवाऽतिक्रमस्य प्रक्रमो यस्य स तथोक्तस्त जगतामतिक्रम प्रक्रममाणमित्यर्थ. । तथा यो रावणो नानयन्न प्रापयत् । कम् ? तमागम विद्वज्जनप्रसिद्धा राजविद्याम्, का नानयत् ? महोद्धति परमोत्कर्षम्, तथा यो रावणो नानयत्, कम् ? त चार्यमण सूर्यम्, काम् ? महोद्धृति तीव्रत्वम्, तथा यो रावणो न तायते न पालयति, किं तत् ? जगत्, केन ? नयबलेन नीतिसामर्थ्येन ।

भारतीय –यो नारायणो न सहते, कम् ? अन्यमर्यमणम्, कथम्भूतम् ? प्रतापिनम्, पुन. कथम्भूतम् ? अतिक्रमप्रक्रमम्, तथा यो नारायणोऽनयत्, कम् ? नाग कुवलयपीडाख्य दन्तिदानवम्, अथवा कालियाख्य फणीन्द्रम्, कम् ? अन्त विनाशम्, कथम्भूत सन्त नागम् ? महोद्धतिं महत्युद्धतिर्यस्य त गर्विष्ठमित्यर्थ । तथा यो नारायणस्तायते, किं तत् ? जगत्, केन ? नयबलेनेति ॥३५॥

---

पृथ्वी भरके शासक अभ्युदयके मार्गपर अग्रसर दशमुख रावणके तेजकी दिशाओंको व्याप्त करती प्रखरताको आपके राजा रामने नहीं विचारा है इसीलिए वह व्यर्थ प्रयास कर रहा है । [ यादवोंकी दयासे प्रेरित इस पृथ्वीपालक राजा कृष्णके दशों दिशाओंको आक्रान्त करनेवाले प्रतापकी तीक्ष्णताको वह तुम्हारा राजा जरासध नहीं देखता है और व्यर्थ प्रयत्न कर रहा है ] ॥३३॥

दक्षिण दिशाका स्वामी वह यम भी, वरुण भी, कुबेर भी और देवराज इन्द्र भी, कुपित हो कर प्रहार करते इस रावण अथवा नारायणको स्वप्नमें अथवा तलवारकी धारपर ही देखते हैं ॥३४॥

वह रावण परमप्रतापी सूर्यके द्वारा किये विश्वके दैनिक लंघनको भी सह्य नहीं करता है । लोकप्रसिद्ध आगमोंके पूर्ण उत्कर्षको नहीं होने देता है और संसारपर नीतिमार्गसे शासन नहीं करता है । [ वह नारायण भी । उसने अत्यन्त उग्र कालिय नागका अन्त कर दिया था तथा संसारका नैतिकतापूर्वक पालन करता है । ] ॥३५॥

**यः पूतनामादरमुक्तवृत्तिं घोराश्चलामाकृतिदारुणां ताम् ।**
**बालोऽप्यपीडत्कुपितोऽरिमूर्तिं स्पर्द्धेच्छया वः किमनेन सार्धम् ॥३६॥**

य इति–अनेन रावणेन सार्द्धं किं स्पर्द्धेच्छया वो युष्माकम् ? यो बालोऽपि सन्नपीडत्पीडयामास । काम् ? तामरिमूर्तिमरीणा मूर्त्तिम्, कथम्भूताम् ? दरमुक्तवृत्तिम्, दरः भयम्, वृत्तिः प्रजापालनलक्षणा. अथवा प्रौढप्रतापलक्षणा, दरेण मुक्ता वृत्तिर्यस्या. सा तथोक्ता ताम्, पुनः कथम्भूताम् ? घोरा तीव्राम्, पुनः चला चपला पुनराकृतिदारुणा कोपप्रसादाभ्या जातेन धर्मेण सोढुमशक्यामित्यर्थ । पुनः कथम्भूत. ? पूतनामा पूत नाम यस्य सः, पुन कुपित. क्रुद्ध इति ।

भारतीय.–अनेन नारायणेन सार्द्धं कि स्पर्द्धेच्छया वो युष्माकम् । यतो यो बालोऽप्यपीडत्, काम् ? पूतनाम् । कथम्भूत. सन् ? कुपितः, कथम्भूताम् ? अरिमूर्त्तिं पुनरादरमुक्तवृत्तिम्[1] । शेष समम् ॥३६॥

**योलङ्केशीत्यायतिमायाद्दिशि तीव्रां वैरी नामाघानि स येन प्रजिघांसुः ।**
**यो देवानां धाम समक्षं च विमानं तेजोवृत्त्या वैश्रवणीयं हरति स्म ॥३७॥**

य इति–यो रावण आयात्प्राप । काम् ? लङ्केशीत्यायतिं लङ्कास्वामीति प्रसिद्धिम्, कथम्भूताम् ? तीव्राम्, तथा नाम अहो येन रावणेनाघानि हतः स प्रसिद्धोऽपि वैरी शत्रु, कथम्भूत. ? प्रजिघांसु', हन्तुकामः, कस्याम् ? दिशि, दिशीत्युपलक्षणाद्वीप्साऽत्र बोद्धव्या । तेनायमर्थः–दिशि दिशि प्रजिघांसु. सन्नघानि वैरी स प्रसिद्ध. । तथा यो हरति स्म, कि तत् ? धाम तेज., केषाम् ? देवाना सुधाशिनाम् । कया कृत्वा ? तेजो वृत्त्या, कथम् यथा भवति ? समक्षं लोकप्रसिद्ध लोकप्रत्यक्षम् । तथा हरति स्म, किं तत् ? विमान पुष्पकाख्यम्, कथम्भूतम् ? वैश्रवणीय वैश्रवणस्येद वैश्रवणीय धानदीयम्, कया ? तेजोवृत्त्या, कथम् ? देवाना समक्षम् ।

भारतीय.–य[2] आयात्प्राप, काम् ? केशीत्यायतिं ख्यातिम्, स लोकप्रसिद्धो वैरी येन नारायणेन अलमत्यर्थमघाति । तथा च य. समक्षं वैकुण्ठ देवाना धाम हरति स्म, कया कृत्वा ? तेजोवृत्त्या, कथम्भूतम् ? विमान विगत मान यस्य तद्विमान प्रचुरमित्यर्थ. । पुनः श्रवणीय श्रोतव्य सा न पुनर्लोचनगोचरमित्यर्थः[3] ॥३७॥

---

इस रावणके साथ स्पर्द्धा करनेसे आपको क्या लाभ है। पवित्र नामधारी तथा कुपित इसने शिशुवयमें ही भयके कारण अपनी वृत्तिके त्यागकर्ता, निर्दय, चंचल, आकारसे ही कठोर शत्रुकी मूर्तिको मिटा दिया था [ इस नारायणसे आदरहीन व्यवहारपूर्वक पूतना राक्षसीको मार दिया था । ] ॥३६॥

जो लंकेश्वर इस उद्वेजक नामसे ख्यात हुआ था, मारनेके लिए उद्यत अपने वैरीका जिसके द्वारा वध हुआ था और जिसने दोनोंके देखते रहनेपर भी इन्द्रके प्रताप और पुष्पक विमानको अपने तेजमय आचरणसे छीन लिया था। [ जो दिशा-दिशामें नारायण केशी इस नामसे पुकारा जाता है, जिस नारायणके द्वारा शत्रुओंका समूल विनाश किया गया है और जिसने सीमातीत वैकुण्ठ अथवा देवताओंके निवास स्वर्गका अपने प्रतापी चरित्र द्वारा अपहरण किया था। यह सब सुनने योग्य ही है ॥३७॥

---

१. इन्द्रवज्रा वृत्तम् । २ य आयात् प्राप । काम् ? केशीत्यायतिं विष्णुरित्याख्याम्, कथम्भूताम् ? तीव्राम्, कथम् अलम् अत्यर्थम् । तथा नाम अहो येन अघाति, क ? स लोकप्रसिद्धो मधु कैटभो वा वैरी, कथम्भूत सन् ? प्रजिघांसु कस्याम् ? दिशि, तथा वै यो हरति स्म, किं तत् ? धाम तेज, केषाम् । देवानाम् कथ यथा भवति ? समक्षम्, कथम् ? वै स्फुटम्, कया कृत्वा ? तेजोवृत्त्या, कथम्भूत धाम ? विमान वि–प०, द० । ३. मत्तमयूरच्छन्दसि ।

वैरन्तुङ्गोवर्धनमिच्छन्ननु दृष्ट्वा कीर्त्यैकैलासं गतमुच्चैः स्थितिमुग्रः ।
तं यो लोकं वायुरिवोर्ध्वं धरति स्म त्रुट्यत्तन्तूभूतभुजङ्गं भुजदण्डैः ॥३८॥

वैरमिति—नन्वहो यो रावण उच्चै स्थितिं गत प्राप्त त कैलास कीर्त्यै यशसे वैर दृष्ट्वा वर्द्धन वृद्धिमिच्छन् सन् भुजदण्डै त्रुट्यत्तन्तूभूतभुजङ्गा यत्रोद्धरणकर्मणि तत्र्था तथा धरति स्म । क कामिव ? वायुरुर्ध्वं लोकमिव, कथम्भूतो रावण ? तुङ्गो मानी ।

अधुना भारतीय —नन्वहो यो नारायण त गोवर्द्धन गोवर्द्धननामधेय पर्वत भुजदण्डैर्धरति स्म । कथम् ? ऊर्ध्वम् ? किं कुर्वन् ? इच्छन् । किं कर्त्तुम् ? रन्तुम्, कि कृत्वा ? पूर्वं दृष्ट्वा, कथम् ? वै स्फुटम्, कथ यथा धरति स्म ? एकैलासम्, इलाया भवा ऐला वृक्षा, आस क्षेपण पतनमित्यर्थ. ऐलानामास., ऐलास, एक. केवल. ऐलासो यत्रोद्धरणकर्मणि तदेकैलास वृक्षोन्मूलपतन यथेति । कथ यथा भवति ? त्रुट्यत्तन्तूभूतभुजङ्गम्, कथम्भूत गोवर्द्धनम् ? उच्चै स्थितिं गतम्, कथम्भूतो नारायण. ? कीर्त्या उग्र, क इव ? वायुरिव । यथा वायुरूर्ध्वे लोक धरतीति ॥३८॥

यस्य द्विपां शृङ्खलखङ्कृतानि प्रबोधतूर्यध्वनिमङ्गलानि ।
य ईदृशं प्रार्थयतेऽत्र साक्षाद्वैश्वानरः साहसिकः स एव ॥३९॥

यस्येति—यस्य रावणस्य द्विपा शृङ्खलखङ्कृतानि प्रबोधतूर्यध्वनि मङ्गलान्यभायन्त । यस्तं रावणम् अत्र युद्धे प्रार्थयते, स एव पुमान्साक्षात् परमार्थवृत्त्या वैश्वानरो वह्नि स्यात् । कथम्भूत रावणम् ? ईदृशमनन्यसम्भविपराक्रमम्, य' प्रार्थयते, स कथम्भूत' ? साहसिक. यत्र नाय नाहमिति प्रत्ययस्तत्साहस तद्वान् ।

भारतीय —पूर्वार्द्धे स एवार्थ. । य. अत्र युद्धे ईदृश नारायण प्रार्थयते स एव पर' श्वा रात्रिजागरः स्यात्साक्षाद्वै स्फुटम्, कथम्भूत सन् ? साहसिक[1] ॥३९॥

किं विग्रहेणोभयजन्मनाशादन्योन्यमालिङ्ग्य भुजोपरोधम् ।
सुखेन जीवाम निजानुकूलं विवाहसम्बन्धपरम्पराभिः ॥४०॥

किमिति—विग्रहेण युद्धेन किं प्रयोजनम् ? कस्मात् ? उभयजन्मना उभाभ्या जन्म यस्य स चासौ नागश्च तस्मादुभयजन्मनाशात् । किं कृत्वा ? पूर्वमालिङ्ग्य परिरभ्य, कथ यथा भवति ? भुजोपरोध भुजा-

---

अपने यशकी वृद्धिकी कामना करते हुए जिस अभिमानी तथा उग्र रावणने कैलास-पर्वतके अत्यन्त ऊँचे भागमें तपस्या करते अपने शत्रुको देख अपने भुजदण्डोंपर वैसे ही उठा दिया था जैसे वायु ऊर्ध्वलोकको उठाये है। रावणके उठानेके समय पृथ्वीतलमें वास करते हुए नाग तागोंकी तरह टूट गये थे ।

अपने यशके कारण प्रबल नारायणने क्रीड़ा करनेकी इच्छा करके सामने अत्यन्त ऊँचे गोवर्द्धनको देखा और आश्चर्य है कि केवल वृक्षोंकी जड़ोंके उन्मूलन और तन्तुके समान टूटते सर्पोंके साथ उसे वैसे ही भुजाओंसे ऊपर उठा लिया था जिस प्रकार वायु-संसारको उठाये है ॥३८॥

शत्रुओंकी बन्धन-शृंखलाओंकी झंकार जिसके लिए प्रभात-कालीन बाजोंकी मंगल ध्वनिका काम देते हैं। इस प्रकारके प्रबल पराक्रमी रावणको जो ( राम ) व्यक्ति युद्धके लिए ललकारता है वह वास्तवमें ज्वाला है अथवा अतिसाहसी है [ ऐसे वीरशिरोमणि नारायणको जो संसारमें अनुचर बनानेकी बात करता है वह ( जरासन्ध ) मनुष्य वास्तवमें अतिसाहसी कुत्ता ही है। ] ॥३९॥

युद्धके द्वारा दोनोंका जन्म नाश करनेसे क्या लाभ है ? दोनों भुजाओंसे

---

१ उपजातिवृत्तम् ।

वुपरुध्य, कथम् ? अन्योन्य परस्परम्, अतो जीवाम, जीवामेत्यत्र सन्तोषार्थे लोट् निर्देशः। केन ? सुखेन, काभि. कृत्वा ? विवाहसम्बन्धपरम्पराभि. पाणिग्रहणोत्सवसम्बन्धश्रेणीभिः कथम् ? निजानुकूल यथा ॥४०॥

**इति तस्य निशम्य तीव्रभूयं भुवनेशासनहारिणा बभाषे ।**
**परुषं पुरुषोत्तमेन पत्यौ न सुभृत्यः क्षमते क्षिपां हि जात्यः ॥४१॥**

इतीति—बभाषे उक्तम्, केन ? पुरुषोत्तमेन लक्ष्मणेन, कथ यथा भवति ? परुप निष्ठुरम्, किं कृत्वा ? पूर्व निशम्य श्रुत्वा। किम्? तीव्रभूय तीव्रत्वम्, कस्य? तस्य सुग्रीवस्य, कथम्? इत्युक्तप्रकारेण, कथम्भूतेन। पुरुषोत्तमेन ? भुवनेशासनहारिणा भुवनेशाना नीलनलादीना नरेन्द्राणामासन हरतीत्येवशीलेन राज्ञामासन-परिक्षेपकारिणेत्यर्थः। युक्तमेतत् सुभृत्य प्रशस्योऽनुचर. पत्यौ स्वामिनि क्षिपामाक्षेप न क्षमते न सहते। कथम् ? हि स्फुटम्, कथम्भूत. सुभृत्यः ? जात्य' कुलीन इति।

भारतीय.—पुरुषोत्तमेन पुरुषोत्तमनामधेयेन दूतेन बभाषे, कथम्भूतेन पुरुषोत्तमेन ? शासनहारिणा लेखवाहिना, क्व ? भुवने जगति, युक्तमेतत्। अन्वययोजना प्राग्वत्[1] ॥४१॥

**त्वमिहात्थ यथा तथा स नो चेत्सुभटः प्राणपरिव्यये सहिष्णुः ।**
**किमिहोत्सहतेऽधिपो ममाहुर्निजशूरेषु हि विप्रियं प्रियं वा ॥४२॥**

त्वमिति—आत्थ [आहस्थः इत्यनेन सूत्रेण थादेश] ब्रवीषि, क. ? त्वमिह स्वकीयस्थाने, कथम् ? यथा तथा यदृच्छयेत्यर्थ., नो चेत् यदि न स्यात्, कोऽसौ ? सोऽधिप स्वामी, कस्य ? मम, कथम्भूतः ? सुभट., यदि च न स्यात् सहिष्णु, क ? प्राणपरिव्यये प्राणत्यागे, किम् ? उत्सहते, क ? इह युद्धे, युक्तमेतत्, हि स्फुटम्, आहुर्वदन्ति, के ? विद्वज्जना., किम् ? विप्रिय प्रिय वा, केषु ? निजशूरेष्वात्मनोऽधीनेषु ॥४२॥

**यदेष राज्ञः प्रथमं परिग्रहस्तदाहवेऽन्यैर्न हतो हतैरपि ।**
**समापतन्तं मृगयुर्मदोद्धतं न राजवध्यं हि शृणाति शूकरम् ॥४३॥**

यदिति—सामान्योक्त्या व्याख्यायते। यत् न हत., कोऽसौ ? एष परिग्रह. परिवारः, कै. ? अन्यैः शत्रुभि, कथम्भूतैः ? हतैरपि, क ? आहवे सग्रामे, कथम् ? तदा तस्मिन्काले, कथम् ? प्रथम प्रथमत, कस्य परिग्रह' ? राज, युक्तमेतत्। हि यस्मान्न शृणाति हिनस्ति, कोऽसौ ? मृगयु पापर्द्धिक., कम् ? राजवध्य समापतन्त समागच्छन्त मदोद्धत मदोत्कट शूकर पोत्रिणम्[2] ॥४३॥

---

भरकर एक दूसरेका आलिंगन करें तथा आपसमें विवाहोंके सम्बन्धकी परम्परा चलाकर जैसी सुविधा हो उस प्रकार सुखसे जीवन व्यतीत करें ॥४०॥

इस प्रकारसे सुग्रीवकी तीखी बातें सुनकर बड़े-बड़े पृथ्वीपतियोंके राजसिंहासनोंके अपहरणकर्त्ता, पुरुष श्रेष्ठ लक्ष्मणने कठोरता पूर्वक कहा था। कुलीन अनुगामी अपने स्वामी· पर किये गये आक्षेपोंको सहन करते हैं [इस प्रकारसे नारायणकी तीक्ष्ण तथा कठोर बातें सुनकर पुरुषोत्तम नामक सन्देशवाहक दूतने कहना प्रारम्भ किया था। संसारमें अच्छे सेवक अपने स्वामीकी अवज्ञाको नहीं सहते हैं।] ॥४१॥

आप अपनी राजसभामें जो मनमें आया सो कह रहे हैं। वह आदर्श योद्धा मेरा ? प्राण देकर भी सहिष्णुताके व्रतको न निभाता होता तो यहाँ ऐसा साहस न करता। आत्म-बलियोंका भला-बुरा अपने ही आधीन होता है ऐसा गुरुजन कहते हैं ॥४२॥

आघात किये जानेपर भी युद्धमें दूसरे लोगोंने राजाके इस परिवारको जो पहिले ही नहीं मारा है वह उसी प्रकार है जैसे मदोन्मत्त, आगे बढ़ते आते तथा राजाके लक्ष्यभूत शूकरको दूसरे आखेटके साथी नहीं मारते हैं ॥४३॥

१ औपच्छन्दसिक वृत्तम्। तल्लक्षण हि "पर्यन्ते यौ तथैव शेषं त्वौपच्छन्दसिकं सुधीभिरुक्तम्।' वृ० र० ॥ ३।१३॥ २. वशस्थवृत्तम्।

ऊढवान्यदपि गण्डशैलकं तन्न कारणमुदारमुन्नतेः ।
भूरिभारवहनं क्रमेलकः श्लाघ्यते युधि वधं तु सिन्धुरः ॥४४॥

ऊढवानिति–यदिति सामान्योक्तौ । यत्पुमान् गण्डशैलमारूढवान् स्थूलोपलमधितस्थौ । तदुन्नतेरुदारमुत्कट कारण न स्यात् । युक्तमेतत् । श्लाघ्यते, कोऽसौ ? क्रमलेक उष्ट्र, किं कर्तुम् ? कर्तुं भूरिभारवहनम्, तु पुन श्लाघ्यते, कोऽसौ ? सिन्धुरो गजेन्द्र, कि कर्तुम् ? कर्तुम्, कम् ? वधम्, क्व ? सङ्ग्रामे । उत्तरार्द्ध सोपस्करतया व्याख्यातमिति[1] ॥४४॥

वरमिह ततः सा रामे या क्रियेत विधेयता
न तु लघुजरा सन्धेयास्मिन्प्रतापिनि वक्रता ।
क्वचिदपि न वः स्वामी साहायकं प्रतिनाथते
सुपथगमनप्रारम्भाय प्रभोरयमुद्यमः ॥४५॥

वरमिति–[द्वि] ततस्तस्मात्कारणात् सा वर स्यात् या विधेयता प्राञ्जलत्व क्रियेत विधीयेत, क्व ? इह रामे, कथम्भूते ? प्रतापिनि अस्मिन् वक्रता कुटिलता न सन्धेया न सन्धातव्या, कथम्भूता वक्रता ? लघुजरा लघ्वी जरा यस्या सा, नश्वरीत्यर्थः । न नाथते न याचते । कोऽसौ ? स्वामी, केषाम् ? वो युष्माकम्, क प्रति ? साहायक प्रति मित्रसमूह प्रति, क्व ? क्वचिदपि कस्मिश्चिदपि कार्ये । अयमुद्यम स्यात्, कस्मै ? सुपथगमनप्रारम्भाय न्यायमार्गानुसरणप्रारम्भाय, कस्य ? प्रभो रामस्येति ।

भारतीय–तत सा वर स्यात् क्रियेत । का ? या विधेयता, कथम्भूता ? सारा, पुनरमेया । क्व ? इह जरासन्धे, कथम् ? लघु शीघ्रम्, कथम्भूते ? प्रतापिनि, न त्वसौ वक्रता स्यात्, क्वचिदपि कस्मिंश्चित्कार्ये । न नाथतेऽपि तु नाथत एव । क ? स्वामी, क प्रति ? साहायक प्रति, केषा स्वामी ? वो युष्माकम्, तथाऽयमुद्यम स्यात्, कस्मै ? असुपथगमनप्रारम्भाय यमानुसरणप्रारम्भाय, कस्य ? प्रभो:, केषाम् ? वो युष्माकमिति[2] ॥४५॥

नाथोऽभ्युपेत्य विनयेन ततोऽनुनेय-
स्तस्य द्विषामिव दशा भवताञ्च माभूत् ।

---

यदि छोटेसे कैलाश अथवा गोवर्द्धनको उठा लिया तो इससे ही रावण अथवा नारायणकी विशाल उन्नतिका पता नहीं लग सकता है। युद्धस्थलमें भारी-भारी बोझ उठानेको ऊँट ही पसन्द करता है। हाथी तो मरने मारनेमें ही सुखी होता है ॥४४॥

अतएव जो सरलता यहाँ करेंगे वही ठीक है। इस परम प्रतापी रामके साथ शीघ्र ही नष्ट होनेवाली कपटनीतिका प्रयोग नहीं करना चाहिए। मेरा स्वामी कभी भी आप लोगोंसे सहायताके लिए प्रार्थना करता है ? अपितु महाराज रामका यह प्रयत्न सुमार्गपर लानेके लिए ही है।

इस प्रकार प्रतापी जरासन्धके साथ जो सीमित किन्तु सारवान आज्ञाकारिता शीघ्र की जायगी वही लाभप्रद है, विपरीत आचरणसे कोई भी लाभ नहीं है। हमारा स्वामी आपकी सहायता ही चाहता है। आपलोगोंको कुमार्ग अथवा मृत्यु मार्गपर चलानेके लिए ही हमारे प्रभुका यह प्रयास है ॥४५॥

---

१ रथोद्धतावृत्तम् । २ हरिणीवृत्तम् ।

इत्याशु धीप्सितमुदीर्य ययौ स देशं
श्रीसाधनं जयधियां खलु विक्रमोक्तिः ॥४६॥

इति श्रीद्विसन्धानकवेर्धनञ्जयस्य कृतौ राघवपाण्डवीये महाकाव्ये
दूतसंवादो नाम दशम सर्गं ॥१०॥

नाथ इति—[द्वि] ततस्तस्मात्कारणात् नन्वहो, अनुनेय आश्रयणीयः, क' ? नाथः स्वामी, विनयेन प्रश्रयेण, किं कृत्वा ? पूर्वमुपेत्य समीपमागत्य, तथा च मा भूत् माऽभवत्, का ? दशा अवस्था, केषाम्, भवताम्, च, केषामिव ? द्विषामिव यथा शत्रूणाम्, कस्य ? तस्य रामस्य इति धीप्सितं वक्तुमिष्टम्, उदीर्य प्रोच्य ययौ, कः ? स लक्ष्मण', कम् ? देशम्, कथम् ? आशु शीघ्रम्, युक्तमेतत्, नन्वहो स्यात्, का ? विक्रमोक्ति., किं स्यात् ? श्रीसाधन लक्ष्म्या. कारणम्, केषाम् ? जयधियामिति ।

भारतीयः—स पुरुषोत्तमनामधेयो दूतः देश स्वविषय ययौ कथम् ? आशु शीघ्रम्, किं कृत्वा ? पूर्वमुदीर्याभिधाय, किम् ? धीप्सित विवक्षितम्, कथम् ? ननु ततोऽनुनेयः, क. ? नाथः, नन्वहो स्यात्, का ? विक्रमोक्तिः, किं स्यात् ? श्रीसाधनम्, केषाम् ? जयधियामिति[1] ॥४६॥

इति निरवद्यविद्यामण्डनमण्डितपण्डितमण्डलीमण्डितस्य पट्तर्कचक्रवर्तिन' श्रीमद्विनय-चन्द्रपण्डितस्य गुरोरन्तेवासिनो देवनन्दिनाम्न शिष्येण सकलकलोद्भवचारुचातुरी-चन्द्रिकाचकोरेण नेमिचन्द्रेण विरचितायां पदकौमुदी नाम दधानाया टीकायां दूतसवादकथनो नाम दशम. सर्गं ॥१०॥

---

अतएव विनयपूर्वक सेवामें जाकर रामका अनुसरण करो। आपकी उसके शत्रुओंके समान दुर्दशा न हो इस प्रकारसे अभीष्ट वक्तव्यको शीघ्र समाप्त करके वह ओजस्वी वक्ता लक्ष्मण उस स्थानको चला गया था जो विजयके इच्छुक लोगोंके लिए राज्यलक्ष्मीका साधन है। [ · इस प्रकारसे अपने मनकी बात कहकर पुरुषोत्तम दूत शीघ्र ही अपने देशको भाग गया था। यह विरुद्ध क्रमसे कही गयी बात ही धनञ्जयमें आस्था रखनेवालोंके लिए निश्चयसे लक्ष्मी थीं ] ॥४६॥

इति निर्दोषविद्याभूषणभूषित पण्डितमण्डलीके पूज्य, पट्तर्कचक्रवर्ती श्रीमान् पण्डित विनयचन्द्र गुरुके शिष्य, देवनन्दिके शिष्य, सकलकलाकी चातुर्य-चन्द्रिकाके चकोर, नेमिचन्द्र द्वारा विरचित कवि धनञ्जयके राघव-पाण्डवीय नामसे ख्यात द्विसन्धान काव्यकी पदकौमुदी टीकामें दूतसवाद नामक दशम सर्ग समाप्त।

1 वसन्ततिलका वृत्तम्।

# एकादशः सर्गः

यस्यां नाथाः सप्रभावानराणां हित्वास्थानीं तां ययौ मन्त्रशालाम् ।
क्षुण्णैः कैश्चिन्नीतिमानेकपीनां विद्यास्वर्घ्यो दीप्रभावासुदेवः ॥१॥

यस्यामिति–ययौ गतवान् । कोऽसौ ? देव , केपाम् ? कपीना शाखामृगाणा सुग्रीव इत्यर्थ । काम् ? मन्त्रशालाम्, कथम् ? कै ? मन्त्रिभि, कथम्भूतै ? क्षुण्णै. कृताभ्यासै, कासु ? विद्यासु व्याकरणतर्कालङ्कारादिलक्षणासु, कथम्भूतासु ? दीप्रभावासु दीप्रो भाव. स्वरूपो यासा ता दीप्रभावा, अथवा दीप्र सशयमलपरित्यागतया विशद, भावो हेयोपादेयलक्षणविवेचक परिणामो यासु तास्तथोक्तास्तासु, कतिसङ्ख्योपेतै ? कैश्चित् त्रिभिश्चतुर्भिर्वा । कथ देव ? अर्घ्य पूज्य क्व सति ? नीतिमाने नीतिश्च मानश्च नीतिमानम् । अत्र समाहारापेक्षयैकवचन तस्मिन्नीतिमाने, नीतिमान् मानी च सन्नर्घ्य इत्यर्थ । किंपूर्वं मन्त्रशालाया ययौ ? हित्वा परित्यज्य, काम् ? तामास्थानीं सभाम्, यतो यस्यामभूवन्, के ? नाथा स्वामिन, कथम्भूता. ? सप्रभास्तेजस्विन, केपा नाथा ? वानराणामिति ।

भारतीय –ययौ, कोऽसौ ? वासुदेवो नारायण, काम् ? मन्त्रशालाम् । कथम् ? सह, कै ? मन्त्रिभि । कथम्भूतै ? क्षुण्णै विहितयोग्यै, कासु ? विद्यासु, कथम्भूतै. ? कैश्चित् त्रिभिश्चतुर्भिर्वा, कथम्भूतो वासुदेवः ? नीतिमान् न्यायमार्गवेदीत्यर्थ. । पुनरर्घ्य जगद्वन्द्य पुनर्दीप्रभा दीप्रा भा यस्य स, प्रोज्ज्वलत्कायकान्ति प्रोद्दीप्रकोपतेजा वा । किं कृत्वा ? पूर्व हित्वा, काम् ? तामास्थानीं सभाम्, एकपीना स्कन्धोपपीटमुपविष्टैरविच्छिन्नतया सामन्तादिभि. सम्भृतामित्यर्थ. । यस्या सभायामभवन, के ? नाथा. समुद्रविजयादय. स्वामिन, केपाम् ? नराणाम्, कथम्भूता अभूवन् ? सप्रभावा प्रभावेन सह वर्त्तन्त इति सप्रभावा. समाहात्म्या इति[1] ॥ १ ॥

शान्तारावे सारिकाद्यप्रवेशे देशे मन्त्रं पञ्चकं शास्त्रशुद्धैः ।
इत्यारेभे मन्त्रिभिर्दृष्टशौचैर्दूरं दीर्घं ध्यायतां कार्यसिद्धिः ॥२॥

शान्तेति–आरेभे प्रारब्धवान् । कः ? सुग्रीवो नारायणश्च, कम् ? मन्त्रम्, कथम् ? सह, कै ? मन्त्रिभि, कथम्भूतैः ? शास्त्रशुद्धै. शास्त्रप्रवीणै, पुन. कथम्भूतै. ? दृष्टशौचै दृष्ट शौच येपा तैर्दृष्टशौचै. शत्रुप्रयुक्तलम्बोपचारदूरीकृतै प्रभो कार्यभङ्गभीतया निर्लोभत्वात्तेषाम् । अत्रान्वयपरम्परयागतत्वात्सुजातित्व कुलीनत्वञ्च प्रदर्शित तेपा मन्त्रिणामिति भाव । क्व मन्त्रमारेभे ? शान्तारावे शान्त आरावो यत्र तस्मिन्निर्जन्तुकतया प्रतिध्वनिपरित्यक्ते सारिकाद्यप्रवेशे सारिकाकीरवर्त्तिकादीना प्रवेशोज्झिते, यतः शुकसारिकादिभिर्भिन्नो मन्त्रो दृष्टोऽतएव तेपा प्रवेशाभावो विहित । देशे प्रदेशे । कथम्भूत मन्त्रम् ? पञ्चक पञ्चावयवा यस्य तम्, कस्मिन्मन्त्र्यम्, किम्मन्त्र्यम्, कै सह मन्त्र्यमिति त्रिविधो विकल्प । आद्यो देशकालापेक्षया द्विष्ठः द्वितीयः

जिस स्थानपर मनुष्योंके प्रभावधारी नाथ थे उस स्थानको छोड़कर राजनीति और गौरवकी रक्षक मन्त्रशालामें, तीक्ष्ण विचारशक्तियुक्त विद्याओंके अभ्यासी कुछ मन्त्रियोंको साथ लेकर वानर वंशियोंका राजा सुग्रीव चला गया था।

जिसमें मनुष्यलोकके विविध प्रभावशाली राजा बैठे थे उनसे भरी हुई उस राजसभासे उठकर प्रखर कान्तिमान्, नीतिनिपुण, वासुदेव, राजनीति आदि विद्याओंके अनुभवी लोगोंके साथ मन्त्रशालाको चला गया था ॥१॥

सब प्रकारके कोलाहलसे रहित मैना, तोता, आदिके प्रवेश वर्जित मन्त्रशालामे सुग्रीव अथवा नारायणने निर्लोभिता तथा कुलीनताके लिए ख्यात शास्त्रोंके मननके कारण शुद्ध बुद्धि मन्त्रियोंके साथ, मन्त्रणा की देश-काल, विषय, मन्त्रदाता आदिके भेदसे पञ्चांग

१. सर्गेऽस्मिन् शालिनीवृत्तम् ।

कर्मणामारम्भोपाय इत्यादिभिः पञ्चकः। कीदृशैः कतिपयैर्वेति द्विष्टन्तथैवमुदाह्रियते। कथम्? इति कृत्वा मन्त्रिभिर्मन्त्र समारेभे। भो मन्त्रिणः सर्वकार्यधुरीणाः ध्यायता पर्यालोचयताम्, का? कार्यसिद्धिः, कथ यथा भवति? दीर्घ दीर्घकाल दूर दूरदेशविषये, कैः? भवद्भिरिति सम्बन्धनीयमिति ॥२॥

**अप्रारम्भात्कार्यमकौशलाद्वा स्थानत्यागात्कामतः शेषतो वा।**
**नातिक्रान्तं प्राप्यते यौवनं वा तेनालोच्यं वोऽनुबन्धैश्चतुर्भिः ॥३॥**

अप्रारम्भादिति–न प्राप्यते न लभ्यते, कि तत्? कार्यम्, कथम्भूत सत्? अतिक्रान्तमतीतम्, कस्मात्? अप्रारम्भात्प्रमादवशादनुत्रमात्। वा अथवा कार्ये प्रवृत्ते अकौशलादनैपुण्यात्, वा स्थानत्यागात् सत्यपि क्रियामात्रनैपुण्ये स्थानत्यागात्स्थानात्स्थानान्तरगमनात् अत्र वासना स्थानत्यागात् न हि गौरपि दुह्यते, किं पुन पुमर्थमिति। वा अथवा कामतः यदृच्छातः, अथवा शेषतः क्रोधादिभिः। अत्रोपमार्थः प्रदर्श्यते–वा यथा यौवनमतिक्रान्त पुनर्न प्राप्यते यतः, तेन कारणेनालोच्य वो युष्माक युष्माभि.। कै कृत्वा? अनुबन्धै. कतिसङ्ख्योपेतै.? चतुर्भि.—अर्थोऽर्थ., अर्थमनर्थ., अर्थमर्थः, अनर्थमनर्थ, अत्र वासना निरूप्यते अर्थोऽर्थानुबन्धी, अर्थोऽनर्थानुबन्धी, अनर्थोऽर्थानुबन्धी, अनर्थोऽनर्थानुबन्धीत्येव रूपैरिति ॥३॥

**शिष्टैर्जुष्टं रक्षितं दण्डनीत्या दृष्टं चोच्चैर्यच्च पुण्यग्रहेण।**
**कार्यद्वारं श्रीगृहद्वारभूतं तस्मिन्मूढं दिग्विमूढं निराहुः ॥४॥**

शिष्टैरिति–निराहुर्निर्वचनयन्ति। के? नीतिविशारदा., कम्? मूढम्, क? तस्मिन्नालोच्ये, कथम्भूत मूढ निराहु.? दिग्विमूढ दिशामूढम्। यच्च जुष्ट सेवितम्, कैः? शिष्टैः शास्त्रज्ञै. पुम्भिः,यच्च रक्षितम्, कया? दण्डनीत्या बाह्याभ्यन्तरविग्रप्रशमतो दण्डो दण्डस्तस्य नीत्या, यच्च दृष्टम्। केन? पुण्यग्रहेण दैवानुग्रहेण, कथम्? उच्चै.। अतिशयेन, कथम्भूतमालोच्यम्? कार्यद्वार क्रियामुखम्, पुन. कथम्भूतम्? श्रीगृहद्वारभूतमिन्दिरामन्दिरद्वारभूतम् ॥४॥

**[1]तच्चैकैकं यन्मुखेनैककेन प्राप्तं योज्यं ग्रासवद्भावि पथ्यम्।**
**नानाद्वारैरापतद्वा हृषीकैर्दृश्यस्पृश्यादीव तद्ग्राह्यमेभिः ॥५॥**

तदिति–तच्च कर्म एकैकमेकमेक स्यात्। यत्प्राप्तम्, केन? मुखेन, कथम्भूतेन? एककेनैकेन, योज्यम्, किं तत्? पथ्यम्। पथोऽनपेत पथ्यम्, यद्वस्तु गृहीतम् सत् पुरतो विक्रिया न भजते तत्पथ्यम्। कथम्भूतम्, भावि भविष्यत्, क इव? ग्रासवत् कवल इव। वाऽथवा ग्राह्यमादेयम्, किम्? तत्कर्म, किं कुर्वत्? आपतदागच्छत्, कै.? एभिर्नानाद्वारै. मन्त्रस्य पञ्चावयवै, किमिव ग्राह्यम्? दृश्यस्पृश्यादीव दृश्यस्पृश्यादिवत्,

---

मन्त्रणा प्रारम्भ की थी। हे मन्त्रियो, विचार करें किस प्रकार चिरस्थायी और व्यापक सफलता होगी ॥२॥

प्रारम्भ न करनेसे, प्रारम्भ करके भी अनुभव हीनताके कारण, चातुरी होनेपर भी स्थान परिवर्तनके कारण अवसर बीता कार्य अथवा यौवन पुनः हाथ नहीं आता है अतएव आप लोग प्रकृत विषयपर अर्थसाधक अर्थ, अनर्थकारी अर्थ, अर्थबाधक अनर्थ और अनर्थकारी अनर्थ इन चार दृष्टियोंसे विचार करें ॥३॥

जिस कार्य योजनामें सज्जनोंका सहयोग हो, दण्डनीति जिसका रक्षक हो तथा उच्च स्थानपर गत शुभ ग्रहोंकी जिसपर दृष्टि हो वह लक्ष्मी-मन्दिरके प्रवेश-द्वारके समान होती है। जो ऐसी योजनाके विषयमें मूढ है उसे नीतिकार दिग्भ्रान्त ही कहते हैं ॥४॥

इनमेंसे प्रत्येक, जो सामने आता है उसको एक-एककी दृष्टिसे ऐसा बैठाना चाहिए जो भविष्यमें इष्ट साधक हो जैसा कि सामने आये ग्रास एक मुखसे ही एक-एक करके लेनेसे पथ्य होते हैं। अथवा एक साथ उपस्थित विचारणीय विषयोंको इस पाँच अवयवोंकी दृष्टिसे

---

१. दपुस्तके "यच्चैकैक यत्मुनेनैककेन" इति पाठोऽस्ति।

दृश्य लोचनविषयम्, स्पृश्य स्पर्शविषयमित्यादिवदुत्पद्यते । यथा दृश्यस्पृश्यादि गृह्यते । कै. ? हृषीकैरिन्द्रियै. स्पर्शनरसनघ्राणलोचनश्रवणैरिति ॥५॥

**तत्सर्वं वारम्भमल्पाल्पमेव स्वीकर्त्तव्यं कर्म कालक्षमञ्चेत् ।**
**गौराहारं हृद्यमाहृत्य विश्वं कामं रोमन्थायतेऽनुक्रमेण ॥६॥**

तदिति-वाऽथवा स्वीकर्त्तव्यमेव उररीकरणीयमेव, किम् ? तत्सर्वमारभ्य कर्म, कथम्भूत सत् ? अल्पाल्प स्तोकस्तोक चेद्यदि स्यात्, किम् ? कर्म, कथम्भूतम् ? कालक्षम काल क्षमते कालक्षम समयसहिष्णु । यत एतत् सुप्रसिद्धमिद रोमन्थायते रोमन्थ करोति, काऽसो ? गौर्नन्दिनी । केन ? अनुक्रमेण परिपाट्या शनै. शनैरित्यर्थ । किं कृत्वा पूर्वं रोमन्थायते ? आहृत्य जग्ध्वा । कम् ? आहारम्, कथम्भूतम् ? हृद्य हृदि साधु यद्भक्षित सद्धृदि व्यथान्नकुरुते तद्धृद्यम्, सात्म्यभूतम्, विश्व समस्तम्, कथमाहृत्य ? काम स्वेच्छया आकण्ठमित्यर्थ. ॥६॥

**कार्यस्यादौ यः प्रयुङ्क्ते न नीतिं गच्छन्त्यस्य स्वादुभावं न भोगाः ।**
**नूनं धात्राऽप्येतदर्थं जनानां जिह्वास्येषु स्थापिता नोदरेषु ॥७॥**

कार्यस्येति-य. पुमान् न प्रयुङ्क्ते न प्रयोजयति, काम् ? नीतिम्, क ? आदौ प्रथमारम्भे, कस्य ? कार्यस्य कर्मण, यतस्ततो न गच्छन्ति न व्रजन्ति, के ? भोगा कर्पूरकस्तूरीताम्बूलादय, कम् ? स्वादुभाव रसविवेचनीयताम्, कस्य ? अस्य पुस । स्थापिता, का ? जिह्वा रसना, केन ? धात्रा ब्रह्मणापि, क्व ? आस्येषु वदनेषु, केषाम् ? जनानाम्, किमर्थम् ? एतदर्थं स्वादुभावार्थम्, नोदरेषु स्थापिता, कथम्भूतम् ? नून निश्चयेन, अथवा नूनमिति शब्दोऽत्रोत्प्रेक्षार्थो निश्चेतव्य इति ॥७॥

**कस्यात्यन्तं मित्रमेकान्ततो वा शत्रुः कृत्यं शत्रुमित्रत्वहेतुः ।**
**यस्यारम्भान्नातिवर्तेत सख्यं वैरं वारात्येन तत्कर्म कुर्युः ॥८॥**

कस्येति-आक्षेपेणात्र व्याख्यायते । कस्य मित्र स्यादपि तु न कस्यापि, कथम् ? अत्यन्तमतिशयेना-जन्मपर्यन्तमित्यर्थ । वा अथवा कस्य शत्रु स्यादपि तु कस्यापि, कथम् ? एकान्ततो नियमेन, अत कारणात्कृत्य कार्यं शत्रुमित्रत्वहेतु स्यात्, शत्रुत्वकारण मित्रत्वकारणञ्च । अत कुर्यु विदध्यु भवन्त., किम् ? तत्कर्म कार्यम्, नातिवर्त्तेत नातिक्रामति, किम् ? सख्य मित्रत्व, अथवा वैरम्, केन सह ? आरात्येनाराति-समूहेन, कस्मात् ? आरम्भात्, कस्य ? यस्य कर्मण इति ॥८॥

**अभ्यादत्ते कार्यजं योनिजं वा प्राप्तं मित्रं शत्रुमप्राप्तमेव ।**
**तस्य श्लाघ्यं जन्म कृत्वावधानं किं तूत्तापो रावणीयोऽपि चिन्त्यः ॥९॥**

---

वैसा ही विचारना चाहिये जैसे विविध दृश्य और स्पृश्य भोगोंको इन्द्रियोंसे ग्रहण करते हैं ॥५॥

अथवा, यदि प्रतीक्षा की जा सकती हो तो समस्त आरब्ध कार्यको थोड़ा-थोड़ा करके ही हाथ लगाना चाहिए जैसे गाय परम प्रिय भोजनको एक वारमें ही पूरा तथा जी भरके खा करके वादमें धीरे-धीरे जुगाली करती है । ॥६॥

जो व्यक्ति कार्यके प्रारम्भमें ही नीतिसे काम नहीं लेता है उसके राज्यादि भोग सरस नहीं होते हैं । इसीलिए विधाताने लोगोंके मुखमें जिह्वा वनायी है और पेटमें नहीं वनायी है, यह निश्चय है । ॥७॥

कौन ऐसा व्यक्ति है जिसके अत्यन्त मित्र होते हों अथवा जिसके सर्वथा शत्रु ही होते हों । अतएव जिसके आरम्भ करनेसे मित्रताका अतिक्रमण न होता हो अथवा शत्रु समूहके साथ वैरका अपलाप न होता हो वही कार्य आप लोग करें । ॥८॥

अभ्यादत्त इति–अभ्यादत्ते प्रतिगृह्णाति, कः ? यः पुमान्, किम् ? मित्र सहायम्, कथम्भूतम् ? प्राप्त वर्त्तमानम, कथम्भूतम् ? कार्यज कार्याज्जात योनिज वा योनेर्जातमन्वयपरम्परयागतमित्यर्थः। तथाऽभ्यादत्ते, कम् ? शत्रुम्, कथम्भूतमेव ? अप्राप्तमेव भाविनमेव, कथम्भूतम् ? कार्यज योनिज वा वशज वा। श्लाघ्य स्तुत्यम्, किम् ? जन्म जीवितम्, कस्य ? तस्य पुसः, अत. कारणात्, किन्त्वनुशयान इति प्राह सुग्रीवः—भो मन्त्रिणश्चिन्त्यो जायते, कः ? उत्ताप', केषाम् ? भवताम्, किं कृत्वा ? पूर्वं कृत्वा विधाय, किम् ? अवधान तत्परताम्, कथम्भूतः ? उपात्त. रावणीयो रावणस्यायमिति।

भारतीय.–किन्त्वनुशयानो वासुदेव. प्राह.–भो मन्त्रिणश्चिन्त्य', कः ? उत्ताप। क्व ? अरौ, कथम् ? अणीयः स्वल्प यथा, केषाम् ? भवताम्, कि कृत्वा ? पूर्वं कृत्वा, किम् ? अवधान प्रणिधानम्। शेष समम् ॥९॥

**यद्वंशस्य प्राभवं लोकरूढं यः शौरीयं धाम संहर्त्तुमीशः।**
**बद्धस्पर्धोऽनेन विद्वेषभाजा सार्धं मित्रैर्गोत्रनाशं समेति ॥१०॥**

य इति–यो राम ईश समर्थः, कि कर्त्तुम् ? सहर्त्तुम्, कम् ? प्रभाव माहात्म्यम्, कस्य ? यद्वशस्य रावणान्वयस्य माल्सुमाल्प्रिभृते, तथा सहर्त्तुमीशो राम', किम् ? धाम तेज., कथम् ? शौरीय शूराणा समूह शौर. शौरस्येद शौरीयमथवा सूर्य एव सौर, स्वार्थेऽण्, सोरस्येद सौरीयमादित्यस्येदम्, पुन कथम्भूतम् ? लोकरूढ जगत्प्रसिद्धम्, अत. समेति सम्यक्प्रकारेणायाति, क. ? बद्धस्पर्ध विहितस्पर्द्ध. कृतेर्ष्यो नर., कम् ? गोत्रनाशम्, कथम् ? सार्द्धम्, कै. ? मित्रैः, बद्धस्पर्ध. केन ? अनेन रामेण सार्धं सह, कथम्भूतेनानेन ? विद्वेषभाजा विद्वेप भजमानेन।

अथ भारतीय'–यो जरासन्ध ईशः समर्थ', कि कर्त्तुम् ? सहर्त्तुम्, कम् ? प्राभव माहात्म्यम्, कस्य ? यद्वशस्य यदूनामशस्य, अथवा प्रभवे जातः प्राभवस्त प्राभव जन्मजातम्। अत्र वासना–अन्येषा का वार्ता यादवाशस्यैकदिनजात बालकमपि सहर्त्तुमीष्टे तथा सहर्त्तुमीश., किम् धाम तेज, कथम्भूतम् शौरीय नारायणीयम्, पुन. कथम्भूतम् ? लोकरूढ जगद्विख्यातम्। अथवा यो जरासन्ध., किम् ? धाम तेजः, कथम्भूतम् ? सौरीय सूर्यस्येदम्, पुनर्लोकरूढम्। रूपकमिदम्, अनेन जरासन्धेन सह य. प्राणी बद्धस्पर्धो जायते। कथम्भूतेन ? विद्वेषभाजा विद्वज्जनाना वेषभाकार भजमानेन, समेति स प्राणी, कम् ? गोत्रनाशम्, कथम् ? सार्द्धम्, कै ? मित्रैरिति ॥१०॥

**स्वस्यारेश्चायोधयन्मित्रमित्रं मित्रं पार्ष्णिग्राहमाक्रन्दकञ्च।**
**नन्वासारावप्युपायैर्जिगीषुः शक्त्या सिद्ध्याभ्युद्यतो हन्त्यरातिम्॥११॥**

---

उसका जन्म प्रशसनीय है जो कार्यकृत अथवा जन्मजात स्वय अभ्यागत मित्रोंको स्वीकार करता है तथा व्यवहारके कारण बने अथवा कुलक्रमागत शत्रुका दूरसे ही प्रतिकार करता है। किन्तु इससे सावधान होकर आपको रावणके उपद्रवका विचार करना है [ किन्तु इस समय पूरा विवेकके साथ आपको शत्रु ( जरासंध ) के विषयमे छोटे से छोटे भी विरोध सोचने हैं ] ॥९॥

जिसके वशका प्रभाव संसारमें छा रहा है, जिसका तेज वीरतासे उत्पन्न है, जो शत्रुओंके विनाशमें समर्थ तथा सहज ही रुष्ट होनेवाले इसके साथ ईर्ष्या करनेवाला अपने सहायकोंके साथ वशके क्षयको प्राप्त होता है।

अन्वय—य यदु-अशस्य प्राभव लोकरूढ शौरीय धाम सहर्तुम् ईश विद्वेषभाजानेन बद्धस्पर्द्धा मित्रै. सार्धं गोत्रनाश समेति।

जो जरासध राजा यदुकी सद्यःप्रसूत, नारायणकी शक्तिसे सम्पन्न जगद्विख्यात सन्तानको भी मार सकता है, विद्वानोंके वेषके धारक इसके साथ प्रतिद्वन्द्विता करनेवालेका ही नहीं अपितु उसके मित्रोंके भी वश नष्ट हो जाते हैं। ॥१०॥

स्वस्येति—हन्ति हिनस्ति, कः ? जिगीषुः, कम् ? अराति शत्रुम्, किं कृत्वा ? उपायैः सामादिभिश्चतुर्भिः, सामभेददण्डोपदानैः, कथम्भूत सन् ? अभ्युन्नत सामर्थ्येनोत्थित समुन्नत इत्यर्थः । कया ? सिद्ध्या पुण्यपाकेन, तथा शक्त्या शक्तित्रयेण । तथा चोक्तम्—"प्रभुशक्तिर्भवेदाद्या मन्त्रशक्तिर्द्वितीयका । तृतीयोत्साहशक्तिश्चेत्याहुः शक्तित्रयं बुधाः"—किं कुर्वन् ? आयोधयन्, किम् ? मित्रमित्रम्, (मित्रं च) कस्य ? स्वस्यात्मनः, अरेश्च शत्रोश्च । तथा पार्ष्णिग्राहमाक्रन्दकञ्च, तथा आसारौ पार्ष्णिग्राहमित्रमाक्रन्दमित्रं च आयोधयन्। अत्र व्यक्तितया व्याक्रियते—स्वमित्रमित्रेण सहारिमित्रमित्रमायोधयन्, तथा स्वमित्रेणारिमित्रम्, आक्रन्दकेन । सह पार्ष्णिग्राहं पार्ष्णिग्राहासारेण सहाक्रन्दासारम् । कथम् ? ननु, नन्विति शब्दोऽत्र निश्चयार्थोऽवधारणार्थोऽप्यामन्त्रणार्थो वा गृह्यते । मित्रादयो दश द्वौ मध्यस्थाविति द्वादशमण्डलम् । तथा चोक्तम्—"विजगीषोर्द्विषज्जेतुर्मित्रंमित्रं रिपोरपि । जिगीषोर्मित्रमित्रञ्च मित्रारेर्मित्रमेव च ॥ जिगीषोः पृष्ठतः पार्ष्णिग्राहाक्रान्दावुपस्थितौ । तदासारौ तु विज्ञेयौ मध्यस्थौ पार्श्वयोरपि" ॥११॥

**रक्षोपायः शक्यते केन कर्त्तुं कः क्रुद्धेऽस्मिन्वामयीहेत योद्धुम् ।**
**उद्योक्तव्यं नैष कालः क्षमाया योज्यो योगक्षेमसिद्ध्यै हि दण्डः ॥१२॥**

द्वि । रक्षेति—शक्यते समर्था भूयते, केन कर्त्राऽपि तु न केनापि, किम् ? कर्त्तुम् विधातुम्, कः ? रक्षोपायः रक्षसो रावणस्यापायो विध्वंसस्तथा ईहेत इच्छेत कः अपि तु न कोऽपि, किं कर्त्तुम् ? योद्धुम्, क ? अस्मिन्रावणे, कथम्भूते ? क्रुद्धे, पुनर्वामे प्रतिकूले, अत उद्योक्तव्यमुद्यमः करणीयः, यतो न वर्त्तते कः ? एष कालः समयः, कस्याः ? क्षमायाः, अतो योज्यो योजनीयः, कः ? दण्डः सैन्यम्, कस्यै ? योगक्षेमसिद्ध्यै, योगोऽलब्धलाभः, क्षेमो लब्धपरिरक्षणम्, तयोः सिद्ध्यै सिद्धिनिमित्तम्, कथम् ? हि स्फुटमिति शेषः ।

भारतीय—रक्षोपायो रक्षाया उपायः, केन कर्त्तुं शक्यतेऽपि तु न केनापि, वाऽथवाऽस्मिन् मयि विष्णौ क्रुद्धे सति कः ईहेत योद्धुमपि तु न कोऽपि । अत उद्योक्तव्यम्, क्षमाया नैष कालो वर्त्तते, योज्यो दण्डः, कस्यै ? योगक्षेमसिद्ध्यै, कथम् ? हि स्फुटम् ॥१२॥

**इत्येतस्मिन्नुक्तवत्येतदेवं धीरोदारं धर्मजन्मा बभाषे ।**
**गाम्भीर्येणानूनभाजाम्बवोऽसौ राशिः सत्त्वस्याश्रयः शौर्यवृत्तेः ॥१३॥**

इतीति—इत्युक्तप्रकारेणैतस्मिन्सुग्रीवे, एतदेवमुक्तवति सति बभाषेऽवादीत्, कोऽसौ ? असौ जाम्बवः, कथं यथा भवति ? धीरोदारम्, कथम्भूतः ? धर्मजन्मा धर्मेणोपलक्षितं जन्म यस्य स धर्मजन्मा, पुनः कथम्भूतः ? अनूनभा प्रचुरकायकान्तिः, अथवा प्रौढप्रतापः, पुनर्गाम्भीर्येण सत्त्वस्य राशिः, पुनः शौर्यवृत्तेराश्रयः ।

भारतीय—इत्युक्तप्रकारेणैतदेवमेतस्मिन् नारायण उक्तवति सति बभाषे, कः ? असौ धर्मजन्मा युधि-

---

सर्वथा सन्नद्ध विजयका इच्छुक अपने तथा शत्रुके मित्रोंको, मित्रोंके मित्रोंको सेनाके पीछेके व्यूहभूत पार्ष्णिग्राह और आक्रन्दकोंको एवं दोनो पार्श्वोंके बीचमें चलती सेना (आसारों)को लड़ाते हुए, सामादि उपायोंके द्वारा, प्रभु-मंत्र-उत्साह शक्तिके द्वारा और विद्या, आदिकी सिद्धिके द्वारा निश्चित ही शत्रुका नाश करते हैं। ॥११॥

इस राक्षसका कौन विनाश (रक्षसः-अपायः) कर सकता है? इसके कुपित तथा प्रतिकूल हो जानेपर कौन इससे युद्ध करने की इच्छा करेगा? अतएव इससे लड़नेका ही पूर्ण प्रयत्न करना चाहिए यह क्षमाका समय नहीं है। अप्राप्तकी प्राप्ति (योग) तथा प्राप्तके संरक्षण (क्षेम)के लिए दण्ड का प्रयोग करना चाहिये [कौन विष्णु (मयि)के कुपित हो जानेपर उनसे लड़नेका साहस करेगा अथवा रक्षाका उपाय (रक्षोपाय) कर सकता है ] ॥१२॥

इस प्रकारसे, इतना सुग्रीवके द्वारा कहते रहनेपर ही जाम्बवान्‌ने अत्यन्त धीरता और उदारतापूर्वक कहा था। जाम्बवान्‌का जन्म धर्मके लिए था, शरीरकी कान्ति अविकल थी, गम्भीरताके कारण वह बलकी राशि था तथा वीर वृत्तिका आश्रय था [ इस प्रकारसे कृष्णजीके द्वारा कहे जानेपर धर्मराज युधिष्ठिरने धीरोदार रूपसे कहा था, धर्म-

अभ्यादत्त इति–अभ्यादत्ते प्रतिगृह्णाति, कः ? यः पुमान्, किम् ? मित्र सहायम्, कथम्भूतम् ? प्राप्त वर्त्तमानम्, कथम्भूतम् ? कार्यज कार्याज्जात योनिज वा योनेर्जातमन्वयपरम्परयागतमित्यर्थः । तथाऽभ्यादत्ते, कम् ? शत्रुम्, कथम्भूतमेव ? अप्राप्तमेव भाविनमेव, कथम्भूतम् ? कार्यज योनिज वा वशज वा । श्लाघ्य स्तुत्यम्, किम् ? जन्म जीवितम्, कस्य ? तस्य पुंसः, अत. कारणात्, किन्त्वनुशयान इति प्राह सुग्रीवः—भो मन्त्रिणश्चिन्त्यो जायते, कः ? उत्ताप., केषाम् ? भवताम्, किं कृत्वा ? पूर्वं कृत्वा विधाय, किम् ? अवधान तत्परताम्, कथम्भूतः ? उपात्त. रावणीयो रावणस्यायमिति ।

भारतीय.–किन्त्वनुशयानो वासुदेवः प्राहः–भो मन्त्रिणश्चिन्त्य', क ? उत्ताप । कत्र ? अरौ, कथम् ? अणीयः स्वल्प यथा, केषाम् ? भवताम्, कि कृत्वा ? पूर्वं कृत्वा, किम् ? अवधान प्रणिधानम् । शेष समम् ॥९॥

**यद्वंशस्य प्राभवं लोकरूढं यः शौरीयं धाम संहर्त्तुमीशः ।**
**बद्धस्पर्धोऽनेन विद्वेषभाजा सार्धं मित्रैर्गोत्रनाशं समेति ॥१०॥**

य इति–यो राम ईश. समर्थः, कि कर्त्तुम् ? सहर्त्तुम्, कम् ? प्रभाव माहात्म्यम्, कस्य ? यद्वशस्य रावणान्वयस्य माल्सिुमालिप्रभृतेः, तथा सहर्त्तुमीशो राम, किम् ? धाम तेज', कथम् ? शौरीय शूराणा समूह शोर. शौरस्येद शौरीयमथवा सूर्य एव सौर, स्वार्थेऽण्, सौरस्येद सौरीयमादित्यस्येदम्, पुनः कथम्भूतम् ? लोकरूढ जगत्प्रसिद्धम्, अतः समेति सम्यक्प्रकारेणायाति, क ? बद्धस्पर्ध विहितस्पर्द्ध. कृतेर्ष्यो नर., कम् ? गोत्रनाशम्, कथम् ? सार्द्धम्, कै. ? मित्रै., बद्धस्पर्ध. केन ? अनेन रामेण सार्धं सह, कथम्भूतेनानेन ? विद्वेषभाजा विद्वेष भजमानेन ।

अथ भारतीय.–यो जरासन्ध ईशः समर्थ', किं कर्त्तुम् ? सहर्त्तुम्, कम् ? प्राभव माहात्म्यम्, कस्य ? यद्वशस्य यदूनामशस्य, अथवा प्रभवे जातः प्राभवस्त प्राभव जन्मजातम् । अत्र वासना–अन्येषा का वार्त्ता यादवाशस्यैकदिनजात बालकमपि सहर्त्तुमीष्टे तथा सहर्त्तुमीशः, किम् धाम तेज, कथम्भूतम् शौरीय नारायणीयम्, पुन. कथम्भूतम् ? लोकरूढ जगद्विख्यातम् । अथवा यो जरासन्ध., किम् ? धाम तेजः, कथम्भूतम् ? सौरीय सूर्यस्येदम्, पुनर्लोकरूढम् । रूपकमिदम्, अनेन जरासन्धेन सह य. प्राणी बद्धस्पर्धो जायते । कथम्भूतेन ? विद्वेषभाजा विद्वज्जनाना वेषमाकार भजमानेन, समेति स प्राणी, कम् ? गोत्रनाशम्, कथम् ? सार्द्धम्, कै ? मित्रैरिति ॥१०॥

**स्वस्यारेश्चायोधयन्मित्रमित्रं मित्रं पार्ष्णिग्राहमाक्रन्दकश्च ।**
**नन्वासारावप्युपायैर्जिगीषुः शक्त्या सिद्ध्याभ्युद्यतो हन्त्यरातिम् ॥११॥**

---

उसका जन्म प्रशसनीय है जो कार्यकृत अथवा जन्मजात स्वयं अभ्यागत मित्रोंको स्वीकार करता है तथा व्यवहारके कारण बने अथवा कुलक्रमागत शत्रुका दूरसे ही प्रतिकार करता है। किन्तु इससे सावधान होकर आपको रावणके उपद्रवका विचार करना है [ किन्तु इस समय पूरा विवेकके साथ आपको शत्रु ( जरासंध ) के विषयमें छोटे से छोटे भी विरोध सोचने है ] ॥९॥

जिसके वंशका प्रभाव संसारमें छा रहा है, जिसका तेज वीरतासे उत्पन्न है, जो शत्रुओंके विनाशमें समर्थ तथा सहज ही रुष्ट होनेवाले इसके साथ ईर्ष्या करनेवाला अपने सहायकोंके साथ वंशके क्षयको प्राप्त होता है।

अन्वय—य यदु-अशस्य प्राभव लोकरूढ शौरीय धाम सहर्तुम् ईश विद्वेषभाजानेन बद्धस्पर्द्धा मित्रै. सार्धं गोत्रनाश समेति ।

जो जरासंध राजा यदुकी सद्यःप्रसूत, नारायणकी शक्तिसे सम्पन्न जगद्विख्यात सन्तानको भी मार सकता है, विद्वानोंके वेषके धारक इसके साथ प्रतिद्वन्द्विता करनेवालेका ही नहीं अपितु उसके मित्रोके भी वंश नष्ट हो जाते हैं। ॥१०॥

स्वस्येति–हन्ति हिनस्ति, क ? जिगीषुः, कम् ? अराति शत्रुम्, कै कृत्वा ? उपायै. सामादिभि-श्चतुर्भि', सामभेददण्डोपदानै , कथम्भूत सन्? अभ्युद्यत मामस्त्येनोत्थित' समुत्पन्न इत्यर्थ । कया ? सिद्ध्या पुण्यपाकेन, तथा शक्त्या शक्तित्रयेण । तथा चोक्तम्–"प्रभुशक्तिर्भवेदाद्या मन्त्रशक्तिर्द्वितीयका । तृतीयोत्साह-शक्तिश्चेत्याहु शक्तित्रय बुधा "—किं कुर्वन् ? आयोधयन्, किम् ? मित्रमित्रम्, ( मित्र च ) कन्य ? स्वस्यात्मन , अरेश्च शत्रोश्च । तथा पार्ष्णिग्राहमाक्रन्दकञ्च, तथा आसारौ पार्ष्णिग्राहमित्रमाक्रन्दकमित्र च आयोधयन्। अत्र व्यक्तितया व्याक्रियते—स्वमित्रमित्रेण सहारिमित्रमित्रमायोधयन्, तथा स्वमित्रेणारिमित्रम्, आक्रन्दकेन । सह पार्ष्णिग्राह पार्ष्णिग्राहासारेण सहाक्रन्दासारम् । कथम् ? ननु, नन्विति शब्दोऽत्र निश्चयार्थो ऽवधारणार्थोऽप्यामन्त्रणार्थो वा गृह्यते । मित्रादयो दश द्वौ मध्यस्थाविति द्वादशमण्डलम । तथा चोक्तम्— "विजिगीषोर्द्विषज्जेतुर्मित्रमित्रं रिपोरपि । जिगीषोर्मित्रमित्रञ्च मित्रारेर्मित्रमेव च ॥ जिगीषो पृष्ठत पार्ष्णि-ग्राहाक्रान्दावुपस्थितौ । तदासारो तु विज्ञेयो मध्यस्थौ पार्श्वयोरपि" ॥११॥

**रक्षोपायः शक्यते केन कर्तु कः क्रुद्धेऽस्मिन्वामयीहेत योद्धुम् ।**
**उद्योक्तव्यं नैष कालः क्षमाया योज्यो योगक्षेमसिद्ध्यै हि दण्डः ॥१२॥**

द्वि । रक्षेति–शक्यते समथा भूयते, केन कर्त्राऽपि तु न केनापि, किम् ? कर्त्तुम् विधातुम्, क ? रक्षोपाय रक्षसो रावणस्यापायो विध्वंसस्तथा ईहेत इच्छेत क अपि तु न कोऽपि, कि कर्त्तुम् ? योद्धुम्, क ? अस्मिन्रावणे, कथम्भूते ? क्रुद्धे, पुनर्वामे प्रतिकूले, अत उद्योक्तव्यमुद्यम करणीय, यतो न वर्त्तते क ? एष काल समय, कस्या ? क्षमाया, अतो योज्यो योजनीय, क ? दण्ड. सैन्यम्, कस्यै ? योगक्षेम-सिद्ध्यै, योगोऽलब्धलाभ, क्षेमो लब्धपरिरक्षणम्, तयो सिद्ध्यै सिद्धिनिमित्तम्, कथम्? हि स्फुटमिति शेषः ।

भारतीय–रक्षोपायो रक्षाया उपाय., केन कर्त्तु शक्यतेऽपि तु न केनापि, वाऽथवाऽस्मिन् मयि विष्णौ क्रुद्धे सति क ईहेत योद्धुमपि तु न कोऽपि । अत उद्योक्तव्यम्, क्षमाया नैष कालो वर्त्तते, योज्यो दण्ड, कस्यै ? योगक्षेमसिद्ध्यै, कथम् ? हि स्फुटम् ॥१२॥

**इत्येतस्मिन्नुक्तवत्येतदेवं धीरोदारं धर्मजन्मा बभाषे ।**
**गाम्भीर्येणानूनभाजाम्बवोऽसौ राशिः सत्त्वस्याश्रयः शौर्यवृत्तेः ॥१३॥**

इतीति–इत्युक्तप्रकारेणैतस्मिन्सुग्रीवे, एतदेवमुक्तवति सति बभाषेऽवादीत्, कोऽसौ ? असौ जाम्बव., कथ यथा भवति ? धीरोदारम्, कथम्भूत' ? धर्मजन्मा धर्मेणोपलक्षित जन्म यस्य स धर्मजन्मा, पुन' कथ-भूत. ? अनूनभा प्रचुरकायकान्ति, अथवा प्रौढप्रताप, पुनर्गाम्भीर्येण सत्त्वस्य राशि, पुन शौर्यवृत्तेराश्रय.।

भारतीय –इत्युक्तप्रकारेणैतदेवमेतस्मिन् नारायण उक्तवति सति बभाषे, क ? असौ धर्मजन्मा युधि-

---

सर्वथा सन्नद्ध विजयका इच्छुक अपने तथा शत्रुके मित्रोंको, मित्रोंके मित्रोंको सेनाके पीछेके व्यूहभूत पार्ष्णिग्राह और आक्रन्दकोंको एव दोनों पार्श्वोंके बीचमें चलती सेना (आसारों)को लड़ाते हुए, सामादि उपायोंके द्वारा, प्रभु-मंत्र-उत्साह शक्तिके द्वारा और विद्या, आदिकी सिद्धिके द्वारा निश्चित ही शत्रुका नाश करते हैं । ॥११॥

इस राक्षसका कौन विनाश (रक्षस.-अपायः) कर सकता है ? इसके कुपित तथा प्रति-कूल हो जानेपर कौन इससे युद्ध करने की इच्छा करेगा ? अतएव इससे लड़नेका ही पूर्ण प्रयत्न करना चाहिए यह क्षमाका समय नहीं है । अप्राप्तकी प्राप्ति (योग) तथा प्राप्तके सरक्षण (क्षेम)के लिए दण्ड का प्रयोग करना चाहिये [ कौन विष्णु (मयि)के कुपित हो जानेपर उनसे लड़नेका साहस करेगा अथवा रक्षाका उपाय (रक्षोपाय) कर सकता है ] ॥१२॥

इस प्रकारसे, इतना सुग्रीवके द्वारा कहते रहनेपर ही जाम्बवान्ने अत्यन्त धीरता और उदारतापूर्वक कहा था । जाम्बवान्का जन्म धर्मके लिए था, शरीरकी कान्ति अवि-कल थी, गम्भीरताके कारण वह बलकी राशि था तथा वीर वृत्तिका आश्रय था [ इस प्रकारसे कृष्णजीके द्वारा कहे जानेपर धर्मराज युधिष्ठिरने धीरोदार रूपसे कहा था, धर्म-

ष्ठिरः, कथं यथा भवति ? धीरोदारम्, कथम्भूत. ? आम्भवो राशिः समुद्र., कस्य ? सत्त्वस्य, केन कृत्वा ? गाम्भीर्येण, कथम्भूतेन ? अनूनभाजा प्राचुर्यं भजमानेन, पुन. कथम्भूतः ? आश्रय', कस्याः ? शौर्यवृत्ते-रिति ॥१३॥

**कर्मोपायं प्रक्रमं तत्फलाप्तिं साधूदाख्यत्पौरुषेणानुविद्धम् ।**
**वस्तूदात्तं भूरिवागल्पसारा स्वल्पे दृश्यं दर्पणे हि स्थवीयः ॥१४॥**

कर्मेति–उदाख्यदुदाहरत्, कोऽसौ ? जाम्बवो युधिष्ठिरश्च, कम् ? कर्मोपाय बलदुर्गराष्ट्रधान्यादिविषयमात्मीयम्, तथा प्रक्रम षाड्गुण्यविषयम्, तथा तत्फलाप्तिं कार्यारम्भात् कार्यफल कार्यप्राप्तिश्च, कथं यथा भवति ? साधु कथम्भूत कर्मोपाय प्रक्रमञ्च ? पौरुषेणानुविद्धमनुस्यूतम्, पुनर्वस्तूदात्त वस्तुसमृद्धम्, युक्तमेतत्, स्यात् भूरिवाक् प्रचुरवचनम्, कथम्भूता स्यात् ? अल्पसारा अल्पार्था तुच्छेत्यर्थः । हि यस्मात् यथा स्वल्पे दर्पणे दृश्य स्तम्भकुम्भादिवस्तुस्थवीयः स्थूलतर स्यादिति ॥१४॥

**किं व्यायामो यो विहीनः शमेन व्यायामं यः प्रेक्षते किं शमस्तौ ।**
**योगक्षेमस्यैतयोः षड्गुणास्ते योनिस्तेभ्यः स्थानवृद्धिक्षयाः स्युः ॥१५॥**

किमिति–स किं व्यायामः कार्यारम्भाणा योगाराधनलक्षणः, यो विहीन. स्यात्, केन ? शमेन कर्मफलभोगोपभोगाना क्षमाधनलक्षणेन, किं हि स्वर्गफलनिरपेक्षस्तपोमार्गस्तथा स किं शमो य. प्रेक्षते, कथम् ? व्यायामम्, तपस्याक्लेशव्यपेक्ष. स्वर्गः, तौ व्यायामशमौ योनि. स्याताम्, कस्य ? योगक्षेमस्य । 'अत्र समाहारापेक्षया एकवचनम् । एतयोर्व्यायामशमयो ते षड्गुणा. सन्धिविग्रहयानासनसंश्रयद्वैधीभावलक्षणा. योनिः स्युः, तेभ्य. षड्गुणेभ्य स्यु, के ? स्थानवृद्धिक्षया. फलानि । तथाहि यस्मिन्गुणे परस्य वृद्धिरात्मन. क्षयस्तस्मिन् तिष्ठेत्स क्षय., यस्मिन्परस्य क्षय आत्मनो वृद्धिस्तस्मिन्तिष्ठेत्सा वृद्धि., यस्मिन्परस्य आत्मनश्च क्षयो न तत्स्थानम् अथवा यदि यातव्यः शत्रुस्थानस्थित' स्यात्तेन सह सन्ध्यासने स्तः, वृद्धियुतश्चेद्भवेत्तेन सार्द्धं द्वैधीभावसंश्रयौ स्त । यदि क्षयी स्यात्तेन साक यानविग्रहौ स्त. ॥१५॥

**तव्यं तत्प्रकृत्यानुकूल्यं दैवं मार्त्यं कर्मनिर्माणशक्तिम् ।**
**ध्यात्वा कृत्याकृत्यपक्षान्गृहीत्वा वाग्दानाभ्यामुद्यतेनाभिषेण्यम् ॥१६॥**

तदिति–तत्तस्मात्कारणादभिषेण्य सेनयाऽभियातव्यमुद्यतेन विजिगीषुणा, किं कृत्वा ? पूर्वं गृहीत्वादाय, कान् ? कृत्याकृत्यपक्षान्, कृत्या कर्त्तुं शक्या., अकृत्या. कर्त्तुमशक्या., कृत्यानामकृत्यानाञ्च ये पक्षास्तान् भेद्याभेद्यपक्षानित्यर्थः । काभ्याम् ? वाग्दानाभ्याम्, यत. किं वाङ्मात्रेण दानरहितेन, किं दानमात्रेण सम्भाषणरहितेन कार्यं स्यात्, अतः द्वाभ्यामेव युगपद्भवितव्य कार्यसिद्धये । किं कृत्वा ? पूर्वं ध्यात्वा, कम् ?

---

राज परिपूर्ण रूपसे विकसित गाम्भीर्यके कारण पराक्रमके समुद्र (आम्भवो राशिः) थे तथा वीर वृत्तिके ] ॥१३॥

जाम्बवन्त अथवा युधिष्ठिरने सैन्य, दुर्ग आदि कर्मोंके उपायों, संधि, विग्रह आदि प्रक्रमों तथा इनके फलोंकी प्राप्तिके विषयमें भलीभाँति समझा दिया था। यह मन्त्रणा पौरुष के पुटसे व्याप्त थी, अर्थमें महान् थी। बहुत वचन और थोड़े अर्थ वाली नहीं थी क्योंकि छोटेसे दर्पणमें भी बड़े-से-बड़े पदार्थकी परछाईं दिख जाती है ॥१४॥

वह बल साधना किस काम की जिसका फल व्यवस्था और समृद्धि न हो। वह शान्ति और समृद्धि भी कैसी जो कष्टों और साहसकी अपेक्षा करती हो। व्यायाम और शमको योग तथा क्षेमका उद्गम कहा है। इन्हीं दोनोंमें सन्धि, विग्रह आदि वे षड्गुण निहित हैं जिनके प्रयोग-द्वारा अवस्थिति, वृद्धि और क्षय होते हैं ॥१५॥

अतएव विजिगीषुको सहायता करनेमें समर्थ तथा असमर्थ पक्षोंका विचार करके और उन्हें आश्वासन तथा सहायता देकर अथवा लेकर अनुगामी बनाकर, सब प्रकारसे

यातव्य व्यसनिनमधार्मिक घुणजग्धकाष्ठसधर्माण शत्रुम्, तथा ध्यात्वा, कि तत्प्रकृत्यानुकूल्य शत्रुप्रकृतीना स्वाम्यमात्यादीनामानुकूल्य तथा ध्यात्वा, किम् ? दैव धर्माधर्मलक्षणम्, तथा ध्यात्वा, किम ? मार्त्य नयानयलक्षणम्, तथा ध्यात्वा, काम् ? निर्माणशक्ति कार्यनिष्पत्तियोग्यतामिति ॥१६॥

**साम्ना मित्रारातिपातौ भवेतां दण्डेनारं केवलं नैव मैत्री ।**
**सान्त्वे दण्डः साम दण्डे न वह्नेर्दाहोऽस्त्येकः शैत्यदाहौ हिमस्य ॥१७॥**

साम्नेति–भवेता स्याताम्, कौ ? मित्रारातिपातौ मित्र शत्रुपातञ्च, केन ? साम्ना, तथा स्यात् । किम् ? आरम् अरेर्भाव, शत्रुत्वमित्यर्थ । कथम् ? केवल परमेकमेव वा, केन ? दण्डेन, नैव मैत्री स्यात् । अतो न स्यात्, क. ? दण्ड, क ? सान्त्वे साम्नि युक्तमेतत् तथा न स्यात् किम् ? साम, क ? दण्डे । अस्ति, क ? दाह, कथम्भूत ? एक, कस्य ? वह्ने. कृशानो, स्त स्याताम्, कौ ? शैत्यदाहौ, कस्य ? हिमस्य तुहिनस्येति ॥१७॥

**तीक्ष्णो नादः साधयेद्यन्म्रदीयान्मूलं नाप्नोत्यग्निरापः खनन्ति ।**
**किञ्च प्राप्यं वक्रशीलो न यावद्यात्येवजुस्तावदभ्येत्य भुङ्क्ते ॥१८॥**

तीक्ष्ण इति–साधयेत्, क ? म्रदीयान् मृदुभाषी नर, किम् ? यत्, अद एतत्साम, तन्न साधयेत् क ? तीव्र तीव्रभाषी, यतो नाप्नोति न लभते, क ? अग्नि., किम् ? मूलम्, यथा खनन्त्युन्मूलयन्ति, का ? आप. पयासि, किम् ? मूलम्, अथ तीव्रत्व प्रदर्शितम् । किञ्चाधिकमुच्यते । यावत् न याति न प्राप्नोति, क ? वक्रो वक्रशीलो नर, किम् ? प्राप्य लभ्य वस्तु । तावद्भुङ्क्त एव, क. ? ऋजु प्राणी, किम् ? प्राप्यम्, किं कृत्वा ? पूर्वमभ्येत्य शीघ्रमागत्येति ॥१८॥

**साम्नारब्धे शात्रवे किं चरैर्वा भेद्या दूतैरेव तस्योपजाप्याः ।**
**भिन्नं राज्यं सुप्रवेशं मणिं वा वज्रोत्कीर्णं निर्विशेत्किं न तन्तुः ॥१९॥**

साम्नेति–किमाक्षेपे, किं प्रयोजनम् ? कै ? चरैर्गूढपुरुषै., क्व सति ? शात्रवे शत्रुसमूहे साम्ना सान्त्वेनारब्धे सति, वा अथवा जायन्ते, के ? उपजाप्या कर्णेजपा, कथम्भूता ? भेद्या भेत्तु शक्या, केन ? साम्ना, सदा किं प्रयोजनम् । कै ? दूतैरेव, युक्तमेतत् । स्यात् किम् ? राज्यम्, कथम्भूतम्, सुप्रवेशम्, कथम्भूत सद् ? भिन्नम्, वा शब्दोऽत्रोपमार्थोऽवगम्यते, तेनायमर्थ तन्तुर्दवरक., वज्रोत्कीर्णं हीरकेण विद्ध मणिं सुप्रवेश्य यथा, किं न निर्विशेदपि तु निर्विशेदेव ॥१९॥

---

सन्नद्ध होकर सेना लेकर शत्रुपर आक्रमण करना चाहिये । इसके पूर्व शत्रुकी स्वामी, आदि अठारह प्रकृतियों, पुण्य पाप, नीति-निपुणता अथवा अनीतिमत्ता और कार्य-शक्तिका भी विचार कर लेना चाहिये ॥१६॥

सामके द्वारा मित्र प्राप्ति तथा शत्रु-विनाश होता है । दण्डके उपयोगसे शत्रु ही होते हैं मित्रता नहीं होती है । सामके स्थानपर दण्डका और दण्डके पात्रपर सामका प्रयोग ठीक नहीं है । एक (दण्ड) तो अग्निसे जलाना है तथा दूसरा (साम) हिमके शीत और दाहके सदृश है ॥१७॥

तीक्ष्ण प्रकृति वह कार्य नहीं कर पाता जो कोमल प्रकृति करता है । अग्नि पेड़की जड़ तक नहीं पहुँच पाती किन्तु पानी उसे उखाड़कर फेंक देता है । टेढा चलनेवाला (कुटिल) जब तक अभीष्टके पास पहुँचता भी नहीं है तब तक सीधा चलता (सरल) उसके पास पहुँचकर उपभोग भी कर लेता है ॥१८॥

यदि शत्रुका प्रतीकार साम-द्वारा आरम्भ हो जाय तो गुप्तचरोंकी क्या आवश्यकता है ? उसके सन्निकट परामर्शदाताओंमें दूतोंके द्वारा ही भेद डाल देना चाहिये । भेदके शिकार राज्यपर विजय पाना सुकर होता जैसा कि वज्रके द्वारा भेदे गये मणिमें क्या सरलतासे तागा नहीं चला जाता है ? ॥१९॥

**नानामार्गः पांसुलो दीर्घसूत्रः शत्रुः पन्थाश्चाप्तगत्यागमेन ।**
**यत्तत्क्षेपं जायते तत्कदा वा गम्यो नीचैश्चक्षुरप्रक्रमेण ॥२०॥**

नानेति–जायते, कः ? शत्रुः, कथ यथा भवति ? यत्तत्क्षेपम्, यदा तदा काले क्षेपो भवतीत्यर्थः । केन ? आप्तगत्यागमेन, ये येषामवञ्चकास्ते तेषामाप्ताः आप्ताना यातायातेन, कथम्भूत' शत्रुः ? नानामार्ग. समृद्धासमृद्धप्राय , पुन. कथभूतः ? पासुल. पापिष्ठ', पुन' दीर्घसूत्र. भाविकार्यफलसम्पदन्वेषी, तत्कदा वा गम्यो जायते शत्रुः । केन हेतुना ? नीचैश्चक्षुरप्रक्रमेण नीचैश्चक्षुर्येषा ते नीचैश्चक्षुपस्तेषामप्रक्रमेण शत्रूणामनुद्योगेनेत्यर्थः । अथवा तत्कदा वा गम्यः । कैः ? नीचैर्न्यायमार्गहीनै., केन च हेतुना ? क्षुरप्रक्रमेण बाणप्रक्रमेणेति । पन्थाश्चैव यत्तत्क्षेप जायते, केन ? आप्तगत्यागमेन, कथम्भूतः पन्थाः ? नानामार्गः बहुप्रकार. प्राञ्जलाप्राञ्जलप्राय. पुन. पासुल. रेणूत्करेण सह वर्त्तमानः, पुन दीर्घसूत्र. दूरतरस्तत्, कदा वा गम्य पन्थाः केन हेतुना ? नीचैश्चक्षुरप्रक्रमेण अधोनयनप्रवृत्त्या अधश्चक्षुषी कृत्वा शनैः शनैरित्यर्थ. ॥२०॥

**अप्यज्ञात्वा रावणावार्यशक्तिं के मे तन्त्रावापयोश्चेत्यमत्वा ।**
**नो स्थातव्यं देशकालानपेक्षं शय्योत्थायं धावतां कार्यसिद्धिः ॥२१॥**

द्वि. । अपीति–नो स्थातव्यम्, कथ यथा भवति ? देशकालानपेक्ष देशकालावनपेक्ष्येत्यर्थ । कि कृत्वा ? पूर्वमज्ञात्वा, काम् ? रावणावार्यशक्ति रावणस्याप्रतिषेध्या शक्तिम्। किं कृत्वा ? पूर्वममत्वा । कथम् ? इति ? के पुरुषाः स्यु', कस्य ? मे मम, कयोर्मध्ये ? तन्त्रावापयोः, तन्त्र स्वप्रकृत्युत्पत्तिविधानलक्षणम्, आवाप. परशक्तीनामात्मनि विषयेऽध्यारोपलक्षणः, तन्त्रञ्चावापश्च तन्त्रावापौ तयोस्तन्त्रावापयोरपीति, युक्तमेतत् कार्यसिद्धि', किं कुर्वता सताम् ? धावता पुरुषाणाम्, कथ यथा भवति ? शय्योत्थाय शय्याया उत्थायेति ।

अधुना भारतीय –हे आर्य गुणैर्गुणवद्भिर्वा अर्यत इत्यार्यस्तस्यामन्त्रणम्, नो स्थातव्यम्, कथम् ? देशकालानपेक्षम्, कि कृत्वा ? पूर्वमज्ञात्वा, काम् ? शक्तिम्, क्व ? अरौ शत्रौ, कथम्भूते ? अणावपि क्षुद्रेऽपि, किं कृत्वा ? पूर्वममत्वा, के मे तन्त्रावापयोश्चेति, युक्तमेतत्, शय्योत्थाय धावता कार्यसिद्धिरिति ॥२१॥

**इत्याकूतं तस्य भीमोहितस्य ज्ञात्वालापैरञ्जनानन्दनोऽसौ ।**
**इत्थंकारं पथ्यमर्थ्यं जगाद न्यायं नोपेचिक्षिपन्ते हि सन्तः ॥२२॥**

इतीति–जगाद कोऽसौ ? अञ्जनानन्दनः हनूमान्, किम् ? पथ्यम्, कैः कृत्वा ? आलापै , कथम्भूतम् ? अर्थ्यमभिलपणीयम्, किं कृत्वा ? पूर्वमित्थङ्कारमेव कृत्वा, किं कृत्वा ? पूर्वं ज्ञात्वा, किम् ? आकू-

अस्थिर नीतिमान्, पापनिष्ठ, अवसरका लाभ उठानेमे असमर्थ शिथिल शत्रु मार्गके समान प्रामाणिक पुरुषोंके चले जाने तथा वापस न आनेके कारण जिस किसीके द्वारा तिरस्करणीय हो जाता है । नीचेकी ओर ही देखनेवाले ऐसे शत्रुपर कब एकाएक आक्रमण नहीं किया जा सकता है ? विविध वीथियों युक्त, धूलमय (सूखा) दूर दूर तक चला गया तथा विश्वस्त लोगोंसे आया-गया मार्ग जिस किसीके जाने योग्य हो जाता है । ऐसे मार्गपर क्या नीची दृष्टि करके सावधानीसे चलना चाहिये ॥२०॥

रावणका प्रतिरोध करनेके लिए कठिन शक्तिको विना जाने, कितनी अपनी निजी शक्ति है और कितनी दूसरोंसे मिलेगी इसका विचार विना तथा अनुकूल देश तथा समयकी उपेक्षा करके नहीं रहना चाहिये क्योंकि शय्यासे उठकर ही दौड़ते हुओंको ही सफलता मिलती है [ हे आर्य कृष्ण ? छोटेसे छोटे भी शत्रुकी शक्तिको विना जाने (आर्य? अणौ–अपि अरौ शक्तिं अज्ञात्वा) सफलता मिलती है ] ॥२१॥

भयसे मोहित (भी-मोहित) उस जामवन्तके वचनों द्वारा ही उसके अभिप्रायको जान-

१ 'नानासर्ग '–द० ।

तमभिप्रायम्, कस्य ? तस्य जाम्बवस्य, कथम्भूतस्य ? भीमोहितस्य भिया मोह प्राप्तस्य, क्थ ज्ञात्वा ? इत्युक्त-प्रकारेण, युक्तमेतत् नोपेचिक्षिपन्ते नोपेक्षितुमिच्छन्ति, के ? सन्तः सत्पुरुषाः, किम् ? न्याय्य न्यायादनपेतम्, कथम् ? हि स्फुटमिति ।

भारतीय–जगाद, कोऽसौ ? भीम, किम् ? पथ्यम्, कथम्भूतम् ? अर्ध्यम्, कि कृत्वा ? पूर्वमित्थङ्कारमेवङ्कत्वा अङ्गीकार विधाय, (इत्यर्थ) क्व ? असौ खड्गे, कि कृत्वा ? पूर्व ज्ञात्वा, किम् ? आकृतम्, कस्य ? तस्य युधिष्ठिरस्य, कथम्भूतस्य ? हितस्याव्यभिचारिण कथम् ? इत्युक्तप्रकारेण, कथम्भूतो भीम. ? रञ्जनानन्दन रञ्जना चित्ताह्लादनोपायलक्षणा, रञ्जनया नन्दयतीति रञ्जनानन्दन अत्र ल्युप्रत्यय । कै' कृत्वा ? आलापैरिति । युक्तमेतत्, न्याय्य नोपेचिक्षिपन्ते हि सन्त ॥२२॥

**न्यूना वाणी नोपकुर्याज्जडानामुन्मूढानां चाधिकोद्वेजनाय ।**
**न स्तोकेयं तावकी नातिरिक्ता यस्तूपात्तान्वेति लावण्ययुक्तिम् ॥२३॥**

न्यूनेति–नोपकुर्यात् । का ? वाणी, केषाम् ? जडाना हेयोपादेयविवेकविकलानाम्, कथम्भूता ? न्यूना स्तोकाऽल्पाक्षरा । अत्र क्रियाया अध्याहार । तथा च जायते, का ? वाणी, कस्मै ? उद्वेजनाय, केषाम् ? उन्मूढानाम् प्राज्ञानाम्, कथम्भूता सती ? अधिकाऽक्षराडम्बरतया प्रचुरा कार्यशून्येत्यर्थ, इय तावकी वाणी तावन्न स्तोका न तुच्छा स्यात्तथा न स्यादतिरिक्ता रिक्तशून्यमतिक्रान्ताऽतिरिक्ता प्रचुरा, अतएवान्वेत्यनुयाति, का ? इय तावकी वाणी, काम् ? लावण्ययुक्ति विद्वज्जनाना युक्तियुक्तार्थसम्पादकतया[1] प्रामाण्यघटताम्, कथम्भूता सती ? वस्तूपात्ता वस्तुना उपात्ता वस्तूपात्ता परमार्थयुक्तियुक्ता, याथातथ्यविवेचनवतीत्यर्थ ॥२३॥

**सन्दिग्धेऽस्मिन्सत्पथे कापथौघैः पाश्चात्यानां पूर्वजैः पत्रपातः[2] ।**
**सोऽस्त्येवार्द्रो यः कृतः सन्नयाख्यस्तद्व्यामोहः किं वृथैव क्रियेत ॥२४॥**

सन्दिग्ध इति–एवकारोऽत्रावधारणार्थोऽधिगम्यते । अस्त्येव, कः ? स पत्रपात. भाषापत्रम्, कथम्भूत' ? आर्द्रो नूतन, पुन कथम्भूत ? सन्नयाख्य सती समीचीना नयस्याख्या नाम यस्य स तथोक्त, केषामस्त्येव ? पाश्चात्याना पश्चात्समुत्पन्नानाम्, य. कृत., कै ? पूर्वजैराद्यै, क्व सति ? अस्मिन्सत्पथे सता मार्गे, कथम्भूते ? सन्दिग्धे सन्देहतुलामारूढे, कै ? कापथौघैः दुर्जनाना मार्गसङ्घातै. यत, तत्तस्मात्कारणात्, किं वृथैव एवमेव क्रियेत, क ? व्यामोह इति ॥२४॥

**सन्तिष्ठन्ते सान्त्वमात्रेण नान्ये लिप्सन्तेऽर्थं ते न माद्यन्त्यदाने ।**
**कुप्यन्त्यन्ते दत्रिमाद्वैरबन्धाद्वैरं मन्ये दत्रिमं तल्लघीयः ॥२५॥**

---

कर अञ्जना सतीके नन्दन हनुमानने निम्न प्रकारसे परिणाममें सुखावह तथा सारगर्भित वाक्य कहे थे । उचित ही है सज्जन पुरुष न्याय-मार्गकी कभी भी उपेक्षा नहीं करना चाहते हैं [ हितचिन्तक उस धर्मराजके अभिप्रायको समझकर तलवारके विषयमें अपने वचनोंके विनोदसे सबको हर्षित करते हुए भीमने पहिले तो उसकी अनुमोदना की थी और फिर शुभावह तथा उपयोगी सम्मति दी थी । सज्जन ] ॥२२॥

थोड़ा कहे जानेपर मूर्खोंकी समझमें नहीं आता है, बहुत बोलना विशेषज्ञ विद्वानोंको उद्वेजित कर देता है किन्तु आपकी पूर्वोक्त उक्ति न कम है और न व्यर्थका प्रलाप ही है । समुचित सुझाव रूप अर्थसे परिपूर्ण होनेके कारण वह विद्वानोंकी युक्तिके समान है ॥२३॥

विविध पुनीत मार्गोंके कारण सन्देह भाजन इस समीचीन 'नीतिमार्गमें पूर्व पुरुषोंने धर्मनीति रूपसे विख्यात तथा सर्वथा नूतन जो परम्परा भावी पीढ़ियोंके लिए स्थापित की है वह आपके सामने है, तब व्यर्थके लिए ही द्विविधामें क्यों पड़ते हैं ॥२४॥

---

१, सवादकतया–द० । २ पत्रपाठ –द० ।

सन्तिष्ठत इति–न सन्तिष्ठन्ते न विरमन्ति, के ? अन्ये शत्रवः, केन ? सान्त्वमात्रेण, ये लिप्सन्ते लब्धुमिच्छन्ति, किम् ? अर्थं द्रव्यम्, न माद्यन्ति न तुष्यन्ति, के ? ते पुरुषाः, क्व ? अदाने, कुप्यन्ति कोपमायान्ति, के ? ते पुरुषाः, कस्मात् ? दत्रिमात्, क्व ? अन्तेऽवसाने, कथम्भूताद्दत्रिमात् ? वैरबन्धाद्वैर बध्नात्येव शीलात्, अतो मन्ये जानेऽहम्, किम् ? दत्रिमम्, किं मन्ये ? वैरम्, तत्तस्माल्लघीयो दत्रिममश्लाघ्यमिति ॥२५॥

**भेत्तुं नारिः शक्यतेऽरातिगृह्या भेद्या भिन्नेष्वेषु वैरी विभिन्नः।**
**किं भेदोक्त्या किं विभिन्नैः शफैर्वा गौरेवाश्वः किं त्वभिन्नैर्न वाह्यः ॥२६॥**

भेत्तुमिति–न शक्यते, कोऽसौ ? अरिः, किं कर्तुम् ? भेत्तुं तदा स्युः, के ? अरातिगृह्या अमात्यादयः पक्षाः, कथम्भूताः ? भेद्याः भेत्तुं शक्याः, यतः स्यात्, कोऽसौ ? वैरी, कथम्भूतः ? विभिन्नः, केषु सत्सु ? एष्वरातिगृह्येषु, कथम्भूतेषु ? भिन्नेषु वाऽथवा, किं पृच्छत, कया ? भेदोक्त्या, अत्र किमिति शब्दः प्रश्नार्थे बोद्धव्यः, किं गौरेव वृषभ एव वाह्यते ? कैः ? शफैः खुरैः, कथम्भूतैः ? विभिन्नैः, किन्तु न वाह्यो जायते ? कः ? अश्वः, कैः ? शफैः, कथम्भूतैः ? अभिन्नैः, अपितु वाह्य एवेति ॥२६॥

**कृत्याकृत्येष्वन्यदीयेषु योज्ये स्याद्दण्ड्योऽन्यः सामभेदोपदाने।**
**कल्प्येऽन्यस्मिन्कः परो दण्ड्यमानः शूराः शत्रौ कुर्वते तेन दण्डम् ॥२७॥**

कृत्याकृत्येष्विति–स्यात् कः ? अन्यः शत्रुः, कथम्भूतः ? दण्ड्यो दण्डमर्हतीति, दण्ड्यो दण्डोचितः, क्व सति ? सामभेदोपदाने, साम च भेदश्च उपदानञ्च, सामभेदोपदानम्, तस्मिन् कथम्भूते ? योज्ये, केषु विषयेषु ? कृत्याकृत्येषु भेद्याभेद्येषु सामन्तमण्डलादिषु अन्यदीयेषु कल्प्येऽन्यस्मिन्सति कल्पनागोचरेऽसौ सति, कः ? परो दण्ड्यमानोऽस्ति, अपि तु न कोऽपि, 'अत्र वासना विवक्षित विपक्ष विहायान्यो दण्ड्यमानो नाम नास्ति। तेन कारणेन कुर्वते विदधति, के ? शूराः, अतुलबलपराक्रमिणः क्षत्रियकुमाराः, कम् ? दण्डम्, क्व ? शत्रौ अराविति ॥२७॥

**कोऽपि क्षोभीभूतलङ्केशवारी राजन्नासीद्व्यापवानित्यचिन्त्यम्।**
**शस्त्रं शास्त्रं विक्रमं कौलपुत्र्यं तस्यैवानुप्रेक्षसे नास्य विष्णोः ॥२८॥**

क इति–हे राजन् हे जाम्बव, आसीत्, कः ? कोऽपि, कथम्भूतः ? क्षोभीभूतलङ्केशवारी अक्षोभः सक्षोभो भूतः क्षोभीभूतः क्षोभीभूतश्चासौ लङ्केशश्च क्षोभीभूतलङ्केशस्तं वारयतीत्येवं शीलः स तथोक्तः, पुनः

---

अन्य राजा लोग केवल आश्वासनों या साम-नीतिसे नहीं मानते हैं क्योंकि वे सम्पत्तिके लोलुप होते हैं। जब तक उन्हें धन नहीं मिलता है वे विरत नहीं होते हैं। शत्रुताका सूत्रपात करनेवाली दानहीनताके कारण वे अन्तमें कुपित भी हो जाते हैं। अतएव दानहीनताको सबसे निकृष्ट वैर मानना चाहिये ॥२५॥

शत्रुके द्वारा वशमें करणीय मंत्री आदि यदि नहीं फूटते हैं तो शत्रु भेद-नीति द्वारा नहीं जीता जा सकता है और यदि अरातिग्राह्य मन्त्री आदिमें फूट पड़ गयी तो शत्रुको पराजित ही समझिये। फिर भेदके लिए प्रयत्नसे क्या लाभ? क्योंकि गाय फटे खुरोंसे ही चलती है पर क्या अभिन्न खुरोंसे घोड़ा नहीं दौड़ता है? ॥२६॥

शत्रु पक्षके विषयमें क्या करणीय है और क्या अकरणीय है यह विचार करनेपर जब साम, भेद आदि उपाय त्याज्य हो जाँय तो शत्रु दण्डनीय ही होता है। इस कार्य परम्परामें कौन शत्रुपक्ष दण्डनीय नहीं है, अर्थात् सभी हैं। इसी कारणसे शूर पुरुष शत्रुपक्षपर दण्डनीतिका प्रयोग करते हैं ॥२७॥

हे राजन् अत्यन्त कुपित रावणका तिरस्कार-कर्ता व्यापक प्रभावशाली कोई हुआ था क्या यह अविचारणीय है। उसके ही आयुधबल, नीतिशास्त्रज्ञता, पराक्रम और

कथम्भूत ? व्यासवान् इति हेतोरनुप्रेक्षसेऽवलोकसे, क ? त्वम्, किं किम् ? शस्त्र तथा शास्त्र तथा विक्रम तथा कौलपुत्र्यम्, कथम्भूतम् ? अचिन्त्यम्, कस्य ? तस्यैव रावणस्य नास्य विष्णोर्लक्ष्मणस्येति सम्बन्ध ।

भारतीय पक्ष –हे राजन् हे युधिष्ठिर, कोऽपि केशवारिरासीत्, कथम्भूत ? क्षोभी सर्वदा प्रयाण-सम्भ्रमवान्, पुनः कथम्भूत ? व्यासवान्, कम् ? भूतलमवनीतलमिति हेतोरनुप्रेक्षसे, कोऽसौ ? त्वम्, किं किम् ? शस्त्र तथा शास्त्र तथा विक्रम तथा कौलपुत्र्यम्, कथम्भृतम् ? अचिन्त्यम्, कस्य ? तस्यैव जरा-सन्धस्यैव नास्य विष्णोर्नारायणस्येति ॥२८॥

**यः साम्राज्यं प्राज्यमध्यक्षमेषां त्वं नार्याढ्यं नोऽग्रहीद्वेत्सि किं तम् ।**
**सश्रीरामेणाहतो माधवेन द्रष्टव्योऽयं केन चान्येन साध्यः ॥२९॥**

य इति–हे आर्य ( हे ) गुणिगणसमाश्रय, किं न वेत्सि किं न जानासि, त्वम्, कम् ? तम् रावणम्, योऽग्रहीत् गृहीतवान्, किम् ? साम्राज्यम्, कथम् यथा भवति ? अध्यक्षम् प्रत्यक्षम्, एषाम् एषां नोऽस्माकम्, कथम्भूत साम्राज्यम् । प्राज्य प्रौढिमान्ढम्, पुनराढ्यम्, सोऽय रावणो द्रष्टव्य., कथम्भूतः सन् ? आहत, केन ? श्रीरामेण, कथम्भूतेन ? माधवेन लक्ष्मीवल्लभेन, चकारात्समुच्चयोऽधिगम्यते, तेनायमर्थ,–श्रीराम च विहाय केनान्येन साध्यो भवति, अपि तु न केनापि ।

भारतीय –हे आर्य स्वामिन्, किं न वेत्सि ? कम् ? त जरासन्धम्, योऽग्रहीत्, किम् ? साम्राज्यम्, कथ यथा भवति ? अध्यक्षम्, केषाम् ? एषान्नोऽस्माकम्, कथम्भूत साम्राज्यम् ? प्राज्यम्, पुनराढ्यम्, सोऽय द्रष्टव्य, कथम्भूत सन् ? आहत, केन ? माधवेन नारायणेन, कथम्भूतेन ? श्रीरामेण श्रीरेव रामा रमणी यस्य स श्रीरामस्तेन यद्वा श्रीरामाभ्या लक्ष्मीवलभद्राभ्या सह वर्त्तमानेन, केन चान्येन साध्य ॥२९॥

**दीप्त्यानिष्टं यस्य [1]निष्टब्धमारं ख्यातोऽवद्यन्यश्चरित्रैरवद्यम् ।**
**युष्मादृक्षा बाहवो यस्य पक्षास्तत्त्रैलोक्यं जय्यमस्यावलोक्यम् ॥३०॥**

दीप्त्येति–निष्टब्ध निरस्तम्, किम् ? आरमरीणा समूह, कया ? दीप्त्या क्षात्रतेजसा, कस्य ? यस्य, कथम्भूत सदारम् ? अनिष्टमनभिमतम्, य ख्यात प्रसिद्ध, कै ? चरणैराचरणै., किं कुर्वन् ? अवद्यन् निरस्यन्, किम् ? अवद्य पापमयशो वा, युष्मादृक्षा भवादृशा पक्षा यस्य बाहवो विद्यन्ते, तत्तस्मात् कारणात्, अवलोक्यम्, किम् ? त्रैलोक्यम्, कथम्भूतम् ? जय्य जेतु शक्यम्, कस्य ? अस्य रामस्य विष्णोश्चेति ॥३०॥

**इतीदमाकर्ण्य स पावनंजयेरतोऽत्रपार्थस्य विरित्सया रिपोः ।**
**उदीर्णमुच्चैः फलदोहलायुधस्तथासदृक्षः पुनरब्रवीद्वचः ॥३१॥**

---

अनुगामी कुलीन राजपुत्रताका आप विचार करते हैं इस विष्णु रामको क्यों नहीं देखते हैं [ हे धर्मराज ! पृथ्वीको कँपानेवाला (क्षोभीभूतलं) कोई व्यापक प्रभावशाली श्रीकृष्णजीका शत्रु (केशवारि) हुआ है यह अविचारणीय विष्णु श्रीकृष्णजीको ] ॥२८॥

हे सुग्रीव ! क्या आर्य उस रावणको नहीं जानते हैं जिसने हम सबके सामने ही अत्यन्त समृद्ध तथा विस्तृत साम्राज्यको बलपूर्वक ग्रहण किया है । अब तो यही देखना है कि वह लक्ष्मीके वल्लभ ( माधवेन ) श्रीरामके द्वारा मारा जाय । किसी दूसरेके द्वारा उसकी समाप्ति शक्य नहीं है [ हे यदुपति ! क्या आप उस जरासन्धको देखना है कि वह लक्ष्मी और बलराम ( श्री + रामेण ) से अनुगत माधवके द्वारा मारा जाय । ] ॥२९॥

जिसके प्रतापके द्वारा शत्रुओंका उपद्रव दूर हो जाता है, अपने प्रशस्त आचरणके द्वारा जो पाप-कर्मोंका परिहर्ता रूपसे प्रसिद्ध है तथा, आप जामवन्त अथवा पाण्डव ऐसे तपस्वी राजा जिसकी भुजाएँ हैं तथा जिसके लिए तीनों लोकोंकी विजय भी सुकर है वही राम अथवा कृष्ण इस ( रावण अथवा जरासंध ) की ओर दृष्टि देवें ॥३०॥

---

1 निष्टम्–द० ।

इतीति—अब्रवीदवादीत्, कोऽसौ ? स ऋक्ष. जाम्बवः, किम् ? वचः, कथम् ? पुनः पुनरपि, कथम् ? तथा तेनैवाञ्जनानन्दनाभिहितप्रकारेण, किं कृत्वा ? पूर्वमाकर्ण्य, किम् ? इदम् उदीर्णमुदीरितम्, कस्य ? पावनञ्जये. पवनञ्जयस्यापत्य पुमान् पावनञ्जयिस्तस्य पावनञ्जयेः पवनञ्जयपुत्रस्य हनुमन्नाम्नः, कथम् ? इत्युक्तप्रकारेण, केन हेतुनोदीर्णम् ? विरित्सया हन्तुमिच्छया, कस्य ? रिपो' शत्रोः, कथम् ? उच्चै. अतिशयेन, अतः कारणात्पुनरब्रवीद्वच., कथम्भूतम् ? सत्समीचीनम्, कथम्भूत ऋक्षः ? फलदोहलायुध' फले विपक्षक्षोदलक्षणे दोहल दोहलक यस्य तदायुध यस्य स फलदोहलायुध, कथम्भूतस्य पावनञ्जयेः ? अत्र-पार्थस्य न त्रपामर्थयतेऽत्रपार्थस्तस्यात्रपार्थस्य सलज्जस्येत्यर्थ. । अत्र पार्थस्येति हनूमत. कौलिन्य दर्शितम् ।

अथ भारतीय.—अब्रवीत्, क ? स हलायुधो बलभद्र., किम् ? वच, कथम् ? पुनस्तथा भीमोदित-प्रकारेण, किं कृत्वा ? पूर्वमाकर्ण्य, किम् ? इदम् उदीर्णमुदीरितम्, कस्य ? पार्थस्य भीमस्य, केन हेतुना ? विरित्सया कस्य ? रिपो., कथम्भूतमुदीर्णम् ? पावन पवित्र नीतिमार्गानुसारीत्यर्थ' । कथमुदीर्णम् ? इत्युक्त-विधिना, कथम्भूतो हलायुध. ? असदृक्षोऽनुपम. अत्र रूपेणाचारेण वा क्षात्रधर्मेण सकलकलापरिपूर्णत्वेन वा न हलायुधस्य तुल्योऽस्ति कश्चनेति भाव. । पुन. कथम्भूत. ? जयेरतः अरेर्जरासन्धस्य पराभव कर्त्तु मन्यत इत्यर्थ. । पुन. कथम्भूत. ? उच्चैःफलद उच्चै. फलानि ददातीत्युच्चै.फलद. स्वाश्रितानुन्नता पदवीं नीत वान्[1] ॥३१॥

**आक्रीडशैलाः कुलपर्वतास्ते वाप्यः समुद्रा जगदङ्गणं तत् ।**
**दिशः समस्तास्तव लङ्घनानां भवन्ति कीर्त्तेरपि न प्रभूताः ॥३२॥**

आक्रीडेति—भवन्ति जायन्ते ? के ? ते लोकविख्याताः कुलपर्वता. कथम्भूता. ? आक्रीडशैलाः क्रीडागिरयः, कस्याः ? तव कीर्त्तेस्ते समुद्रा. वाप्य क्रीडादीर्घिका भवन्ति । तथा तव कीर्त्तेस्तज्जगत् अङ्गन प्राङ्गण क्रीडायै भवति । तथा तव कीर्त्तेर्लङ्घनानामनर्गलफा[2]लकेलीना दिशोऽपि समस्ता न प्रभूता न प्रचुरा भवन्तीति शेषः[3] ॥३२॥

**बलीयसोऽपि द्विषतां निहन्तुरवद्यवृत्तेरपि कीर्त्तिभाजः ।**
**मातेव नीतिर्विपदां विहन्त्री नेया न सा कामदुघाऽवधूतिम् ॥३३॥**

बलीयस इति—न नेया न प्रापणीया, का ? सा नीति, काम् ? अवधूतिमवधीरणम्, कस्य ? तवेत्यध्याहार्यम्, कथम्भूतस्यापि ? बलीयस अपि बल सैन्यादिबाह्य[4]मान्तर वा शक्तित्रयलक्षणम्, बलसाह-

---

राजा पवनञ्जयके पुत्र, कुलीन एवं संकोचशील हनुमानके द्वारा शत्रुको मारनेकी इच्छासे स्पष्ट तथा बलपूर्वक कहे गये उक्त वचनोंको सुनकर, शत्रुके विनाशकी अभिलाषा-रूपी अस्त्रधारी उस रिच्छकुलीन ( ऋक्षः ) जामवन्तने फिरसे बोलना प्रारम्भ किया था [ उक्त प्रकारसे शत्रु जरासन्धके विनाशकी इच्छासे कहे गये भीम ( पार्थस्य ) के वचनोंको सुनकर महाफलोंके दाता ( उच्चै फलद ) विजयशील तथा लोकोत्तर ( असदृक्षः ) हलायुध बलरामने पुनः पवित्र सम्मति दी थी ] ॥३१॥

विजययात्रापर निकले तुमको वे कुलाचल क्रीडाशैल हो जॉयगे, समुद्र बावडीतुल्य सुतर हो जॉयगे, और सारा विश्व ऑगनके समान हो जायगा तथा समस्त दिशाएं तुम्हारी कीर्तिके उछलने ( विस्तार ) के लिए पर्याप्त न होंगी ॥३२॥

अतरंग वहिरग बलशाली, शत्रुओंके विनाशमे समर्थ, निर्दोष आचरणधारी तथा

---

१ वंशस्थवृत्तम् । २ 'अनर्गल फलकेलीनाम्'—प०, द०, ना० । ३ उपजाति ।
४, 'बल मातङ्गतुरङ्गमानुचरचरलक्षण बाह्यम्, अन्तरग वा बल शक्तित्रयलक्षणम् । —प०, द० ।

चर्य्यात् पुरुषोऽपि बलोऽभिधीयते, अत्यर्थं बलवत', पुनर्द्विपता विपक्षाणा निहन्तु, पुनरवद्यवृत्तस्य निरवद्या-चरणशीलस्य पुन कीर्त्तिभाजोऽपि, कथम्भूता नीति ? विपदा विपत्तीना विहन्त्री विध्वंसिनी पुन सम्पदा कामदुघा कामान् दोग्धीति सा, केव ? मातेव यथा जननी सर्वार्थसम्पादयित्री स्तनन्धयाना नावमान्या तथा नीतिरपि ॥३३॥

विद्याबलेन विभवेन पराक्रमेण
चिन्त्यस्त्वया बलवता बलवान्विपक्षः ।
दण्डारणिप्रकृतिरग्निरिवान्तरुत्थ-
स्तापं तनोति हि महानुभयोर्विमर्दः ॥३४॥

विद्येति—बलवता त्वया कर्त्रा विपक्ष शत्रु चिन्त्यश्चिन्तयनीय, केन चिन्त्यः ? विद्याबलेन विद्या-श्चतस्र आन्वीक्षिकीत्रयीवार्त्तादण्डनीतिलक्षणास्तासा बलेन सामर्थ्येन, तथा विभवेन विभूत्या तथा पराक्रमेण पौरुषेण, कथम्भूतो विपक्ष ? बलवान् हि यतस्तनोति विमर्द संग्राम, कम् ? तापम्, कयो ? तयोरुभयोर्न-रेन्द्रयो, कथम्भूतो विमर्द ? महान्, क इव ? अग्निरिव यथाग्निस्तनोति तापम् । कथम्भूतोऽग्नि. ? दण्डारणिप्रकृति. दण्डो मथनकाष्ठम् अरणिरध काष्ठम्, दण्डश्चारणिश्च दण्डारणी त एव प्रकृतिरुत्पत्तिकारण यस्य स दण्डपाणिप्रकृति । पुन कथम्भूत ? अन्तरुत्थ मध्यसमुत्पन्न [1]इति ॥३४॥

नयस्य शौर्यस्य धनस्य कीर्त्तेर्वाग्देवतायाः सततं श्रियश्च ।
मध्यस्थभावेन कृताभिवृद्धिर्विभीषणः किं विदितो न भीष्मः ॥३५॥

नयस्येति—किं न विदितः, क ? विभीषणो विभीषणनामधेयो रावणानुज, कथम्भूत. ? भीष्मो भयानकः, पुन कथम्भूत ? कृताभिवृद्धि विहितोपचय., कस्य ? नयस्य तथा शौर्यस्य तथा धनस्य तथा कीर्त्तेस्तथा वाग्देवताया सरस्वत्या श्रियश्च, अत्र वासनार्थोऽभिधीयते आत्मापेक्षो नय, आत्मनिरपेक्ष शौर्यम्, बहिरङ्ग धनम्, हिरण्यादिबाह्या पुण्यावाप्ति कीर्त्ति, कर्मारम्भाणामुपायशास्त्र वाग्देवता, कर्मफलोपभोगाना विभवानुभवः श्री, केन कृत्वा कृताभिवृद्धि ? मध्यस्थभावेन समवृत्त्या, कथम् ? सततमनवरतमिति ।

भारतीय पक्ष—किं न विदित. किं न विज्ञात, क भीष्मो गाङ्गेयनामा कौरवबलनेता, कथम्भूत. ? विभीषणो भयङ्कर [2] ॥३५॥

त्वं श्रीमहामङ्गल कुम्भकर्णं कन्याकुमारं वर वीरलक्ष्म्याः ।
समं रथो यस्य मनोरथश्च पूर्णस्तथाशासु कथं न वेत्सि ॥३६॥

---

यशस्वी आपको माताके समान नीतिकी अवज्ञा नहीं करनी चाहिये। क्योंकि नीतिपथ ही विपत्तियोंका विनाश करता है तथा अभिलषित अर्थोंको सहज ही जुटाता है ॥३३॥

स्वयं बलशाली आपके द्वारा उद्धत तथा बली शत्रुका, आन्वीक्षिकी आदि विद्याओंकी दृष्टिसे, सम्पत्ति साधनोंकी अपेक्षा तथा पराक्रमके आधारसे विचार किया जाना चाहिये। क्योंकि घिसने और घिसी जानेवाली लकड़ियोंके बीचसे उत्पन्न स्वाभाविक आगके समान संग्राम भी दोनों पक्षोंको महान् कष्ट देता है ॥३४॥

मध्यम मार्ग अथवा मध्यस्थताको धारण करके नीति, शौर्य, धन, वाग्देवी, सरस्वती तथा लक्ष्मीकी अनवरत वृद्धि करता हुआ वह दृढ़ रावणका भाई विभीषण अथवा अत्यन्त भयंकर कौरवोंका सेनापति भीष्म क्या आपको विदित नहीं है ? ॥३५॥

---

१ वसन्ततिलकावृत्तम् । २. उपजाति ।

त्वमिति–हे श्रीमहामङ्गल, कथं न वेत्सि, कः ? त्वम्, कम् ? कुम्भकर्णं कुम्भकर्णनामधेयं रावणानुजम्, कथम्भूतम् ? कन्याकुमारं कन्येव कुमारोऽपरिणीतः पुमान् कन्याकुमारोऽभिधीयते, तं कन्याकुमारं परिणेतारं वरमित्यर्थः। कस्या वरम् ? (वरं) वीरलक्ष्म्या (श्रेष्ठ) जयश्रियः (तथा) पूर्णः, कः ? रथश्चक्रचरणः, कासु आशासु दिक्षु, कस्य ? यस्य, कथम् ? समं युगपत्, तथा मनोरथश्च पूर्णः, कस्य ? यस्य, कासु ? आशासु वाञ्छासु। ~

भारतीयः–हे महामङ्गल ! हे कुम्भ ! हे वर ! कस्याः ? वीरलक्ष्म्याः, किं न वेत्सि, तं कर्णं कर्णनामधेयं नरं कौरवबलाग्र्यम्, कथम्भूतम् ? कन्याकुमारं कन्याया कुमारस्तं कुमारीपुत्रमित्यर्थः। शेषं समम् ॥३६॥

**द्विषन्मारीचोद्यप्रबलरथवेगो दिशि दिशि**
**स्वयं गर्जन्द्रोणो रणशिरसि केनाथ विधृतः।**
**सदाप्युच्छ्वासेनोच्छ्वसिति भुवनं यस्य सकलं**
**स कैर्वार्यो दुर्योधन इह बलेनेन्द्रजिदसौ ॥३७॥**

द्विषदिति–स मारीचो मारीचनामधेयो रावणमातुलः, केन विधृतः, अपि तु न केनापि, क ? रणशिरसि युद्धमूर्द्धनि, किं कुर्वन् ? द्विषन्, कथम् ? अद्य साम्प्रतम्, कथम्भूतो मारीचः ? द्रोणो मेघः, कथम् ? स्वयं स्वरूपेणात्मनेत्यर्थः। किं कुर्वन् ? गर्जन् गर्जितं कुर्वन्, पुनः प्रबलरथवेगः प्रबलो रथवेगो यस्य स तथोक्तः, क ? दिशि दिशि, अथवा असाविन्द्रजिन्नामा रावणपुत्रः कैर्वार्यः कैः प्रतिषेध्यः, क ? इह रणशिरसि, अपि तु न कैरपि। कथम्भूतः सन् ? दुर्योधनः दुःखेन योद्धुं शक्यः, यस्येन्द्रजितः श्वासेन सकलं भुवनमुच्छ्वसित्युच्छ्वासं करोति।

भारतीयः पक्षः–स द्रोणो धनुर्विद्यायां प्रसिद्धो द्रोणाचार्यनामधेयो गुरुः केन रणशिरसि विधृतः न केनापि, किं कुर्वन् ? स्वयमात्मना गर्जन् ? कथम्भूतः ? द्विषन्मारी द्विषतो मारयतीत्येवं शीलः शत्रुविनाशक इत्यर्थः। पुनश्चोद्यप्रबलरथवेगश्चोद्य आश्चर्यभूतः अथवा चकारोऽत्र, उद्यप्रबलरथस्य वेगो यस्य सः तथोक्तः, क दिशि दिशि, अथासौ दुर्योधनः दुर्योधननामधेयो गान्धारीपुत्रः कौरवाधिपः कैर्वार्यः, क ? इह रणशिरसि, अपि तु न कैरपि, कथम्भूतः ? बलेन शरीरसामर्थ्येन चतुरङ्गसैन्यलक्षणेन वा इन्द्रजिदिन्द्रस्य जेता। शेषं प्राग्वत्[1] ॥३७॥

---

हे लक्ष्मी तथा कल्याणके भाजन सुग्रीव ! वीरता रूपी श्रेष्ठ लक्ष्मीके लिए बालब्रह्मचारी (कन्याकुमार) वर रावणके अनुज उस कुम्भकर्णको नहीं जानते हो। जिसके समस्त दिशाओंमें व्याप्त रथके साथ साथ मनोरथ भी पूर्ण हो गये हैं [हे श्री के वर, तथा महामंगलमय कलश ! क्या आप वीरलक्ष्मीके कर्ण समान कुमारी कुन्तीके पुत्र सिन्धराज कर्णको नहीं जानते हैं। जिसके · ·] ॥३६॥

समस्त दिशाएँ जिसके तीव्र रथके वेगसे आज आक्रान्त हैं और गरजते हुए मूर्तिमान प्रलय मेघ (द्रोण) तुल्य है उस शत्रु रावणके मामा मारीचको युद्धमें कौन रोकेगा ? जिसकी साँसके द्वारा सर्वदा ही सारे जगत्की साँस फूल जाती है तथा जो भीषण युद्ध करता है उस इन्द्रजीतको यहाँ युद्धमें किसके द्वारा परास्त किया जायगा ? [शत्रुओंके संहारक, सब दिशाओंमें प्रबल वेगशील रथको बढ़ाते हुए तथा क्रोधसे गरजते हुए उस द्रोणाचार्यका (स्वयं-गर्जन्-द्रोण) घोर संग्राममें किसके द्वारा प्रतिरोध किया जायगा ? सेनाके द्वारा इन्द्रको भी जीतनेमें समर्थ (बलेन-इन्द्रजित्) कौरव-राज दुर्योधनका युद्धमें कौन सामना करेगा क्योंकि उसकी आज्ञासे सकल भुवन व्याप्त है] ॥३७॥

---

१ शिखरिणीवृत्तम्।

एभिः शिरोभिरतिपीडितपादपीठः
सङ्ग्रामरङ्गशवनर्त्तनसूत्रधारः ।
तं कंसमातुल इहारिगणं कृतान्त-
दन्तान्तरं गमितवान्न समन्दशास्यः ॥३८॥

एभिरिति–दशास्यो रावण, क त भुवनतले प्रतीतमरिगण शत्रुमेलापक न गमितवान् न नीतवान् ? अपि तु सर्वमपि गमितवान् । किम् ? कृतान्तदन्तान्तर यमदशनमध्यप्रदेशम्, क्व ? इह मध्यलोके, कथम् ? सम युगपत्, कथम्भूत सन् ? समातुल. मातुलेन मारीचेन सह वर्त्तमान, पुन कथम्भूत ? एभि. पूर्वोक्तै-र्नरेन्द्रै. शिरोभिर्मौलिभि अतिपीडितपादपीठ अतिपीडित निघृष्ट पादपीठ यस्य स, सामन्तोपमर्दितचरणविष्टर इत्यर्थ पुन सङ्ग्रामरङ्गशवनर्त्तनसूत्रधार समरनर्त्तनस्थाने शवनर्त्तनाचार्य्य. ।

भारतीय —स कसमातुलो जरासन्ध तमरिगण कृतान्तदन्तान्तर न गमितवान्, अपि तु गमितवानेव, कथम्भूत ? मन्दशास्य मन्दतोद्रेकत्वादात्ममन्याना शिक्षादायक. । अन्यत्सर्व समम्[1] ॥३८॥

विगणय्य परस्य चात्मनः प्रकृतीनां समवस्थिति पराम् ।
अमुयोपचिताः कयापि चेद्द्विपतेऽसूयियिषन्ति सूरयः ॥३९॥

विगणय्येति–चेत्यदि, उपचिता पुष्टिं नीता., के ? सूरय आचार्य्या., कयापि, कया ? अमुया प्रकृति-समवस्थित्या, तदा असूयियिषन्त्यसूया कर्त्तुमुत्सहन्ते, कस्मै ? द्विषते शत्रवे, किं कृत्वा ? पूर्वं विगणय्य ज्ञात्वा विमर्द्येत्यर्थ, काम् ? परस्य शत्रोस्तथाऽऽत्मन परामुत्कृष्टा प्रकृतीना समवस्थितिम्[2] ॥३९॥

तत्संहारो मा स्म भूद्बन्धुतायाः सिद्धादेशव्यक्तये सिद्धशैलम् ।
नीत्वा विष्णुं तं परीक्षामहेऽमी ज्ञात्वा दण्डं साम वा योजयामः ॥४०॥

तदिति–तत्तस्मात्कारणात् बन्धुताया बन्धुसमूहस्य मैत्र्या वा सहारो विलयो मा स्म भूत् मा भवत् । अत परीक्षामहे परीक्षाङ्कुर्म । के ? अमी वयम्, किं कृत्वा ? पूर्वं नीत्वा त विष्णु लक्ष्मणम्, क नीत्वा ? सिद्धशैल कोटिशिलाम्, कस्यै ? सिद्धादेशव्यक्तये श्रुतज्ञानोपदिष्टनिश्चयाय, तथा च योजयाम । कम् ? दण्ड वाऽथवा साम, किं कृत्वा ? पूर्वं ज्ञात्वा, क ? त विष्णु लक्ष्मणम् । भारतपक्षे नारायणमिति[3] ॥४०॥

इत्यस्य वाचमभिनन्द्य भरोत्थितानां
राज्ञां गलाङ्गदगलद्गुलिकाच्छलेन ।

---

इन पराक्रमी राजाओंके मस्तकोंसे पूजित चरण, आसनपर विराजमान, संग्राम रूपी रंगमंचपर शवोंके नर्तन करानेके लिए सूत्रधार तथा अपने मामासे अनुगत उस दशमुखने इस पृथ्वीमें कौनसे अपने शत्रु समूहको एक ही साथ यमके दांतोंके बीचमें नहीं झोंक दिया है ? [ ' सूत्रधार तथा मूर्खताके कारण अहंकारियोंके शिक्षक (मन्दशास्यः) उस कंसके मामा, जरासंध (कंसमातुलः)ने इस पृथ्वी झोंक दिया है ।] ॥३८॥

अपनी अथवा शत्रुकी अठारह प्रकृतियोंकी अन्योन्य साधना उत्कृष्ट स्थितिकी उपेक्षा करके यदि किसी प्रकृतिसे प्रेरित होकर राजा शत्रुके प्रति अभियान करता है तो नीति-शास्त्रके आचार्य उसपर ईर्ष्या ही करते हैं ॥३९॥

अतएव बन्धुता अथवा बन्धुओंका संहार नहीं होना चाहिये । वासुदेव लक्ष्मण अथवा कृष्णको लेकर कोटिशिलापर जाते हैं और वहाँसे जिज्ञासा करते हैं । वहाँ श्रुतज्ञानियोंसे जानकर साम अथवा दण्डका प्रयोग करेंगे ॥४०॥

---

१ वसन्ततिलकावृत्तम् । २ वैतालीयं वृत्तम् । ३ शालिनीवृत्तम् ।

मन्त्रस्य कल्पितमिवाजनि मल्लिकाना-
मारावनं जयपरं मुकुलोपहारैः ॥४१॥

इति श्रीद्विसन्धानकवेर्धनञ्जयस्य कृतौ राघवपाण्डवीये महाकाव्ये
मन्त्रनिर्णयकथनो नामैकादश सर्ग. ॥११॥

इतीति–अजनि जातम्, किम्? आराधनम्, कस्य? मन्त्रस्य, केन? गलाङ्गदगलद्गुलिकाच्छलेन गलस्याङ्गदा गलाङ्गदा', गलाङ्गदेभ्यो गलन्त्यश्च ता गुलिकाश्च गलाङ्गदगलद्गुलिकास्तासा छलेन कण्ठ केयूरक्षरन्मौक्तिकव्याजेन, केषाम्? राज्ञा भूपानाम्, कथम्भूताना राज्ञाम्? भरोत्थितानाम्, किं कृत्वा? पूर्वमभिनन्द्य सस्तुत्य, उररीकृत्येत्यर्थ । काम्? वाच वाणीम्, कस्य? अस्य जाम्बवस्य, कथम्? इत्युक्त-प्रकारेण मन्त्रस्याराधनम्, किमिव? कल्पितमिव, कै.? मुकुलोपहारै कलिकोपहारै', कासाम्? मल्लिका-नाम्, कथम्भूतमाराधनम्? जयपर जय पिपर्त्ति पालयतीति जयपरमिति ।

भारतपक्षे–अस्य बलभद्रस्येति[1] ॥४२॥

इति निरवद्यविद्यामण्डनमण्डितपण्डितमण्डलीमण्डितस्य पट्तर्कचक्रवर्तिन श्रीमद्विनय-
चन्द्रपण्डितस्य गुरोरन्तेवासिनो देवनन्दिनाम्न शिष्येण सकलकलोद्भवचारुचातुरी-
चन्द्रिकाचकोरेण नेमिचन्द्रेण विरचिताया पदकौमुदी नाम दधानाया
टीकाया सुग्रीवजाम्बवाञ्जनेय-नारायणपाण्डवादिमन्त्र-
कथनो नामैकादश सर्ग ॥११॥

---

उक्त प्रकारकी इस जामवन्त अथवा बलरामकी सम्मतिको स्वीकार करके झटकेके साथ उठे राजाओंके गलेके भूषण अथवा अंगपरसे गिरते हुए मल्लिकाकी कलियोंकी अञ्जलि-तुल्य मणियोंके व्याजसे मंत्रणाकी पूजाविधि सी हो गयी थी जिसका परिणाम विजय ही था ॥४१॥

इति निर्दोषविद्याभूषणभूषित पण्डितमण्डलीके पूज्य, पट्तर्कचक्रवर्ती, श्रीमान् पण्डित विनयचन्द्र
गुरुके शिष्य, देवनन्दिके शिष्य, सकलकलाकी चातुर्य-चन्द्रिकाके चकोर, नेमिचन्द्र-द्वारा
विरचित कवि धनञ्जयके राघव-पाण्डवीय नामसे ख्यात द्विसन्धान
काव्यकी पदकौमुदी टीकामें 'सुग्रीवजाम्बवाञ्जनेय-
नारायणपाण्डवादिमंत्रकथन नामक
एकादश सर्ग समाप्त ।

---

१. वसन्ततिलकावृत्तम् ।

# द्वादशः सर्गः

**अथ वानराधिपतिभिः प्रवलैः परमः पुमान्बलयुतोऽनुगतः ।**
**श्रुतविक्रमप्रश(मि)भिः प्रययौ विनयैर्विभूतिमिव सिद्धशिलाम् ॥१॥**

अथेति—अथशब्दोऽत्र मन्त्रकथनानन्तर्यार्थो बोद्धव्यो मङ्गलार्थो वा गृह्यते । प्रययौ प्रकर्षेण गतवान्, क ? परम. पुमॉल्लक्ष्मण, काम् ? सिद्धशिला कोटिशिलानामधेया दृषदम्, कथम्भूत सन् ? अनुगत., कै. ? वानराधिपतिभि सुग्रीवप्रभृतिभिर्वानरेन्द्रै, कथम्भूतै ? प्रबलै प्रकृष्टसामर्थ्यवद्भि, पुन. श्रुतविक्रमप्रशमिभि शास्त्रपौरुषोपशमवद्भि. । कथम्भूत परम पुमान् ? बलयुत. रामयुक्त', कामिव ? विभूतिमिव, यथा सम्पद विनयैरनुगत सन् पुमान् प्रयातीति शेष ।

भारतीय—अथवा परम पुमान्नारायण. सिद्धिशिला प्रययौ, कथम्भूत सन् अनुगत, कै. ? नराधिपतिभि समुद्रविजयादिभिर्भूपै, कथम्भूतै ? प्रबलै प्रकृष्टबलसैन्ययुक्तै, पुन कथम्भूतै ? श्रुतविक्रमप्रशमिभि', कथम्भूत. परम' पुमान् ? बलयुत बलभद्रयुत, कामिव ? विभूतिमिव, यथा विनयैरनुगत सन् मानवो विभूतिं प्रयातीति' ॥१॥

**अनुजग्मुरेनमनुकूलतया हरिवंशजाः सुखचरा बहवः ।**
**व्यवसायमायनिचया इव तं किममी न वाततनयप्रमुखाः ॥२॥**

अनुजग्मुरिति—किं नानुजग्मुरपि त्वनुजग्मुरेव, के ? अमी हरिवंशजा सुग्रीवादयो नरेन्द्रा, कम् ? तमेन लक्ष्मणम्, कया ? अनुकूलतया आनुकूल्येनाासततयेत्यर्थ, कथम्भूता हरिवंशजा ? सुखचरा प्रशस्य-विद्याधरा, पुनर्वाततनयप्रमुखा हनुमत्प्रभृतय, कतिसंख्या ? बहव प्रचुरा, क इव क यथा ? इव यथा आयनिचया. द्रव्यप्रवेशद्वाराणि व्यवसायमुद्यममनुगच्छन्तीति ।

भारतीय.—हरिवंशजा यादवान्वयसमुत्पन्ना, भूपाला., त नारायणम्, सुखचराः सुखेन वर्त्तमाना, पुनराततनयप्रमुखा विस्तीर्णनीतिप्रमुखा. । शेष समम् ॥२॥

**रविमण्डलोत्थित इवान्य इव स्वयमन्यजन्म गतवानिव सः ।**
**नरभीमयोजनसुदुःसहया प्रभया परिष्कृततनुः शुशुभे ॥३॥**

रवीति—स लक्ष्मण शुशुभे, कथम्भूत. ? प्रभया परिष्कृततनुरलङ्कृतशरीर, कथम्भूतया ? जनाना सुदु सहयाऽतिशयेन सोढुमशक्यया, कथम्भूत ? नरभीमयो नराणा भयहेतु, क इवोत्प्रेक्षित ? रविमण्डलोत्थित इव सूर्यबिम्बात्समुत्पन्न इव, तथाऽन्य इवोत्प्रेक्षित इव स्वयमात्मनाऽन्यजन्म गतवानिव ।

---

मंत्रणाके बाद, बड़ी सेनाओंके स्वामी, शास्त्र, पराक्रम तथा प्रशमधारी वानरवंशी राजाओंसे अनुगत, बलभद्र (राम)के साथ परम पुरुष लक्ष्मण उसी प्रकार कोटिशिलाको गया था जैसे विनम्रतासे अनुगत विभूति जाती है [समुद्रविजय आदि राजाओंसे अनुयात बलरामके साथ परमपुरुष कृष्ण उसी प्रकार कोटिशिला जाती है] ॥१॥

हरिवंशमें उत्पन्न ये बहुतसे उत्तम विद्याधर (सु खचरा) हनुमान आदि अनुकूल होने के कारण क्या उस लक्ष्मणके पीछे पीछे वैसे ही नहीं गये थे जैसे उद्योगशीलताके साथ सम्पत्तिके आगमन मार्ग चलते हैं [यादववंशमें उत्पन्न बहुतसे सुखसे जीवन विताते तथा विस्तृत नीतिके प्रमुख संचालक अनुकूलताके कारण क्या उस कृष्णके हैं] ॥२॥

अत्यन्त परिष्कृत शरीर होनेके कारण लोगोंके लिए भयकारक वह लक्ष्मण, जन-साधारणके लिए न सहने योग्य अपनी कान्तिके द्वारा ऐसा सुशोभित हुआ था कि वह सूर्य-

---

१, सर्गेऽस्मिन् प्रमिताक्षरावृत्तम् ।

भारतीयः—शुशुभे, कः ? स नारायणः, कथम्भूतया प्रभया ? नरभीमयोजनसुदुःसहया, नरोऽर्जुनः, भीमो वृकोदरः तयोर्योजन योगस्तेन सुदुःसहया । शेष समानम् ॥३॥

**विशदं यशोऽखिलदिशं निखिलां भुवमायतिः स्तुतिकथां महिमा ।**
**समतीयिवत्सममिदं सकलं भुजयोः शिरोऽस्य समतीतवतोः ॥४॥**

विशदमिति–इद सकल कर्म समतीयिवदतिक्रान्तवत् ? किम् ? इद सकल कर्त्तृ, कथम् ? सममेकवेलया, कयोः सतो. ? भुजयोर्बाह्वो', कथम्भूतयोः सतो. ? शिरः समतीतवतोः, मस्तकमतिलङ्घितवतोः, कस्य ? अस्य लक्ष्मणस्य विष्णोश्च । अत्रेद तात्पर्यम्—उन्नतस्कन्धावलोकनाद्यश प्रभृतीना स्पर्द्धा प्रदर्शिता । तद्यथा–समतीयिवत्, किं कर्त्तृ ? यश, काम् ? अखिलदिग ममस्ताशाम्, कथम्भृतम् ? विशदम्, तथा समतीयुषी, का ? आयति प्रसिद्धिः, काम् ? भुवम्, कथम्भूताम् ? निखिलाम्, तथा समतीयिवान्, कोऽसौ ? महिमा माहात्म्यम्, काम् ? स्तुतिकथाम् ॥४॥

**किमु मे भुजेन भुवनस्य भरं वहतः शिला बहिरियं जगतः ।**
**दधतो भुवं किमु नगस्य भरस्तरुरित्ययं स्मयमियाय मुहुः ॥५॥**

किम्विति–किमित्यनेन शब्देनाक्षेपो गम्यते, उ अहो, इय शिला जगतः कि बहिरस्ति, मे मम, कि कुर्वन' ? वहतो धरत., कम् ? भुवनस्य भरम्, केन कृत्वा ? भुजेन बाहुना, किमु भुव दधत. बिभ्रत. नगस्य गिरेः तरुर्भर अपि तु नैव, इत्यय विष्णुः मुहुर्वार वार स्मय गर्वमियाय गतवान् ॥५॥

**विनिपातितं विनिहितं प्रथमं क्वचिदात्मनोद्धृतमदः सुहृदाम् ।**
**अधुनात्मसाहसमसौ सहसा ददृशे व्रजन्निव निरूपयितुम् ॥६॥**

विनिपातितमिति–अधुना साम्प्रतमिति ददृशे दृष्ट., कोऽसौ ? असौ विष्णु', किं कुर्वन् ? व्रजन्, कथम् ? सहसा शीघ्रम्, किं कर्त्तुमिव ? निरूपयितुमिव, किम् ? अद एतदात्मसाहस धैर्यम्, केषाम् ? सुहृदाम्, कथम्भूत सत् ? विनिपातित तथा विनिहित तथोद्धृतम्, केन ? आत्मना, क ? क्वचित् कापीत्यर्थ., कथम् ? प्रथममिति ॥६॥

**सघनागमो निजशुचिः सुरभिर्वनपुष्पगः समहिमोग्रजवः ।**
**सरसां शरच्छविमितः शिशिरो मरुदन्वगात्तमृतुमूर्त्तिरिव ॥७॥**

सघनागम इति–अन्वगादनुगत, कोऽसौ ? मरुद्वात', कम् ? त विष्णुम्, कथम्भूत ? सघनागम. सह घनागमेन वर्त्तमान इति सघनागम मन्दया गत्या वर्त्तमान इत्यर्थ. । पुनर्निजशुचि. निजेनात्मना शुचि निर्मलः रेणूत्करशून्य इत्यर्थ., पुन. सुरभि सुगन्धि., अतएव सुरभिर्यतो वनपुष्पगः कान्तारकुसुममकरन्द-

---

मण्डलमें उत्पन्न, अथवा दूसरेके तुल्य अथवा स्वयमेव दूसरे जन्मको प्राप्तके समान शोभित हो रहा था [ अर्जुन, भीम आदिसे सम्बन्धके कारण अगम्य वह कृष्ण था] ॥३॥

इस लक्ष्मण अथवा कृष्णके शिरके ऊपर उठी भुजाओंने एक साथ ही आगे कहे सब चमत्कारोंका भी अतिक्रमण कर दिया था। निर्मल यशने समस्त दिशाओंको, सौभाग्यकी ख्यातिने पूर्ण विश्वको तथा महिमाने स्तुतिकी चर्चाको लाँघ दिया था ॥४॥

समस्त विश्वके दायित्वको इन भुजाओंसे उठाये हुए मेरे लिए क्या यह शिला जगत् के बाहर है ? पृथ्वीको धारण करनेवाले भूधरके लिए पेड़का भार अलग होता है क्या ? यह सोच कर वह (लक्ष्मण-कृष्ण) आश्चर्यमें पड़ गये थे ॥५॥

कहीं पर छोड़ा गया अथवा रखा गया अपना प्राचीन साहस अब मैंने अपने आप ही सम्हाल लिया है। बन्धु-बान्धवोंको यह प्रत्यय करानेके लिए ही अकस्मात् जाता हुआ सदृश वह लक्ष्मण अथवा कृष्ण देखा गया था ॥६॥

मेघोंकी घटायुक्त, स्वयमेव निर्मल, वनके फूलोंके परागयुक्त होनेसे सुगन्धित, शीतलता (हिम) युक्त, शरत् ऋतुके तालाबों की (अथवा सरस) कान्ति युक्त, शिशिर तथा जोरसे

विन्दूत्करवासनावासिततनुरित्यर्थ.। पुन समहिम' सम हिम यस्य स. सर्वजनतापहारकतया प्रशस्य इत्यर्थ, पुनरग्रजव प्रधानवेग मयूरपिच्छभेदीत्यर्थ । पुनः शरच्छविं वारिरूपतामित. प्राप्त, कथम्भूता शरच्छविम् ? सरघा रसिकाम्। अत्र तात्पर्यं जललवसमालम्बिततयाऽतिसूक्ष्मसूक्ष्मस्वभावताप्रतिपन्नान् पय.कणान् प्रक्षरतीत्यर्थ । अतएव शिशिर शीतल, क इवोत्प्रेक्षितो मरुत् ? ऋतुमूर्त्तिरिव, षण्णा ऋतूना मूर्त्तिरिव तद्यथा शरच्छरत्काल. स लोकप्रसिद्धो घनागम प्रावृट्, तथा शुचि. ग्रीष्म, तथा सुरभिर्वसन्त, तथा सम हिमो हेमन्त, कथम्भूत सन् ? छविं स्वच्छतामित, केषाम् ? सरसा सरोवराणा तथा शिशिर एते षड्तवस्तमनुजग्मुरिवेति ॥७॥

**क्वचनातिपातमटवीमटवी सधुनीं धुनीमभिनिवेशमगात् ।**
**सलतागृहान्वसतिरम्यतया तरसाभिपादमभिपादमगात् ॥८॥**

क्वचनेति-अगात् गतवान्, क ? स विष्णु, कथम् ? तरसा शीघ्रम्, किं कृत्वा ? पूर्वमतिपातमतिक्रम्य, काम् ? अटवीमटवीम्, अरण्यानीमरण्यानीम् पुन' किं कृत्वा ? पूर्वमभिनिवेश प्रविश्य, काम् ? धुनीं धुनीम्, तरङ्गिणीं तरङ्गिणीम्, पुन किं कृत्वा ? पूर्वमभिपादमभिपाद प्रपद्य, कान् ? अगान् पर्वतान् "अगानित्यत्र केचिद्वृक्षानिति व्याख्यानयन्ति"। कथम्भृतान् ? सलतागृहान्, कया ? वसतिरम्यतया मन्दिररमणीयतयेति ॥८॥

**पथि पाण्डुराजकुलवृद्धिमतः किल केशवं मुखरयन्ककुभः ।**
**इति भीमसेन उचितावसरं सरसं जगाद स मरुत्तनयः ॥९॥**

पथीति-किल लोकोक्तौ शास्त्रोक्तौ वा। अतः कारणाजगाद उक्तवान् कोऽसौ ? स मरुत्तनयो हनूमान्, कम् केशव लक्ष्मणम्, क ? पथ्यध्वनि, कथ यथा भवति ? उचितावसर योग्यप्रस्ताव पुन सरस पुन पाण्डुनिर्मल परीक्षाक्षोदक्षममित्यर्थ, कथम् ? इति वक्ष्यमाणप्रकारेण, किं कुर्वन् ? ककुभ आशा मुखरयन् शब्दयन्, कथम्भूत ? भीमसेन भीमा सेना यस्य स, अथवा भीमा चासौ सा च भीमसा तस्या इन. भीमसेन, शत्रूणा प्रध्वसनवशात्परमोत्कर्षं प्राप्ता या लक्ष्मी तस्या प्रभुरित्यर्थ । कथम्भूत केशवम् ? राजकुलवृद्धिं राजकुलस्य नरेन्द्रसमूहस्य वृद्धिर्यस्य स तथोक्तस्तम्, तस्य लक्ष्मणस्यानेकेषा भूमिपालाना मेलापकोऽभूदित्यर्थ । अथवा पाण्डुराजकुलवृद्धिं पाण्डुर निष्पाप तथा विशदम्, अजनामा नृपो दशरथस्याद्यः पुरुष., अजस्य कुलमजकुल पाण्डुरञ्च तदजकुलञ्च पाण्डुराजकुल तस्य वृद्धिर्यस्मात् तम्।

भारतीय'—भीमसेनो वृकोदरः, कथम्भूत ? पाण्डुराजकुलवृद्धिमत पाण्डुराजकुलस्य पाण्डुराजान्वयस्य वृद्धौ मत इष्ट, पुनर्मरुत्तनय मरुत देवा' सन्त्यस्य मरुत्त 'पर्वमरुद्भ्या त', इति सूत्रेण तप्रत्यय., मरुत्तस्येव शक्रस्येव नयो नीतिर्यस्य स तथोक्तः शेष तुल्यम् ॥९॥

**शशिनस्तुलां समुपयाति कुलं भवतो यतेरुपशमश्च विधाम् ।**
**तव पौरुषं स्वसदृशं भुवनं भ्रमदव्यपेक्ष्य भुजयोरजरत् ॥१०॥**

---

बहता फलत. मूर्तिमान छहों ऋतुयुक्त पवन उसके पीछे पीछे बह रहा था [घनागमसे वर्षा, सरस छवि शरद, शीतलतासे शिशिर, सम-हिमसे हेमन्त, सुरभि वन पुष्प युक्त वसन्त तथा निजशुचि ग्रीष्म] ॥७॥

कहीं पर जंगलके बाद जंगलोंको पार करता, नदियोंसे समन्वित नदियोंको, घुसकर लाँघता, और लताकुञ्जोंसे व्याप्त एवं सब तरफसे वृक्षों द्वारा आच्छादित पर्वतोंको पैदल ही पैदल, भवनकी रमणीयताके साथ चढ़ता-उतरता वह वेगसे चला जा रहा था ॥८॥

भीषण सेनाके स्वामी उस पवनञ्जयके पुत्र हनुमानने धवल कीर्तिधारी राजा अजके कुल (रघुवंश)की वृद्धिकी दृष्टिसे उचित अवसर देखकर दिशाओंको गुँजाते हुए निम्न सरस वचन लक्ष्मणजीको कहे थे [राजा पाण्डुके वंशकी प्रतिष्ठाभूत इन्द्रके समान नीतिज्ञ (मरुत्तनय) भीमने श्री कृष्णसे वचन कहे थे] ॥९॥

**एवं नानाक्षत्रियवर्गैः पृतनाग्रे सालङ्कान्तं रौप्यमिवैतैः सह सालम् ।**
**वेलापातश्वेततरङ्गं जलराशिं तं सारम्भोगाङ्गमवापन्नृपतिश्च ॥२६॥**

एवमिति–सा पृतना सेना लङ्कान्त लङ्कासमीपवर्तिन साल प्राकारम् अवापत् प्राप्तवती, कमिव ? रौप्य रजतनिर्माणमिव, कथम् ? अग्रे प्रथम कथम् ? एतैः नाना क्षत्रियवर्गै. सह, कथम् ? एवमुक्तप्रकारेण, तथा अवापत् प्राप्तवान्, क. ? नृपतिश्च राम , कम् ? त जलराशिं समुद्रम्, कथम्भूतम् ? वेलापातश्वेततरङ्गम्, सुगममेतत्, तथावापत्, कः ? नृपति , किम् ? भोगाङ्ग भोग सक्रृद्भुज्यते इति भोग. भोगस्याङ्गमिति भोगाङ्ग ताम्बूलकुसुमचन्दनादि, कथम्भूतम् ? सार प्रधानमिति ।

भारतीय पक्षः–अवापत्, का ? पृतना सेना, कम् ? जलराशिम्, कथम् ? अग्रे प्रथमम्, अग्रे इति विभक्तिप्रतिरूपकमव्ययपदम्, कै सह ? एतै नानाक्षत्रियवर्गैः, कथम् ? अलमत्यर्थम्, कथम्भूत जलराशिम् ? गाङ्ग गङ्गाया अय गाङ्गस्तम्, पुन कथम्भूतम् ? वेलापातश्वेततरङ्गम्, कमिव ? रौप्य रजतमय सालमिव पुन' कान्त मनोहर तथा चावापत् नृपतिर्जनार्दन., कम् ? जलराशिम्, कथम् ? अलमत्यर्थम्, कथम्भूतः जनार्दन ? सारम्भः साटोप.[1] ॥२६॥

**चिरानवस्थाननियोगखिन्नमेकस्थमत्यायतमापगौघम् ।**
**यथाम्बुराशिं ध्वजिनीरजोभिः श्यामायमानं ददृशुर्बलानि ॥२७॥**

चिरेति–बलानि सैन्यानि अम्बुराशिं समुद्र ददृशुः निरीक्षाञ्चक्रिरे, कथम्भूतम् ? ध्वजिनीरजोभि. सेनारेणूत्करै. श्यामायमानम्, कमिवोत्प्रेक्षितम् ? यथापगौघ सरित्समूहमिव, कथम्भूतम् ? एकस्थमेकत्रविश्रान्तम्, पुन चिरानवस्थाननियोगखिन्न बहुतरकालपर्यटनव्यापारेण श्रान्त पुन. अत्यायत दीर्घतरम् ।

भारतीये–ददृशु , कानि ? बलानि, कम् ? अम्बुराशिं जलसमूहम्, कथम्भूतम् ? आपगौघम् आपगानामोघ आपगौघ. आपगौघस्यायमापगौघस्तम्, कथम्भूत ददृशु. ? ध्वजिनीरजोभि. श्यामायमान पुन. अत्यायतम्, कमिवोत्प्रेक्षितम् ? एकस्थ यथा एकत्र विश्रान्तमिव । शेष सुगमम्[2] ॥२७॥

**दिदृक्षुराद्यन्तमिव प्रमाणं पूर्वापरं वा प्रथमाभिषङ्गात् ।**
**समुद्रतीरञ्जितसर्वलोका सेनापगां व्याप्तवती बलेन ॥२८॥**

द्वि । दिदृक्षुरिति–आप प्राप्तवती, का ? सेना, किम् ? समुद्रतीर जलधितटम्, कथम्भूता ? व्याप्तवती, काम् ? गा पृथिवीम्, केन कृत्वा ? बलेन रामचन्द्रेण, कथम्भूता सती ? जितसर्वलोका, सुगममेतत्, केवो-

---

विविध वंशोंके क्षत्रिय राजाओंसे परिपूर्ण यह रामकी सेना उक्त प्रकारसे, किनारेपर अपनी श्वेत तरगोंको फेंकते हुए लंकाके पासके अतएव चाँदीके परकोटाके समान समुद्रके पास पहिले पहुँच गयी थी तथा राजा भी भोगके प्रधान साधनको प्राप्त हुआ था [ · यह पाण्डव सेना अत्यन्त सुन्दर, किनारे पर धवल लहराते अतएव चाँदीके परकोटाके सदृश गंगाकी जलराशिके पास सबसे पहिले पहुँची थी । और इसके बाद सजधजके साथ राजा जनार्दन भी पहुँचे थे ] ॥२६॥

राघव-सेनाने अत्यन्त विस्तृत तथा सेनाके चलनेसे उड़ी धूलके कारण काले-काले समुद्रको देखा था । मानो चिरकालतक घूमते रहनेके कारण थकी नदियोंकी विपुल जलराशि ही एक स्थानपर रुक गयी थी [ पाण्डव सेनाने काले मगधकी नदियोंके समूहको देखा था जो चिरकालतक भटकते रहनेके कारण खिन्न, अतएव एक जगहपर थमी जलराशिके तुल्य लगता था ] ॥२७॥

पहिले-पहिले पहुँचनेके कारण आदि और अन्त अथवा आगा और पीछा देखनेकी

---

१. मत्तमयूरवृत्तम् । २. उपजातिवृत्तम् ।

क्षेक्षिता ? दिदृक्षुर्द्रष्टुमिच्छुरिव, किम् ? प्रमाण प्रकृष्ट मान प्रमाणम्, कथम्भूतम् ? आद्यन्तम् आदिश्च अन्तश्च आद्यन्तौ आद्यन्तौ यस्य तदाद्यन्त वाथवा पूर्वापर पारम्पर्यतया प्रसिद्ध प्रमाण दिदृक्षुरिव, कस्मात् ? प्रथमाभिषङ्गात् प्रथमसम्बन्धात् ।

भारतीयः—व्याप्तवती, का ? सेना, काम् ? आपगा नदीं गङ्गाम्, कथम्भूता समुद्रती ? रक्षित-सर्वलोका आनन्दिताखिलविश्वा, केन कृत्वा ? बलेन सामर्थ्येन बलभद्रेण वा पुनः समुद्रति मुदि रति. मुद्रतिः सह मुद्रत्या वर्त्तते इति समुद्रतिः हर्षरत्या सह वर्तमाना पूर्वार्द्ध पूर्वोक्तव्याख्यानविषय बोधव्यम् ॥२८॥

**समुद्रं हा न्यायं विदधदहितस्यापिहितधीः**
**स नीलाभोगङ्गां व्युदतरदवन्विष्णुरखिलम् ।**
**गतं खेलं कुर्वद्बलमपि तथा वानरमयं**
**रजस्त्वेकं चम्वाः सलिलधिनिपिद्धं निववृते ॥२९॥**

द्विः । समुद्रमिति–हा कष्ट व्युदतरत् व्युत्तीर्णवान्, स विष्णुर्लक्ष्मणः, कम् ? समुद्रम्, कथम्भूतम् ? नीलाभोग नील आभोगो यस्य तम्, कि कुर्वन् ? विदधत् कुर्वन्, किम् ? न्याय नीतिम्, कथम्भूतो विष्णुः ? हितधीः हित सुख तत्कारण च, हिते धीर्यस्य स हितधी', कस्यापि ? अहितस्यापि शत्रोरपि अथवा विदधत् कुर्वन्, किम् ? हान्याय हाने' आय प्रध्वसस्य प्राप्तिम् । अहितस्य रिपोः, कथम्भूतोऽपि ? हितधीरपि उपकार-निष्ठबुद्धिरपीत्यर्थ', किं कुर्वन् ? अवन् रक्षन्, काम् ? गा मेदिनीम् तथागत, किमपि ? बलमपि, कुर्वत्, किम् कुर्वत् ? अल विभूषाम्, क ? खे गगने, कथम्भूत बलम् ? वानरमय वानरा हेतुर्यस्य तद्वानरमय पुन. अखिल तु पुनः निववृते निवृत्तम्, किम् ? एक रज. कस्या ? चम्वा ' सेनाया., कथम्भूत सन्निवृत्तम् ? सलिलधिनिपिद्धमिति ।

भारतीय'–व्युदतरत्, क ? स विष्णुर्नारायणः, काम् ? गङ्गा सुरसरितम्, किं कुर्वन् ? विदधत्, कम् ? न्याय नीतिम्, कस्य ? अहितस्य शत्रोः, कि कुर्वन्नपि ? अवन्नपि, कम् ? न्याय नीतिम्, क ? आत्मनीतिसयोज्यम्, कथम्भूतो विष्णुः ? नीलाभः श्यामलकायकान्ति' पुन' हितधीः हितेष्वव्यभिचारिपु धीर्यस्य स हितधी., पुन' कथम्भूत' ? समुद्रहाः, मुत् हर्ष' रहो वेग. मुदो रह' मुद्रह. सह मुद्रहसा वर्त्तते इति समुद्रहा', अथवा व्युदतरत् गङ्गा स विष्णु. कि कुर्वन् ? विदधत् कुर्वन्, किम् ? आय सयोगम्, कया सह ? हान्या विनाशेन, कस्य ? अहितस्य विपक्षस्य, कि कुर्वन् ? अवन् रक्षन्, कम् ? समुद्रम्, र ध्वनिः, सह मुदा वर्त्तते इति समुत् समुच्चासौ रश्च समुद्रः त समुद्र सानन्दरवमित्यर्थ', क ? आत्मनीत्याध्याहार्यम्, कथम्भूत' सन् ? अपिहितधीः अनावृतमति ज्ञानावरणीयकर्मसयोगवियोगात् सकलशास्त्रप्रवीणबुद्धिरित्यर्थ. तथा गतम्, किम् बलमपि कथम्भूतम् ? नरमयम्, वा इवार्थे, तेनोपमार्थो लभ्यते, कि कुर्वदिव गतम् ? कुर्वदिव,

---

इच्छासे ही, अपने सामर्थ्यके द्वारा समस्त पृथ्वीको आक्रान्त करती, विश्व विजयिनी वह सेना समुद्र-तटपर पहुँच गयी थी [ ' इच्छासे ही, नारायणकी उपस्थितिके कारण सानन्द और अनुरक्त, तथा समस्त लोकको प्रसन्न करती उस सेनाने गंगा नदीको व्याप्त कर लिया था ] ॥२८॥

शत्रुके भी कल्याण करनेका इच्छुक, न्यायका कर्ता तथा पृथ्वीकी रक्षामें तत्पर लक्ष्मण नीली नीली शोभामय समग्र सागरको पार कर गये थे। और वानरोंकी सेना भी आकाशमें (रखे) पूर्ण रूपसे चलती हुई पार हो गयी थी। समुद्रके जलसे शान्त अतएव रोकी गयी सेनाकी धूल ही केवल लंका जाते जाते लौट आयी थी [शत्रुके लिए विनाशक संयोग (हान्याय) का कर्त्ता, समस्त आनन्दमय प्रसंगोंका रक्षक, बुद्धिमत्ताके लिए ख्यात (अपिहितधी.) तथा नील कान्तिके धारक उस विष्णुने गंगाको पार कर लिया था। और

कम् ? खेल क्रीडाम् , कथम्भूत बलम् ? अखिल समस्त तु पुनः निववृते, किम् ? एक रजः, कस्याः ? चम्वा., कथ सत् ? सलिलविनिषिद्धमिति¹ ॥ २९ ॥

तद्वानेयद्विपमदमरुद्भ्रान्तचित्तं कथञ्चिद्
भूतावेशाद्भ्रमदिव शिरो धुन्वदाधोरणानाम् ।
तीरोपान्तप्रहितनयनं हास्तिकं वारि तीर्णं
गन्तुं सेतुः कृत इव घटाबद्धमक्षौहिणीनाम् ॥३०॥

तदिति–तीर्णम् , किम् ? हास्तिक हस्तिसमूह., किं तीर्णम् ? वारि जलम् , कथम्भूत सन् ? घटाबद्धम् , क इवोत्प्रेक्षितम् ? सेतुरिव, कथम्भूतः ? विहित , किं कर्त्तुम् ? गन्तुम् , कासाम् ? अक्षौहिणीना सेनानाम् , कथम्भूत हास्तिकम् ? तीरोपान्तप्रहितनयन तटसमीपप्रेरितलोचनम् , किं कुर्वत् ? धुन्वत् कम्पयत् , किम् ? शिरो मस्तकम् , केषाम् ? आधोरणाना हस्तिपकानाम् , किं कुर्वत् ? भ्रमत् , कस्मादिव ? भूतावेशादिव ग्रहावेशादिव, कथम्भूतावेशोऽजनिष्ट ? कथञ्चित् केनचित्प्रकारेण, पुन कथम्भूतम् ? तद्वानेयद्विपमदमरुद्भ्रान्तचित्त वने भवा वानेया. वानेयाश्च ते द्विपाश्च वानेयद्विपा तस्य समुद्रस्य वानेयद्विपास्तेषा मदमरुता भ्रान्त चित्त यस्य तत्तथोक्त समुद्रवनभवेभमदामोदवायुसमोहितचेत इत्यर्थ² ॥ ३० ॥

बाजी वायुमयं जवं जवमयं चित्तं स चेतोमयं
देहं बिभ्रदिवाखिलोऽपि चटुलोऽप्यारोढुरेवाशये ।
काये चैक्यमुपेयिवानिव वशादर्णः समुत्तीर्णवान्
दम्यं नाम विवर्तते दमयितुः शीलेन कालान्तरे ॥३१॥

वाजीति–समुत्तीर्णवान् , क ? स वाजी अश्व , अत्र जात्यपेक्षयैकवचनम् , किम् ? अर्णो जलम् , कस्मात् ? वशात् , कस्यैव ? आरोढुरेव अश्ववारस्यैव, कथम्भूत ? अखिलोऽपि पुन: चटुलोऽपि चञ्चलोऽपि, क इवोत्प्रेक्षित ? ऐक्यम् अभेदम् उपेयिवानिव प्राप्तवानिव, क ? आशये हृदये काये शरीरे च, कस्यैव ? आरोढुरेव, कि कुर्वन्निव ? वायुमयम् अनिलनिर्माण जव वेग बिभ्रदिव धरन्निव तथा चित्त मन. जवमय वेगनिर्माण बिभ्रदिव तथा बिभ्रदिव, कम् ? देहम् , कथम्भूतम् ? चेतोमय मनोनिर्माणम् , युक्तमेतत् , नाम अहो विवर्त्तते परिणमति, किम् ? दम्य वस्तु, दमयितुः शिक्षासमर्थस्याचार्यस्य शीलेन कौशल्यगुणेन, क ? कालान्तरे³ समयान्तरे ॥ ३१ ॥

प्राप्तव्योमासङ्गमोघं रथानां सव्येष्टास्तेऽनादिचक्रभ्रमेण ।
मुक्ताशं संसारपारं सुखं तं भव्यं सन्मार्गा इव स्मानयन्ति ॥३२॥

---

प्रयाणको खेल समझती वह पुरुष सेना भी पार हो गयी थी केवल· गगाके द्वारा रोका धूलिपुञ्ज ही इस पार रह गया था] ॥२९॥

जगली हाथियोंके मदजलसे वासित गधके कारण कुछ कुछ मत्त अतएव भूतावेशके प्रभावके समान महावतोंके शिरोंको हिलाते हुए, उस किनारेकी भूमिपर दृष्टि गड़ाये और पानीको पार करके व्यूह-रचनासे चलते हाथियोंका समूह ऐसा लगता था, मानो सेनाके जानेके लिए पुल ही बना दिया हो ॥३०॥

पूरीकी पूरी चचल अश्वसेनाका वेग वायुके समान था, चित्त वेगमय था, शरीर चित्तमय था तथा चित्त और शरीर एक-मेक हो जानेके कारण वह अश्वारोहियोंकी प्रेरणासे जलराशिको पार कर गयी थी। उचित ही है शिक्षार्थी या विनेय समय बीतनेपर शिक्षक या आचार्यके शीलसे प्रभावित होता है ॥३१॥

---

१. शिखरिणीवृत्तम् । २. मन्दाक्रान्तावृत्तम् । ३ शार्दूलविक्रीडितम् वृत्तम् ।

प्रातेति–आनयन्ति स्मानीतवन्तः, के ? ते सव्येष्ठाः सारथयः, कम् ? तमोघ समूहम्, केषाम् ? रथानाम्। केन कृत्वा ? अनादिचक्रभ्रमेण नास्त्यादिर्यस्य स अनादिः आदेरपेक्षायाम् अन्तस्यापि ग्रहण निरपेक्षाभावविषयत्वात् सापेक्षत्वाच्च सर्वपदार्थसार्थानाम् इति, चक्राणा भ्रम· चक्रभ्रम· अनादिश्चासौ चक्रभ्रमश्च अनादिचक्रभ्रम· तेन कथ यथा भवति ? मुक्ताशस मुक्तप्रशसम्, कथ यथा भवतीत्यानीतवन्तः ? सुख यथा कथम्भूत मोघम् ? प्राप्तव्योमासङ्ग प्राप्तो व्योम्नः आकाशस्य आसङ्ग· सम्बन्धो येन सः तु पुनः सारपार सारो रेणूत्करः लोह वासार· पारः पर्यन्ते यस्य स सारपारः त सारपार पुनः भव्य रम्यम्, क इवानयन्ति स्म ? सन्मार्गा इव यथा सन्मार्गाः सम्यग्दर्शनज्ञानचारित्रलक्षणाः आनयन्ति, कम् ? भव्य धर्मनिष्ठ जनम्, कमानयन्ति ? ससारपार भवतटम्, कथ यथा भवति ? सुखम्, केन कृत्वा ? अनादिचक्रभ्रमेणेपार्जिततीव्रकर्मोपशमवशात् द्रव्यक्षेत्रकालभावचतुष्टयस्य लब्ध्या इत्यर्थः, कथम्भूत भव्यम् ? प्राप्तव्योमासङ्गम् उमया सङ्गः कीर्तिसयोगः प्राप्तव्य उमासङ्गो यस्य त पुनः मुक्ताश मुक्ता आशा येन त परित्यक्तबाह्यव्यापारम्[1] ॥ ३२ ॥

**कर्णश्रुतिं गच्छति तूर्यनादे ध्वजेषु दृष्टिं पुरतः स्पृशत्सु ।**
**मोहं गतानीव चिरं विजज्ञुः कथंचिदात्मावसथं बलानि ॥३३॥**

कर्णेति–विजज्ञु जानन्ति स्म, कानि ? बलानि, कम् ? आत्मावसथ स्वकीया वसतिम्, कथम् ? कथञ्चित् महता कष्टेन, कथम् ? चिर बहुतरकालेन, कथम्भूतानीवोत्प्रेक्षितानि बलानि ? मोह गतानीव, क सति ? तूर्यनादे कर्णश्रुतिं कर्णरन्ध्रमार्ग गच्छति सति, केषु सत्सु ? ध्वजेषु आलम्बेषु[2] पुरतोऽग्रतः दृष्टिं स्पृशत्सु[3] ॥३३॥

**तदेव गाम्भीर्यमदः प्रमाणमगाधता सैव तदायतिश्च ।**
**चमूरशेषा विततानुकूलं सा नद्यधीनप्रतिमेव रेजे ॥३४॥**

तदेव इति–द्वि· । तदेव गाम्भीर्यमस्ति तथा अद एतत् एव प्रमाणमस्ति, तथा सैवागाधताऽस्ति, तथा तदायतिश्च तद्दैर्घ्यं चास्तीति कृत्वा रेजे भाति स्म, का ? सा चमूः सेना, कथम्भूता सती ? वितता प्रसृता, कथम् ? अनुकूल प्रतितटम्, पुनः कथम्भूता ? अशेषा समस्ता, केव रेजे चमूः ? नद्यधीनप्रतिमेव नदीनामधीनः नद्यधीन नद्यधीनस्य प्रतिमा नद्यधीनप्रतिमा समुद्रमूर्त्तिरिवेत्यर्थः ।

भारतीय–नद्यधीनप्रतिमेव नद्या अधीना नद्यधीना नद्यधीना चासौ प्रतिमा च नद्यधीनप्रतिमा सेव गङ्गायत्तमूर्त्तिरिवेत्यर्थ· । शेष सुगमम् ॥ ३४ ॥

**विचित्ररत्नप्रतिभाविशालं राजालयं राजकमभ्युपेत्य ।**
**रामाननालोकगतादराक्षं पार्थक्षतं रोद्धुमनोऽवतस्थे ॥३५॥**

---

सतत प्रचलित चक्रोंकी गतिके द्वारा विस्तृत आकाशमें व्याप्त धूलि पुंजके बाहर ले जाकर प्रशंसनीय ढंगसे सारथि लोग रथोंकी पंक्ति सुखसे ठीक रास्तेपर वैसे ही बढ़ाये लिये जा रहे थे जैसे कल्याणकारी तथा स्पृहणीय रत्नत्रय रूपी मोक्षमार्ग, लोकमें साध्यभूत लक्ष्मीके मोहके कारण निष्फल-अनादि कालसे चले आये संसार-समुद्रके उस पार; आशा-पाशसे रहित भव्य जीवको भेज देता है ॥३२॥

वाद्योंके आरावसे कानोंके छेद भर जाने से तथा आगेसे आँखोंपर ध्वजाओंके पड़ जानेके कारण सेनाकी टुकड़ियां मूर्च्छाको प्राप्तके न बहुत देरसे अपने-अपने निवासको पहिचान सकी थीं [मूर्च्छित व्यक्ति भी कानोंपर वाद्य बजानेसे तथा आँखोंमें शीतल पदार्थादि लगानेपर बड़ी कठिनाईसे आत्मचैतन्यको प्राप्त होता है] ॥३३॥

वह परिपूर्ण और किनारे, किनारे दूरतक फैली राघव अथवा पाण्डव सेना समुद्र अथवा गंगा नदीकी मूर्तिके समान सुशोभित हो रही थी क्योंकि इसकी गहरायी, (शक्तिकी सीमा) विस्तृत संख्या, अथाहपना (गुप्तता) तथा विस्तार समुद्र या गंगाके तुल्य ही थे ॥३४॥

---

१ शालिनीवृत्तम् । २. अलम्बेषु–प०, द० । ३. उपजातिवृत्तम् ।

विचित्रेति–अवतस्थे स्थितवत्, किम्? राजक राजसमूहः, कि कृत्वा? पूर्वमभ्युपेत्य सामस्त्येन प्राप्य, कम्? राजालय राजमन्दिरम्, कथम्भूतम्? विचित्ररत्नप्रतिभाविशाल विचित्ररत्नाना प्रतिभा दीप्तिम् अवतीति विचित्ररत्नप्रतिभावी स चासौ शालो यस्य तम्, कथम्भूत राजकमवतस्थे? रोद्धुमन रोद्धु मनो यस्य तद्रोद्धुमन नियमयितु चेतः, किम्? पार्थक्षत पृथुरेव पार्थम्, पृथौ भव वा 'तत्र भवः' [जै० सू० ३।३।२८] इत्यण् भीमात्रेदिखवशसयस्य[1] लोप' (भवमात्रे टिखवशादवयवस्य लोपः) पार्थ च तत्क्षत च पार्थक्षत दीर्घतरमार्गोत्पन्नायासवशात्तीव्रतर खेदमित्यर्थ.? पुनरपि कथम्भूत राजकम्? रामाननालोकगताद्-रामस्य यत् आनन मुख तस्य य आलोक अवलोकन तत्र गतः प्राप्तः आदरो ययोस्ते अक्षिणी यस्य तत्तथोक्त दाशरथिमुखावलोकनप्रवृत्तादरलोचनमित्यर्थ।

भारतीये–विचित्ररत्नप्रतिभाविशाल विचित्ररत्नै' प्रतिभाविन्य' शाला यस्य तम्, कथम्भूत राजकमवतस्थे? पार्थक्षत पार्थाना क्षत पाण्डवक्षत रोद्धुमनः पुन. रामाननालोकगतादराक्ष रमणीयरमणीमुख-निरीक्षणे सादरेक्षणम्। योजना सर्वा प्राग्वत्॥ ३५॥

**पथः श्रमं नेतुमपेतभारैर्विगाह्य हस्तेन विमुक्तमम्भः।**
**विशीर्यमाणं प्रति सूर्यमुद्यन्मुक्ताफलाकारमियाय नागैः ॥३६॥**

पथ इति–अम्भो जल मुक्ताफलाकारम् इयाय जगाम, कि कुर्वत्? प्रतिसूर्य सूर्य प्रति उद्यत् ऊर्ध्व गच्छत्, पुन कथम्भूतम्? विशीर्यमाण शतशः स्फुटत्, पुन. कथम्भूतम्? नागैर्हस्तिभि हस्तेन शुण्डया विमुक्त समुत्सृष्टम्, किं कृत्वा? पूर्व विगाह्य आलोड्य, किं कर्त्तुम्? नेतुम् अपाकर्त्तुम्, कम्? श्रमम्, कस्य? पथो मार्गस्येत्यध्याहार्यम्, कथ नागै? अपेतभारै. उत्तारितभारै.॥ ३६॥

**पादघातविहितं चिरमागस्तद्भुवं क्षमयितुं प्रणमय्य।**
**स्वं शिरोऽधिपदमश्वसमूहश्चाटुकार इव निर्लुठति स्म ॥३७॥**

पादेति–अश्वसमूहः निर्लुठति स्म निर्लुलोठ, क इव? चाटुकार इव प्रतिछन्दानुवर्त्तीव, किं कृत्वा? पूर्व प्रणमय्य नमयित्वा, किम्? शिरो मस्तकम्? कथम्भूतम्? स्वमात्मीयम्, कथम् अधिपद पदयोरुपरि, किं कर्त्तुम्? भुव पृथिवीं तत् आग. क्षमयितुम्, तत् किमाग. यत् चिर पादघातविहित चरणहनन-कृतम्॥ ३७॥

**तीरद्रुमेषु करिणः पटमण्डपेषु वाहाः सुधाभवनभित्तिषु राजलोकाः।**
**आवासमादिपत, दम्पतयो गुहासु सर्वत्र पुण्यसहिताः सुखमावसन्ति ॥३८॥**

---

विचित्र रत्नोंकी कान्तिसे दैदीप्यमान परकोटासे घिरे राजभवनके समीप पहुँचकर लम्बा मार्ग चलनेके कारण थके (पार्थक्षत) तथापि रामके मुखको देखनेसे उत्साहित राजा घेरा डालनेकी इच्छासे स्थिर हो गये थे [विविध प्रकारके मणियोंकी कान्तिसे जगमगाते मगधराजके प्रासादके निकट पहुँचते ही रमणीके मुख देखनेके लिए उत्सुक तथा अर्जुनसे संचालित राजाओंने घेरा डालनेकी दृष्टिसे व्यूह रचना की थी]॥३५॥

भारको उतारकर (कार्यसे मुक्त) मार्गकी थकानको दूर करनेके लिए समुद्र (गंगाकी धार) में उतरे हाथियों (नागवंशी सैनिकों)की सूड़ों अथवा हाथोंसे सूर्यकी ओर फेंका (सूर्यके प्रति अर्घ रूपसे दत्त) बूँद बूँद करके फैला जल उछलते हुए मोतियोंकी अंजलीके समान लगता था॥३६॥

टापोंकी मार (पादाघात) द्वारा चिरकालसे संचित अपने पापको क्षमा करानेके लिए ही पहिले अपने शिरको पैरोंमें झुका कर चाटुकारके समान बादमें घोड़े भूमिपर लोटने लगे थे (चाटुकार भी पहिले की गयी पैरोंकी मारके अपराधको क्षमा करानेके लिए पैरोंमें मस्तक झुका देता है और बादमें घोड़ेकी तरह पैरोंमें लोट जाता है॥३७॥

[1] भवमात्रे टिखश्च। अग्रूपस्य लोप। द०।

तीरेति–करिणो गजाः तीरद्रुमेषु आवास स्थिति आदिपत गृहीतवन्त', वाहा अश्वा पटमण्डपेषु आवासम् आदिपत । राजलोकाः सुधाभवनभित्तिषु शुभ्रगृहप्रधानेपु आवासम् आदिपत ।

भारतपक्षे–सुधाभवनभित्तिषु, सुधावत् आभा यासा ताः सुधाभाः ताश्च ता वनभित्तयश्च तासु अमृतशीतलास्वित्यर्थ तथा दम्पतयः स्त्रीपुरुषद्वन्द्वानि गुहासु कन्दरासु आवासम् आदिपत । युक्तोऽयमर्थ. । पुण्यसहिता. दैवाधिका. पुरुषाः सर्वत्र सर्वस्मिन् स्थाने सुख यथा भवति तथा आवसन्ति तिष्ठन्ति[१] ॥ ३८ ॥

**गाङ्गाहिताः प्रतिजवैर्जलपातशीताः कच्छान्तरेषु मरुतः कृतपुष्पवासाः ।**
**वार्धा वलाध्वपरिखेदममुं विनिन्युः संबन्धनं जयति निश्रमदायि विश्वम् ॥ ३९ ॥**

इति श्रीधनञ्जयकविविरचिते राघवपाण्डवीयापर नाम्नि द्विसन्धान-
महाकाव्ये प्रयाणनिरूपणो नाम चतुर्दश सर्ग ॥

गाङ्गेति–मरुतो वाता. अमुम् इम बलाध्वपरिखेद सैन्याना मार्गश्रम विनिन्यु अपाकृतवन्त., कथम्भूता मरुतः ? वार्द्धाः वार्द्धौ भवा वार्द्धा' वार्द्धेरागता[२] वा वार्द्धाः समुद्रोद्भवा सामुद्रा वा, पुनः कथम्भूताः ? कृतपुष्पवासा विहितकुसुमामोदा., केषु ? कच्छान्तरेषु पुन जलपातशीता नीरपूरशीतल., पुन कथम्भूता ? प्रतिजवै. प्रतिवेगै गा भुव गाहिता व्याप्तवन्त., युक्तमेतत्, जयति सर्वोत्कर्षेण वर्तते, किम् ? सम्बन्धन सम्बन्ध', कथम्भूतम् ? विश्व समस्त पुन. विश्रमदायि ।

भारतीय –कथम्भूताः मरुत. ? गाङ्गाः गङ्गाया भवा गङ्गाया इमे वा पुन' हिता. सुखकारिण' पुन' वार्द्धा. वा. दधति वार्द्धा वारिधारिण इत्यर्थः । शेष सुगमम् ॥ ३९ ॥

इति निरवद्यविद्यामण्डनमण्डितपण्डितमण्डलीमण्डितस्य पट्तर्कचक्रवर्तिन श्रीमद्विनय-
चन्द्रपण्डितस्य गुरोरन्तेवासिनो देवनन्दिनाम्न शिष्येण सकलकलोद्भवचारचातुरीचन्द्रिका-
चकोरेण नेमिचन्द्रेण विरचितायां द्विसन्धानकवेर्धनञ्जयस्य राघवपाण्डवीया-
परनाम्न काव्यस्य पदकौमुदीनामदधानाया टीकाया प्रयाणनिरूपणो
नाम चतुर्दश सर्ग ॥१४॥

---

हस्तिसेना तटवर्ती वृक्षोंके नीचे रुकी थी । अश्व सेना कपड़ेके मण्डपोंमें बँधी थी और राजा लोग सुधाकी कान्तियुक्त (सुधाभ) वन-पंक्तिके पीछे ठहरे थे तथा दम्पत्ति गुफाओंमें चले गये थे । उचित ही है पुण्यात्मा लोग सर्वत्र सुखके साथ रहते हैं ॥३८॥

पानीके ऊपर उड़नेसे शीतल, कछारमें फूले पुष्पोंकी सुगन्ध युक्त समुद्रकी हवाएँ (पानीको धारण किये) पृथ्वीपर आती हुई [गंगासे उठी (गाग) तथा सुखद (हिता) हवाके झोंके] रास्ता चलनेसे उत्पन्न सेनाकी थकानको दूर कर रही थीं । विश्राम अथवा शान्तिका दाता सम्बन्ध संसारमे सबसे बढ़कर है ॥३९॥

इति निर्दोषविद्याभूषणभूषितपण्डितमण्डलीके पूज्य, पट्तर्कचक्रवर्ती श्रीमान् पण्डित विनयचन्द्र
गुरुके शिष्य, देवनन्दिके शिष्य, सकलकलाकी चातुर्य-चन्द्रिकाके चकोर, नेमिचन्द्र-द्वारा
विरचित कवि धनञ्जयके राघव पाण्डवीय नामसे ख्यात द्विसन्धान
काव्यकी पदकौमुदी टीकामें प्रयाणनिरूपण नामका
चतुर्दश सर्ग समाप्त ।

---

१. वसन्ततिलका वृत्तम् । २. वार्द्धेरिमे वा–प०, द० ।

# पञ्चदशः सर्गः

अथ वनमनुकूलमङ्गनाभिः समलयजाङ्कपयोधरोचिताभिः ।
सह गतिमृजुमन्थरां गताभिः सरति यदूर्जितनायका विजह्रुः ॥ १ ॥

अथेति—अथ शब्द आनन्तर्ये वर्त्तते, विजह्रुः विहृतवन्त, के ? कपयो वानरा. सुग्रीवादय', किम् ? तद्वनम्, कथम् ? अनुकूल तट तट प्रति, कथम् ? सह, काभि. ? अङ्गनाभि कामिनीभि., कथम्भूताभि. ? अधरोचिताभि. अधरौ ओष्ठौ उचितौ सामुद्रिकलक्षणसम्पन्नौ सुपक्वबिम्बसदृशौ स्थूलोन्नतदूषणोज्झिताविति भाव, अधरावुचितौ यासा ताभि, पुन कथम्भूताभि ? ऋजुमन्थराम् अवक्रा मन्दा च गति गताभि' प्राप्ताभि', कथम्भूता गतिम् ? समलयजा समश्वासौ लय समलयस्तस्माजाता 'लय. साम्यमुदाहृतमिति वचनात्, कथम्भूता. कपय ? ऊर्जिताना प्रौढिमत्प्रतापवता नायका स्वामिन, यत् अस्ति वनम्, कथम्भूतम् ? सरति सक्रीड-मिति ।

भारतीय—यदूर्जितनायका यदवश्च ते ऊर्जितनायकाश्च यादवा. प्रतापिनो नरेन्द्राश्च विजह्रु । किम् ? वनम्, कथम् ? अनुकूल पुन सरति सक्रीडम्, कथम् ? अङ्गनाभि सह, कथम्भूताभि ? समलयजाङ्कपयोधरो-चिताभि मलयजाङ्केन चन्दनस्थासकेन सह वर्त्तते इति समलयजाङ्कौ एवभूतौ पयोधरौ उचितौ सामुद्रिक-लक्षणविषयौ घनपीनोन्नतौ नातिस्थूलौ नातिह्रस्वौ नातिदीर्घौ यासा ताभि[1] ॥१॥

दिशि विदिशि परस्परं न दृष्टं विरचयता कुसुमोच्चयं जनेन ।
न च ददृशुररण्यजास्तदन्तं बहु किमु चेति निरूपितं न कैश्चित् ॥२॥

दिशीति—न दृष्ट नावलोकितम्, कथम्? परस्परम् अन्योन्यम्, केन ? जनेन लोकेन, किं कुर्वता सता ? कुसुमोच्चय फुल्लफुलत्रोटन विरचयता, क्व ? दिशि विदिशि, तथा च न ददृशुर्न दृष्टवन्तः, के ? अर-ण्यजा पुलिन्दादयो जीवा., किम् ? तदन्त वनमध्य वनपर्यन्त वा उ शब्द सम्बोधनार्थवाचक, उ अहो किं बहु, नकारादबहिति लब्धम्, किमिव बहिति ? न कैश्चिच निरूपितम्, किम् ? वनम्, कथम् ? इति ईदृशम् दृतीति कृत्वेत्यर्थ ॥ २॥

पृथु विहितवता वनं विधात्रा चिरमुचितानुपभोग्यमेकयोग्यम् ।
ललितजनचितं कृतं कथञ्चित्परिहरतेव तदापदे श्रमं तम् ॥३॥

---

सम तथा लयसे समन्वित सीधी और मन्द चाल चलती तथा शुभ लक्षण मय ओष्ठधारिणी अंगनाओंको साथ लेकर, प्रतापी राजाओंके नेता तथा रति भावसे प्रेरित सुग्रीव आदि वानरवंशी राजा समुद्रके किनारे किनारे वनमें चंक्रमण करने लगे थे [ मलयज चन्दन-के लेप युक्त स्तनधारिणी सरल और धीमी धीमी चलती सुपात्र नायिकाओंके साथ निकले यादववंशी प्रतापी राजा लोग प्रेमपूर्वक गगाके किनारेके वनमें विहार कर रहे थे ] ॥१॥

दिशाओं और विदिशाओंमें पुष्पोंका चयन करते हुए लोगोंने न तो आपसमें एक दूसरेको देखा था। और न वनवासी भील आदिने ही इन्हें देखा था। बहुत क्या कहें ? आश्चर्य तो यही है कि किन्हीने भी उस वनका ओर-छोर नहीं जान पाया था ॥२॥

---

1 सर्गेऽस्मिन् पुष्पिताग्रावृत्तम् । तल्लक्षणञ्च "अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" [वृ र ४।१०]

पृथ्विति–कृतम्, किम्? वनम्, केन? विधात्रा ब्रह्मणा, कथम्भूतम्? ललितजवचित कमनीय-लोकविभूषितम्, किं कुर्वतेव सता? परिहरतेव त्यजतेव, कम्? त श्रम प्रयासम्, क्व? अपदे अस्थाने कथञ्चिन्महता कष्टेन, कथम्? तदा तस्मिन् काले, कथम्भूतेन विधात्रा? विहितवता कृतवता किम्? वनम्, कदा? चिरम् कथम्भूतम्? उचितानुपभोग्यम् उचितानां शिष्टजनानाम् अनुपभोग्यम्, कथम्भूतम्? एकयोग्य क्रूरसत्वाना योग्यम्, कथम्भूतम्? पृथु विस्तीर्णम् ॥ ३ ॥

**प्रियमदइदमेतदित्यपूर्वं प्रति जनताग्रगमेन [1]तृप्तुमैच्छत् ।**
**यदि परिचितसाम्यतोऽन्यतोऽपि प्रतिविरतोऽस्ति न कस्य निर्वृतिः स्यात्॥४॥**

प्रियमिति–ऐच्छत् वाञ्छति स्म, का? जनता जनसमूह, कि कर्तुम्? तृप्तु तृप्तिमात्मानमानेतुम्, केन? अग्रगमेन पुरोयानेन, किं प्रति? अपूर्वं प्रति, कथम्? इति अद प्रियमिद प्रियमेतत् प्रियमिति यदि चेन्नास्ति, क.? प्रतिविरतो विरक्तो जन, कस्मात्? अन्यतोऽपि अन्यस्मादपि वस्तुन. कथम्भूतात्? परिचितसाम्यत परिचितेन अनुभवमानीतेन वस्तुना साम्य सादृश्य यस्य तस्मात्तथोक्तात् तदा कस्य न कस्यापि निर्वृति. सौख्य स्यादित्यर्थ. ॥४॥

**कुसुममिषुचयो गुणोऽलिमाला मृदुविटपायतयष्टयो धनूंषि ।**
**विविधमिदमनङ्गशस्त्रजातं सफलमभूच्चिरलक्ष्यदर्शनेन ॥५॥**

कुसुममिति–कुसुम पुष्पम् इषुचयो बाणसमूहोऽभूत् तथाऽलिमाला भ्रमरश्रेणिः गुणो जीवाऽभूत्, मृदुविटपायतयष्टय कोमलविटपदीर्घयष्टय धनूंषि चापान्यभवन् इति कृत्वा विविध नानाप्रकारमिदमनङ्गशस्त्रजात कन्दर्पायुधसमूह सफलम् अर्थक्रियाकारि अभूत्, केन? चिरलक्ष्यदर्शनेन बहुतरसमयतो वेश्यावलोकनेनेति ॥५॥

**कलमलिकुलकोकिलाप्रलापं स्मरधनुरानकनादमाकलय्य ।**
**दयितपरिगमेऽपि कातराणां धगिति कृतं हृदयेन कामुकीनाम् ॥६॥**

कलमिति–धगिति कृतम्, केन? हृदयेन, कासाम्? कामुकीना कन्दर्पदर्पकदर्थिताना कामिनीनाम्, क्व सत्यपि? दयितपरिगमेऽपि वल्लभपरिरम्भेऽपि, कथम्भूताना कामुकीनाम्? कातराणा भीरुणाम्, किं कृत्वा हृदयेन धगिति कृतम्? कल मनोहरम् अलिकुलकोकिलप्रलाप स्मरधनुरानकनादम् आकलय्य मत्वा ॥ ६ ॥

---

अनादि कालसे शिष्ट लोगोंके उपयोगके लिए अनुपयुक्त तथा क्रूर जंगली प्राणियोंके अनुकूल वनोंके रचयिता विधाताने अस्थानमें कृत परिश्रमके अपवादसे बचनेकी दृष्टिसे ही बड़े परिश्रम पूर्वक सुन्दर शिष्ट लोगोंसे परिपूर्ण इस वनको बनाया था ॥३॥

'आ हा, यह कैसा प्यारा है? यह कैसा है? इसकी सुन्दरता देखिये?' इत्यादि शब्दों द्वारा अब तक न देखे गये पुष्पोंके प्रति उद्गार प्रकट करती जनता आगे आगे बढ़ कर ही संतुष्ट होना चाहती थी। यदि जाने पहचाने और एक समानसे भी लोग विरत नहीं होते हैं, तो विलक्षणसे किसको निवृत्ति हो सकती है ॥४॥

फूलों रूपी बाणोंका विशाल सचय, भ्रमरश्रेणि मयी जीवा तथा कोमल और लम्बी डालियों रूपी धनुष, ये कामदेवके विविध शस्त्रसमूह बहुत समय बाद लक्ष्य सरस पुरुषोंके सामने आते ही सफल हो गये थे ॥५॥

भ्रमरश्रेणी तथा कोकिलोंकी मधुर वाणीको सुनके कामदेवके धनुषकी टंकारका भ्रम हो जानेके कारण प्रकृतिसे ही भीरु कामिनियोंके हृदय धक्-धक् करने लगे थे, यद्यपि उनके वल्लभ ही उनको आश्लेष कर रहे थे ॥६॥

---

१ 'त्रप्तुमे-' उचितो पाठ.

प्रणयकलहकैतवं प्रणामं शपथमसत्यमुपागमं वि म्।
प्रतिमिथुनमिदं निरूप्य रेजे स्फुटदिव तत्सकलं हसेन पुष्पम् ॥ ७ ॥

प्रणयेति—तत् सकल समस्त पुष्प रेजे शुशुभे, किं कुर्वदिव ? हसेन हास्येन स्फुटदिव किं कृत्वा ? प्रतिमिथुन मिथुन मिथुन प्रति प्रणाम प्रणिपात प्रणयकलहकैतव प्रणयकलहेन कैतव दम्भो यत्र त तथा विलज्ज विगता-लज्जा यत्र तम् उपागमम् आलिङ्गनम् इद सर्व निरूप्यावलोक्य ॥ ७ ॥

अवचितकुसुमावशिष्टवृन्तं वनमबलाकृतिविस्मयेन हस्तम्।
विकसितमकृतेव तन्महान्तो ननु रुजतामपि सुग्रहा गुणेन ॥ ८ ॥

अवचितेति—तद्वन हस्तम् अबलाकृतिविस्मयेन अबलानामाकृतिः अबलाकृतिस्तस्या विस्मयेन कामिनी-कायाद्भुतेन विकसितम् अकृतेव चकारेव, कथम्भूत वनम् ? अवचितकुसुमावशिष्टवृन्तम् अवचितकुसुमैरवशि-ष्टानि वृन्तानि यत्र तत् त्रोटितपुष्पोज्झितप्रसवबन्धनमित्यर्थः, युक्तमेतत्, ननु अहो जायन्ते, के ? महान्त' सन्तो नराः। कथम्भूताः ? सुग्रहा सुखेन ग्रहीतु शक्या', केषामपि ? रुजतामपि पीडाकारिणामपि, केन कृत्वा ? गुणेन ॥ ८ ॥

कथमपि नमयन्त्युपेत्य शाखां करयुगलेन लतान्तमुच्चिचीषुः[1]।
स्तनकलशभरेण भग्नमध्या तरुमवलम्ब्य निषेदुषीव काचित् ॥ ९ ॥

कथमिति—काचित् कामिनी तरु वृक्ष करयुगलेन हस्तद्वन्द्वेन अवलम्ब्य अवष्टभ्य, कथमपि महता कष्टेन शाखा नमयन्ती निषेदुषी स्थितवती, कथम्भूता ? उपेत्य समीपमागत्य लतान्त कुसुमम् उच्चिचीषुः उच्चेतुमिच्छु', केवोत्प्रेक्षिता ? स्तनकलशभरेण कुचकुम्भभारेण भग्नमध्येव ॥९॥

निकटसुलभमुद्गमं विहाय श्लथवलिनीव विदूरगं ललङ्घे।
प्रथयितुमुदरं परा स्त्रिया हि प्रियतमविभ्रमगन्धनोऽन्यसङ्गः ॥ १० ॥

निकटेति—परा अन्या काचित् कामिनी उद्गम पुष्प ललङ्घे अतिक्रान्तवती, कथम्भूतम् ? विदूरगम् अनिकटतरम् कथ यथा भवति ? श्लथवलिनी विशिथिलितवल्परिधानग्रन्थि, किं कृत्वा ? पूर्वं निकटसुलभम् उद्गम विहाय मुक्त्वा, कि कर्तुम् ? उदर जठर प्रथयितु प्रकटयितुम् युक्तमेतत् स्यात् क' ? अन्यसङ्ग कथ-म्भूत. ? प्रियतमविभ्रमगन्धन वल्लभकटाक्षसूचक , कस्या ? स्त्रियाः कामिन्या., कथम् ? हि स्फुटमिति ॥१०॥

---

प्रणय कलह और उसका दम्भ दूर करनेके लिए पैरोंमें पड़ना, झूठे शपथ तथा अनुकूल होकर निर्लज्ज रूपसे आलिंगन, आदि प्रत्येक युगलकी क्रियाओंको देखकर ही वह समस्त पुष्प समूह हँसीके मारे फटते ( खिलते ) के समान सुन्दर लगता था ॥७॥

फूल तोड़ लेनेके बाद शेष बचे डंठलोंसे पूर्ण वह वन सुकुमारांगी नायिकाओंकी लोकोत्तर आकृतिको देखकर उत्पन्न हुए आश्चर्यके कारण खुले हुए हस्तों ( रोमाचों ) से युक्तके समान प्रतीत होता था। ठीक ही है महापुरुष गुणोंके कारण कष्टदाताओंके भी वशमें हो जाते हैं ॥८॥

कोई नायिका दोनों हाथोंसे पकड़कर लताके ऊपर विकसित पुष्पको तोड़नेकी इच्छासे बड़े परिश्रम पूर्वक शाखा तक पहुँच कर उसे झुकाती हुई ऐसी प्रतीत होती थी, मानो स्तनरूप कलशोंके भारसे कमर टूट जानेके कारण पेड़ पकड़कर ही खड़ी रह गयी है ॥९॥

दूसरी कामिनी पास ही विकसित अतएव सुलभ पुष्पको छोड़कर अपने कृश उदरको प्रकट करने के लिए ही नीवीको शिथिल करती समान बहुत ऊपर खिले पुष्पके लिए उचक रही थी। उचित ही है क्योंकि स्त्रियोंके व्यर्थ कार्य परम प्रिय वल्लभके कटाक्षोंके प्रेरक होते हैं ॥१०॥

---

१ उच्चिकीर्षु –द०।

**सुरभि वितरितुं प्रसूनमेका सकृदधिपेन विपक्षनाम नीता।**
**कितव तव फलं तदस्तु लब्धं प्रियजनयेऽर्पय पुष्पमित्यकुप्यत् ॥ ११ ॥**

सुरभीति—एका कामिनी अकुप्यत् कुपितवती, कथमिति ? हे कितव धूर्त अस्तु तिष्ठतु, किं तत् ? प्रसूनम् अर्पय देहि कस्यै ? प्रियजनये प्रियभार्यायै यतो लब्ध प्राप्तम्, किम् फलम् ? कस्य ? तव, सयेत्यध्याहार्यम्, कथम्भूता सती अकुप्यत् ? नीता प्रापिता, किम् ? विपक्षनाम सपत्न्यभिधानम्, केन ? अधिपेन स्वामिना, कथम् ? सकृदेकवारम्, किं कर्त्तुम् ? सुरभि सुगन्धि प्रसून वितरितु दातुम् ॥११॥

**कुचयुगमतुलं कुतोऽस्य भारः किल भवतीति तुलाधिरोपणाय।**
**सह तुलयितुमात्मनोद्यतेव क्षणमपरा व्यलगीत्प्ररोहदोलाम् ॥ १२ ॥**

कुचेति—अपरा अन्या काचित् कामिनी प्ररोहदोला व्यलगीत् आरुरोह, कथम्भूता सती ? तुलाधिरोपणाय उद्यता, किं कर्त्तुमिव ? अतुलम् अनुपम कुचयुग स्तनद्वितय तुलयितुमिव, कथम् ? सह, केन ? आत्मना, कथमिति कृत्वा व्यलगीत् ? किल शब्दो लोकोक्तौ वाक्यालङ्कारे वा वर्तते, किम् ? स्यात्, कः ? भारः, कस्य ? अस्य कुचयुगस्य, कुत. ? आत्मनः सकाशात्, आहो स्वित् किं स्यात् आत्मनो भार कुचयुगात् इति ॥ १२ ॥

**अवचनमधिशय्य मन्युनान्या पृथगधिपाद्विरचय्य पुष्पशय्याम्।**
**स्मरशरशयनस्थितेव दूना ननु विरहः प्रियगोचरोऽपि[1] दीनः ॥ १३ ॥**

अवचनमिति—बभूवेति क्रियाध्याहार्या, "साध्याहाराणि वाक्यानि भवन्तीति वचनात्", बभूव, का ? अन्या कामिनी, कथम्भूता ? दूना कदर्थिता, केन ? मन्युना कोपेन, किं कृत्वा ? पूर्वमधिशय्य निद्राय, कथ यथा भवति ? अवचन सभोगगोचरालापरहितम्, कथम् ? पृथक्, कस्मात् ? अधिपात् स्वामिन, किं कृत्वा ? पूर्वं विरचय्य विधाय, काम् ? पुष्पशय्या प्रसूनास्तरणम्, केव दूना बभूव ? स्मरशरशयनस्थितेव कुसुमरोपणशयनमारूढेव, युक्तमेतत्, ननु अहो जायते, कोऽसौ ? विरह, कथम्भूतो जायते, दीनः[1], कथम्भूतोऽपि सन्, प्रियगोचरोऽपि वल्लभविषयोऽपीति शेष ॥ १३ ॥

**व्रततिषु गहनासु कापि लीनं मृगयितुमीश्वरमाकुलं भ्रमन्ती।**
**करधृतलतिकाबलोपलब्धुं तमुदधृतेव मनोभवस्य शाखाम् ॥१४॥**

व्रततिष्विति— उपधृतेव उद्धृतिं नीतेव, का ? अबला कापि कामिनी, काम् ? मनोभवस्य मकरध्वजस्य शाखाम्, कथम्भूता ? करधृतलतिका हस्तधृतवल्ली, किं कर्तुम्, कम् ? उपलब्धु प्राप्तुम्, तमीश्वरम्, किं कुर्वति ? भ्रमन्ती पर्यटन्ती हिण्डमानेत्यर्थ, कथ यथा भवति ? आकुल व्यग्रम्, किं

---

सुगन्धित फूलको देते समय पतिके द्वारा एक बार ही सौतका नाम लिये जानेपर एक नायिका कुपित हो उठी थी। और कहती थी 'हे कितव ! इस पुष्पको अपनी प्राणप्यारीको ही दो। रहने दो। तुम्हारी प्रीतिका फल मैं पा चुकी' ॥११॥

अन्य विलासिनी अपने निरुपम स्तनको अपनी ही कायाके साथ तौलनेके लिए और इस स्तन युगलका भार किस कारणसे होता है यह निश्चय करनेके लिए ही दोनों को तुलापर रखनेके लिए उद्यतके समान क्षण भरके लिए लटकते हुए वटके प्ररोहोंपर झूल गयी थी ॥१२॥

क्रोधके आवेगमें कोई नायिका पतिसे अलग पुष्पशय्या बना कर चुपचाप लेटी हुई ऐसी दिखती थी मानो कामदेवके बाणोंकी शर शय्यापर लिटाकर सतायी जा रही हो। उचित ही है, क्योंकि प्रेमीके सामने रहनेपर भी विरह-व्यथा कम नहीं होती है ॥१३॥

सघन लता कुंजमें छिपे अपने प्राणनाथको खोजनेके लिए आकुलतापूर्वक इधर-उधर

---

१. -ऽप्यदीन उचिततर पाठ।

कर्तुम् ? मृगयितुम् अवलोकयितुम्, कम् ? ईश्वर पतिम्, कथम्भूतम् ? व्रततिषु वल्लीषु लीनम्, कथम्भूतासु ? गहनासु घनतरासु ॥१४॥

**श्रवसि शिरसि कृत्स्नमुच्चयेऽपि स्मितहसितानुकृतीर्ष्यया क्षिपन्ती ।**
**मुकुलमुदितमुद्गमं च सर्वस्वमपि वनस्य परोद्यतेव हर्तुम् ॥१५॥**

श्रवसीति—परा काचित् कामिनी वनस्य सर्वस्व हर्तुमिव उद्यता, किं कुर्वन्ती ? श्रवसि कर्णे मुकुल कलिका क्षिपन्ती प्रेरयन्ती तथा शिरसि मस्तके उद्गम क्षिपन्ती, कस्मात् क्षिपन्ती ? ईर्ष्यया स्पर्द्धया, कथम्भूतमुद्गमम् ? कृत्स्न समस्त पुन उदित निर्गत पुन' स्मितहसितानुकृति स्मितमीषद्धास्यम् ओष्ठपुटस्याव्यादानाद्धृदयान्तर्वर्त्तितया हास्यमित्यर्थ. । हसितमोष्ठपुट प्रसार्य्य यत् हास्य प्रवर्त्तते तद्धसितमित्यर्थ, स्मित च हसित च स्मितहसिते स्मितहसितयोरनुकृतिर्यस्य तत्तथोक्तम्, अथवा विशेषणमिद द्वयोर्मुकुलोद्गमयोर्बोद्धव्य, तद्यथा कथम्भूत मुकुलम् ? स्मितानुकृति, उद्गम च कथम्भूतम् ? हसितानुकृति, क सत्यपि ? उच्चयेऽपि त्रोटनेऽपि ॥१५॥

**इति चपलविलासिनीविहारैर्विलुलितमुद्गतकर्णिकारकोशम् ।**
**प्रशमयितुमुपप्लवं वधूभ्यो मुकुलितहस्तमिवाबभावरण्यम् ॥१६॥**

इति—अरण्य वनम् आबभौ सामस्त्येन रेजे, किमिव ? मुकुलितहस्तमिव कुड्मलितकरमिव, काभ्यः ? वधूभ्य कामिनीभ्यः, किं कर्तुम् ? प्रशमयितुम् उपशान्तिं नेतुम्, कम् ? उपद्रवमुपप्लवम्, कथम्भूतमरण्यम् ? विलुलितमुपद्रुतम्, कै ? चपलविलासिनीविहारैश्चञ्चलकामिनीक्रीडनै, कथम् ? इत्युक्तप्रकारेण, पुन' कथम्भूतम् ? उद्गतकर्णिकारकोश निर्गतकर्णिकारकर्णिकम् इति ॥ १६ ॥

**स्थलकमलपरागपिञ्जरागः परिचितवांश्च नदीनवार्जवं यः ।**
**श्रममभिभवति स्म कामिनीनां विधुतमयूरशिखः स मातरिश्वा ॥१७॥**

स्थलेति—मातरिश्वा वायु कामिनीना नारीणा श्रम खेदम् अभिभवति स्म अपाकरोत्, कथम्भूत. ? विधुतमयूरशिख पुन स्थलकमलपरागपिञ्जराग स्थलकञ्जकिञ्जल्ककर्बुरकान्ति यश्च परिचितवान् प्राप्तवान्, कम् ? नदीनवार्जव समुद्रवारिवेगम् ।

भारतीय —यश्च परिचितवान्, किम् ? नदीनवार्जव नवञ्च तत् आर्जव च नवार्जव नद्या नवार्जव नदीनवार्जव सरिन्नूतनप्राञ्जलत्वम् अर्थात् गङ्गाया नवार्जव लब्धम् । शेष समम्, उभयत्र वायो सुरभिशीतलमन्दा गुणा. प्रदर्शिता ॥ १७ ॥

---

भटकती कोई मुग्धा उसे (पतिको) पानेके लिए हाथसे लता पकड़े थी तो ऐसी प्रतीत होती थी मानो कामदेवकी शाखा ही उठा लायी है ॥१४॥

अपने स्मित और हासका अनुकरण करती हुई समान कलियों और विकसित फूलोंको पुष्प चयनके द्वारा क्रमशः अपने कानों और जूड़ेमें सजाती हुई कोई कामिनी ऐसी प्रतीत होती थी मानो वह उस क्रीड़ावनका सर्वस्व ही चुरानेके लिए टूट, पड़ी हो ॥१५॥

उक्त प्रकारसे चचल विलासिनियोंके वन विहारके प्रसगसे नोचे गये, उस क्रीड़ा वनने इस चतुर्दिक् उपद्रवको शान्त करनेके लिए ही उन वधुओंके सामने कनेरकी कलियोंके बहानेसे हाथ ही जोड़ दिये थे ॥१६॥

समुद्रकी जलराशिके वेगसे [ गगा नदीके नूतन निर्मल पूरसे ] सम्बद्ध अतएव शीतल, स्थलके कमलोंके परागसे व्याप्त फलत सुगन्धित और मोरोंके पंखोंको फैलाती हुई तीव्र हवाने क्रीड़ामें लीन कामिनियोंकी थकानको दूर कर दिया था ॥१७॥

**क्षुपविपिनलतान्तरे जनानामिति सुरतव्यवहारवृत्तिरासीत् ।**
**ननु दयितपरस्परानिकारव्यवहरणं भुवि जीवितव्यमाहुः ॥१८॥**

क्षुपेति–जनाना क्षुपविपिनलतान्तरे क्षुपा' ह्रस्वशाखा शाखिन विपिनलता वनकन्दलिन्यः अन्तर मध्य क्षुपाश्च विपिनलताश्च क्षुपविपिनलतास्तासामन्तरे सुरतव्यतिहारवृत्ति. सभोगपरस्परानुवर्तनम् आसीत् ननु युक्तमेतत्, भुवि भूमौ विद्वासो दयितपरस्परानिकारव्यवहरण दयितयोर्दम्पत्यो. परस्परानिकारस्य अन्योन्याप्रतारणस्य व्यवहरण जीवितव्य जीवितम् आहुः ॥१८॥

**परिपजति परस्परं समेत्य प्रतिमिथुने कुचमण्डलं बबाधे ।**
**भजति हि निजकर्कशं न पीडा कमपरमध्यगतापवारकं वा ॥१९॥**

परीति—परस्परम् अन्योन्य परिपजति आलिङ्गति सति कुचमण्डल स्तनमण्डली बबाधे बाधते स्म, किं कृत्वा ? पूर्व समेत्य मिलित्वा, युक्तमेतत् वा अथवा पीडा कर्त्री क पुरुष न भजति अपितु सर्वमेव, कथम्भूत सन्तम् ? अपरमध्यगताऽपवारकम् अपरयोर्मध्यगतो योऽपवारकस्तम् इतरान्तरस्थित परिपान्थकमित्यर्थ', कथम्भूतम् ? निजकर्कशम् आत्मना कठिनमित्यर्थ, कथम् ? हि स्फुटम् ॥१९॥

**उदधमदिव तत्पराभिमर्शादधरयुगं व्यतिचुम्बितं स्वमङ्गम् ।**
**अधरितगतयो गृहीतमुक्ताः समुपचिता हि सह व्रणैः स्फुरन्ति ॥२०॥**

उदिति–अधरयुगम् ओष्ठद्वय स्व स्वकीयमङ्गम् उदधमदिव उच्छ्वासयति स्मेव, कस्मात् ? तत्पराभिमर्शात् तस्य प्रतिमिथुनस्य य पराभिमर्शः तस्मात्, कथम्भूतम् अधरयुगम् ? व्यतिचुम्बित परस्परवक्त्रसयोगीकृतम्, युक्तमेतत्, स्फुरन्ति विजृम्भन्ते, के ? अधरितगतय अधरिता गतिर्येषा ते अधोगतस्फुरणा इत्यर्थ., कथम्भूता. ? व्रणै समुपचिता. सभृता', कथम् ? सह युगपत्, पुनः कथम्भूता. ? गृहीतमुक्ताः पूर्व गृहीता पश्चान्मुक्ता तथाविधा अधरा अपि भवन्तीति भाव. ॥२०॥

**परभृतशुकसारिकाविरावाः सममबलासुरतारवं तिरोऽधुः ।**
**अपि चरितमवाच्यमन्यदीयं रहयति पक्षिगणो न किं मनुष्यः ॥२१॥**

परभृतेति–परभृतशुकसारिकाविरावा कोकिलादीना (कोकिलकीरसारिकाणा) स्वरा. अबलासुरतारव मुग्धाङ्गनारतकूजित तिरोऽधु प्रच्छादितवन्त, कथम् ? समम्, युक्तमेतत्, पक्षिगण विहङ्गमसमूहोऽपि अन्यदीय परकीयम् अवाच्यमपि गोप्यमपि चरित चेष्टित रहयति क्षपयति किं पुन' मनुष्यो न प्रच्छादयतीत्यर्थ.। अत्र भाव उत्प्रेक्ष्यते पक्षौ जनकजननीसम्बन्धलक्षणौ येषा ते पक्षिण' कुलसभूता तेषा गणोऽपि अवाच्यम्।

---

छोटे-छोटे पौधोंकी सघन पंक्ति और लताओंकी आड़में क्रीड़ा करते लोगोंकी सुरत-क्रियाका आचरण हुआ था। सत्य है, क्योंकि प्रेमी तथा प्रेमिकाके परस्पर निश्छल व्यवहारको ही संसारमें जीवन कहते हैं ॥१८॥

निकट आकर एक दूसरेको गाढ़ आलिंगन करनेमें प्रत्येक जुगलको स्तन मण्डल बड़ी बाधा दे रहा था। ठीक ही है, जो स्वयमेव कठोर है वह अथवा दोके बीच में आया बाधक किसको कष्ट नहीं देता है ? ॥ १९ ॥

तत्तत् युगलों के द्वारा गाढ़ आलिंगन किये जानेपर सतत चुम्बन किये गये दोनों ओष्ठोंने अपनी अपनी कायाको वायुसे फुला सा दिया था। ओष्ठोंकी प्रणयगति को प्राप्त अतएव दबाकर दन्त-क्षतोंके साथ छोड़े गये ओठ फड़कते ही हैं [ निन्दनीय आचरण कर्ता भी बन्धन को प्राप्त होते हैं और घावोंसे भरी देह लेकर जब छूटते हैं तो वेदना से तड़पते हैं ] ॥ २० ॥

कोकिल, तोता, मैना आदि पक्षियोंकी सतत और सरस ध्वनिने मुग्धाओंकी सुरतकी चीखको सर्वथा छिपा दिया था। दूसरोंके गोपनीय आचरणको पक्षि समूह भी गुप्त रखता

अन्यदीय चरित प्रच्छादयति, किं मनुष्य. किमिति शब्देन मनुष्य आक्षिप्यते, मनुष्यमात्रोऽकुलीनो न रहयति ॥ २१ ॥

**प्रशमय रुषितं प्रिये प्रसीद प्रणयजमप्यहमुत्सहे न कोपम् ।**
**तव विमुखतयाऽधिरूढचापे मनसिशये कुपिते कुतः प्रसादः ॥२२॥**

प्रशमयेति–हे प्रिये वल्लभे तत्तस्मात् कारणात् त्व रुषित रोष प्रशमय, तथा प्रसीद प्रसन्ना भव, यस्मात् अहमपि नोत्सहे न सोढु शक्नोमि, कम् ? प्रणयजमपि स्नेहसमुत्पन्नमपि कोपम्, कुत कस्मात् प्रसाद प्रसन्नता स्यात् अपि तु न भवेत्, क सति ? मनसिशये कन्दर्पे कुपिते प्राप्तकोपे, कथम्भूते ? अधिरूढचापे अधिज्य-कोदण्डे, कया ? तव विमुखतया भवत्या पराङ्मुखत्वेन ॥ २२ ॥

**मम यदि युवतिं विशङ्कसेऽन्यां श्वसिमि तव श्वसितैर्मृषान्ययोगः ।**
**भवतु मनसि संशयस्त्वमैक्यात्प्रविभजसे त्वयि जीवितं कथं मे ॥२३॥**

ममेति–यदि चेत् विशङ्कसे शङ्काविषयीकरोषि, काऽसौ ? त्वम्, काम् ? युवतिं कामिनीम्, कथम्भूताम् ? अन्यामपराम्, कस्य ? मम, तदा मृषा एवमेव अन्ययोग. अन्यस्या कामिन्या योग. सम्बन्ध., य श्वसिमि प्राणिमि, कै ? तव भवत्या श्वसितै' प्राणितै, भवतु नाम मनसि सशय. सन्देह, कथ प्रविभजसे केन प्रकारेण पृथक्करोषि, काऽसौ ? त्व भवती, किम् ? जीवित त्वयि स्थितम्, कस्य ? मे मम कस्मात् ? ऐक्यात् अपृथक्त्वात् ॥ २३ ॥

**न पुनरिदमहं करोमि जीवन्निति शपथेऽधिकृते पुराकृतं स्यात् ।**
**त्यज कुपितमितीरिते नु सत्यं कुपितवती भवसीव तन्न जाने ॥२४॥**

नेति–नु अहो सत्य कुपितवती भवसीव, तन्न जाने तन्न वेद्म्यहम्, क सति ? ईरितेऽभिहिते सति कथित इत्यर्थ, कथम् ? इत्युक्तप्रकारेण, त्यज जहि, किम्, कुपित कोपम्, यत स्यात् भवेत्, किम् ? पुराकृत कर्म, क सति ? शपथे आजायाम्, कथम्भूते ? अधिकृतेऽङ्गीकृते, कथमिति ? जीवन् पुनरिद नाह करोमि इति ॥ २४ ॥

**बहुतिथमवलोक्य नाथमानं कलयसि सत्यमिमं कृतापराधम् ।**
**अनुदितवचनं नवप्रियं मां गणयसि गर्वितमन्यवारितं वा ॥२५॥**

बह्विति–कलयसि जानासि, कासौ ? त्वम् कम् ? इम जन कृतापराध विहितागसम्, कथम् ? सत्य परमार्थत, किं कृत्वा ? पूर्वमवलोक्य निरीक्ष्य, कम् ? माम्, किं कुर्वाणम् ? नाथमान याचमानम्, कथम्भूत सन्तम् ? बहुतिथ बहूना पूरण बहून् जनान् मेलयित्वा तै सह प्रार्थयन्तमित्यर्थ' तथा गणयसि मन्यसे, कम् ? माम्,

---

है तो क्या समीचीन मातृ-पितृ पक्षोंमें ( पक्षि ) उत्पन्न मनुष्य नहीं छिपायेगा ? ॥ २१ ॥

हे प्रिये, कोपको शान्त करो, प्रसन्न हो जाओ। मैं प्रणयकी लड़ाईको भी सहन नहीं कर सकता हूँ। तुम्हारे मुख फेर लेने पर और मनमें उत्पन्न कामदेवके धनुष चढ़ा लेनेपर मेरी कहाँ कुशल है ? ॥२२॥

यदि तुम्हे मेरी किसी दूसरी प्रेमिकाके होनेका सन्देह है तो विश्वास रखो मैं तुम्हारी ही साँससे जीवित हूँ, पर-सम्बन्ध झूठ है। मनके सन्देहको जाने दो। तुमपर ही मेरा जीवन है। तुम्हारे प्राणोंमें एकमेक मेरे प्राणोंको क्यों अलग करती हो ? ॥२३॥

शायद कभी पहले भूल हुई हो। क्रोध छोड़ो। 'फिर जीते जी कभी ऐसा अपराध नहीं करूँगा।' ऐसी शपथ ले लेने पर भी मैं यथार्थ नहीं जानता कि क्यों तुम कुपित हो गई हो ॥२४॥

विविध प्रकारसे तुम्हारी प्रार्थना करते हुए देखकर क्या मुझको वास्तवमें ही तुम

कथम्भूतम्? नवप्रियम्, पुनः कथम्भूत सन्तम्? अनुदितवचनम् अनुक्तवाचम्, तथा गणयसि गर्वित वा अथवा अन्यवारितम् अन्यया कामिन्या वारित प्रतिषिद्ध वेति शेषः ॥ २५ ॥

**शिथिलय हृदयं न मेऽनुरागं विसृज विषादमिमं न तन्वि वाक्यम् ।**
**इति दयितमुपागमैकदौत्यं[1] स्वयमबलाभिगतं कथञ्चिदैच्छत् ॥२६॥**

शिथिलयेति–ऐच्छत् स्वीचकार, कासौ? अबला मुग्धाङ्गना काचित्, कम्? दयित वल्लभम्, कथम्? कथंचित् महता कष्टेन, कथम्भूत दयितम्? उपागमैकदौत्यम् आलिङ्गनाय साधारण दूतत्व यस्य स तथोक्तस्तम्, कथम्भूतम्? अभिगत स्वीकृतवन्तम, किम्? वाक्यम्, कथम्? स्वयमात्मनैव, अथवा शोभनोऽयो यस्मिन् वाक्याङ्गीकारकर्मणि तत् स्वय समीचीनदैव यथा भवति, कथम्? इति, हे तन्वि तनूदरि! शिथिलय शिथिलीकुरु, कासौ? त्वम्, किम्? हृदय मा कोपवच्चेतोदृढ विवेहीत्यर्थ । न शिथिलय त्वम्, कम्? अनुरागम् अतीव प्रीतिम्, कस्य? मे मम, तथा विसृज विमुञ्च, कम? विषादम् आनन्दाभावम्, न विसृज, कम्? इम मल्लक्षण जनमिति ॥२६ ॥

**तरलयसि दृशं किमन्यचेता, दृतिरिव लोहकृतां किमुष्णमुष्णम् ।**
**श्वसिषि, किमिदमुत्त्रसस्यपैतुं, किमिव भयं, वद का मनःप्रिया ते ॥२७॥**

इदानीं कुलकेन व्याख्यायते—तरलयसीति–दृश दृष्टिं किं तरलयसि चपलयसि, कथम्भूत. सन्? अन्यचेता अन्यस्या चेतो यस्य स अपरमनस्क इत्यर्थ., तथा उष्णम् उष्ण किं श्वसिषि प्राणिषि, केव? लोहकृताम् अयस्काराणा दृतिरिव भस्त्रेव, किमिदमुत्त्रससि उद्विजसे, कि कर्तुम्? अपैतुम् अपसर्तुम्, किमिव भय विद्यते भवत., वद त्व ब्रूहि का मनःप्रिया चित्तवल्लभाऽस्ति ते तवेति ॥२७॥

**अलस इव, गतं कुतोऽपि चित्तं मृगयितुमिच्छुरिवोद्भ्रमन्निव त्वम् ।**
**किमसि किमपराकृतिं प्रपन्नस्तव चपलस्य मनोगतं न वेद्मि ॥२८॥**

अलस इति–किमसि भवसि त्व भवान्, क इव? अलस इव आलस्योपहत इव, किमसि, क इव? इच्छुरिवाभिलाषुक इव, किं कर्तुम्? मृगयितुम् अवलोकयितुम्, किम्? चित्त चेत., कथम्भूतम्? गत नष्टम्, कस्मात् कारणात्? कुतोऽपि, किमसि, किं कुर्वन्निव? उद्भ्रमन्निव मुह्यन्निव किमपराकृतिम् अन्याकार प्रपन्नोऽसि प्राप्तोऽसि, न वेद्मि न जानामि, कासौ? अहम्, किम्? चपलस्य तरलस्य तव मनोगतमभिप्रायम् ॥२८॥

**किमतिविपिनमन्तरे नदी वा तव गिरिदुर्गमुतास्ति योषितो वा ।**
**यदनवरतचिन्तयाऽसि खिन्नो ननु च तथा सति किं नु वल्लभत्वम् ॥२९॥**

---

अपराधी समझती हो? मुझ नये प्रेमीसे बोलती भी नहीं हो और मुझे ही अहंकारी तथा दूसरी प्रेमिकाके द्वारा रोका गया सोचती हो ॥२५॥

मनकी गाँठको थोड़ा ढीला करो, मेरी प्रगाढ़ प्रीतिको नहीं। इस शोकको छोड़ो, अपने वचन (प्रेमप्रतिज्ञा) को मत त्यागो। इस प्रकार पुनर्मिलनके एकमात्र दूतपनेको प्राप्त तथा अपने आप ही प्रेयसीके पास पहुँचे प्रेमीको सरला नायिकाने बड़ी कठिनाईसे अंगीकार किया था ॥२६॥

दूसरी प्रेमिकामें चित्त रहनेसे आँखोंको चंचल क्यों किये हो? लुहारों की धौंकनीके समान किस कारणसे तुम उष्ण उष्ण साँसें ले रहे हो? क्यों भागने के लिए बार-बार चौंक पड़ते हो? तुम्हें क्या डर है? बोलो तुम्हारी मनमें बसी प्यारी कौन है? ॥२७॥

तुम आलसीसे क्या हो रहे हो? कहीं चले गये मनको ही खोजने के लिए उत्सुक समान तुम क्यों भटकते से हो? किस कारणसे आज तुम्हारी आकृति ही दूसरी हो रही है? अत्यन्त चालाक तुम्हारे मनकी बात ही मैं नहीं समझ पा रही हूँ ॥२८॥

---

१. "गमैकदैत्यमिति" पाठोऽपि रुचिरः ।

किमिति—तव अन्तरे मध्ये किं अतिविपिन महदरण्यमस्ति, वा अथवा नद्यस्ति, उत् अथवा गिरिदुर्गमस्ति, वा अथवा किं योषित[1] सन्ति, यत् यस्मात् कारणाद् अनवरतचिन्तया निरन्तरचिन्तनेन त्वं खिन्न. दुर्बल असि, ननु अहो तथा च सति एव च सति पूर्वोक्तप्रकारे सतीत्यर्थ, किं नु वल्लभत्वं वाल्लभ्यम्। अथ प्रकारान्तरेण व्याक्रियते—चकारो नियमार्थो गम्यते, तेनायमर्थ.—तथा सत्येव हे वल्लभ! त्वं किं नु अपि तु त्वमेवास्माकं वल्लभो भवसीत्यर्थ ॥२९॥

**मधुरमभिहितो न भाषते मां न खलु भवानभिचुम्बितः प्रणिंस्ते।**
**न च परिरभते कृतोपगूढः पटलिखितः स्विदपेक्षते न दृष्टः ॥३०॥**

उपलम्भपुर.सरतया व्याक्रियते—मधुरमिति—भवान् त्व मा न भाषते न ब्रूते, कथभूत सन्? अभिहित सभाषित, कथ यथा भवति? मधुर कर्णकुहराह्लादि तथा न प्रणिंस्ते न चुम्बति, कोऽसौ? भवान्, काम्? माम्, कथम्? खलु निश्चयेन, अथवा खलुशब्दो नियमार्थो गम्यते तेनायमर्थो नैव प्रणिंस्ते कथभूत सन्? अभिचुम्बित, तथा न परिरभते नालिङ्गति। कोऽसौ? भवान्, काम्? माम्, कथभूत सन्? कृतोपगूढ कृतालिङ्गन, स्वित् अथवा नापेक्षते नाङ्गीकरोति, कोऽसौ? भवान्, काम्? माम्, कथभूत सन्? दृष्ट अवलोकित, पुन कथभूत? पटलिखित वस्त्रचित्रित इत्यर्थ ॥३०॥

**इति किमपि विकोपितास्तरुण्यः किल तरुणान्विनियम्य काञ्चिदाम्ना।**
**कलवलयरवं विशीर्णसूत्रं कुसुमगुणैरवताडयांबभूवुः ॥३१॥**

इतीति—किलशब्दोऽत्र वाक्यालकारे वरीवर्ति। अवताडयाबभूवु सामस्त्येन ताडितवत्य, का? तरुण्यो युवत्य, कान्? तरुणान् यून, कै कृत्वा? कुसुमगुणै पुष्पसूत्ररज्जुभि., किं कृत्वा? पूर्वं विनियम्य विशेषेण नियन्त्र्य, केन कृत्वा? काञ्चिदाम्ना मेखलामालया, कथ यथा भवति? कलवलयरव पुन विशीर्णसूत्रम्, कथभूता? किमपि विकोपिता विशेषेण कोप प्रापिता, कथम्? इत्युक्तप्रकारेण ॥३१॥

**कुपितमवचनं शिरःप्रणामः शपथमयः प्रणयः कृतोपचारः।**
**इदमद इति गोचरो न वाचां प्रतिदयितं बहुकैतवं बभूव ॥३२॥**

---

क्या तुम्हारे अथवा तुम्हारी प्रेमिकाके बीचमे कोई घना वन है? अथवा कोई नदी बह रही है? या कोई दुर्गम पहाड आ गया है? जिसके कारण तुम अनवरत चिन्तित हो और खेद-खिन्न हो। वास्तवमे यदि ऐसा है तो बलिहारी आपकी वल्लभताकी? ॥ २९ ॥

रसीली बातें करनेपर भी आप चुप हैं। तरह-तरहसे लगातार चुम्बन करनेपर भी आप मेरा चुम्बन नहीं करते हैं। गाढ आलिंगन करनेपर भी आप आलिंगनके लिए नहीं बढते हैं। मेरी दृष्टि आपपर ही लगी है किन्तु आपकी दृष्टि मेरी ओर घूमती ही नहीं है। मानो—आप सामने नहीं हैं आपका चित्रपट मै देख रही हूँ ॥ ३० ॥

इस प्रकारसे बहुत खिजाये जानेपर तरुणी कामिनियोने अपने तरुण प्रेमियोको करधनीरूपी शृंखलासे बांध दिया था और फूल-मालाओरूपी चाबुकोंसे तड़ातड मारना प्रारम्भ कर दिया था। फलस्वरूप तागा टूट जानेसे फूल बिखर गये थे और हाथकी चूडियों-की झनझनाहटसे वातावरण व्याप्त हो गया था ॥ ३१ ॥

---

१ षष्ठीकरणे अर्थसौष्ठव भविष्यति—यथा हि 'तव योषितो वा अन्तरे महदरण्यमस्ति, अथवा नदी अस्ति, अथवा ' इत्यादि।

कुपितमिति—न बभूव न प्राप्नोति स्म, कोऽसौ ? गोचर विषय, किम् इदम्, अद इति एतत्, कैतवम्, कथभूतम् ? बहु बहुप्रकारम् असत्यव्यवहारम्, कथम् ? प्रतिदयित दयित दयित प्रति, कासा गोचर ? वाचाम्, वचनाना कृत्वा, गोचर. प्रदर्श्यते—तथा बभूव किं कर्तृ ? कुपित कोप, कथभूतम् ? अवचन वचनरहितम्, तथा बभूव, कोऽसौ ? शिर प्रणाम, कथभूत ? शपथमय मातृपित्रादिवधविधानलक्षणाज्ञा शपथोऽभिधीयते, शपथेन निर्वृत्तः शपथमय, नथा बभूव, कोसौ ? प्रणय स्नेह, कथभूत ? कृतोपचार कृत उपचारो यत्र स तथोक्त । अत्र कुपितादिकर्तृपदाना कैतवमिति सर्वत्र योज्य कर्मेति ॥३२॥

**इति वनमभितो विहृत्य खेदादगुरुचितायति साधुनीपयोगात् ।**
**समकररुचिरक्षतां हरीणां प्रियजनता रतये समुद्रवेलाम् ॥३३॥**

इतीति—अगु गतवत्य, का ? प्रियजनता प्रियाश्च ता जनता 'अडट्प्रियादौ स्त्रिया पुवत्' [ जै० सू० ४।३।१४६ ] इति अनेन सूत्रेण पुवद्भाव । काम् ? समुद्रवेला पयोधिवेलाम्, कस्यै ? रतये क्रीडायै, केषा प्रियजनता ? हरीणा सुग्रीवादीना कपीन्द्राणाम्, कथभूता समुद्रवेलाम् ? समकररुचिरक्षता मकरा जलचरविशेषा रुचिरा मत्स्या अभिधीयन्ते । उक्त च—"रुचिर कुसुम प्रोक्त रुचिर रुधिर तथा, रुचिर शफर प्रोक्तो रुचिर पेशल मतम्", इति जयाभिधाने दृष्टत्वात्, मकराश्च रुचिराश्च मकररुचिरास्तेषा क्षतेन सह वर्तत इति ता समकरमीनजनितगाहनामित्यर्थ, कस्मादगु ? खेदात् श्रमात्, किं कृत्वा ? विहृत्य फलपुष्पपल्लवोच्चयार्थं पर्य्यट्य, किम् ? वन कान्तारम्, कथम् ? अभित सामस्त्येन, कथम् ? इत्युक्तप्रकारेण, कथभूत वनम् उचितायति, उचिता योग्या आयतिर्दैर्घ्यं यस्य तत्—कस्मात् ? साधुनीपयोगात् साधवश्च ते नीपाश्च साधुनीपा फलकुसुमपल्लवैर्मनोहरा कदम्बा इत्यर्थ तेषा योगात् ।

भारतीय—अगात् गतवती, काऽसौ ? प्रियजनता, किम् ? धुनीपय नदीजलम्, कस्यै ? रतये, केषा प्रियजनता ? हरीणा यादवानाम्, कथभूता प्रियजनता ? समुद्रवा समुत् सानन्दो रवो यस्या सा समुद्रवा, कस्मात् ? खेदात्, किं कृत्वा पूर्वं विहृत्य, किम् ? वनम्, कथम् ? इति उक्तप्रकारेण, कथभूत वनम् ? अगुरुचितायति अगुरुभि वृक्षविशेषैश्चिता सभृता आयतिर्यस्य तत्, कथम् ? अभित सामस्त्येन, कथभूताना हरीणाम् ? इला भुव रक्षता प्रतिपालयताम्, कथ यथा भवति ? समकररुचि सम साधारण "न्यूनान्यूनपरित्यागात् साधारणसमो मत' इति वचनात्, कर सिद्धाय, रुचि प्रीति, सम करो यस्या सा समकरा, समकरा रुचिर्यस्मिन् पृथ्वीपालनलक्षणे कर्मणि तद्यथा भवतीति ॥३३॥

---

कुपित होना और बोलना छोड़ देना, माता-पिताकी शपथ खाना और पैरोमे माथा टेक देना, मनानेके लिए तरह-तरहसे प्रेमोपचार करना और प्रीति प्रकट करना इत्यादि भाँति-भाँतिके कपटपूर्ण व्यवहार प्रत्येक प्रेमिकाके साथ इतने किये गये थे कि उनको शब्दोंमे कहना कठिन है ॥ ३२ ॥

[ साधुनीपयोगात् उचितायति वनं अभितो विहृत्य खेदात् हरीणां प्रियजनता रतये समकररुचिरक्षतां समुद्रवेला अगु. ] ऊँचे और सीधे कदम्ब वृक्षोकी बहुलताके कारण विहारके लिए अत्यन्त उपयुक्त वनके कोने-कोनेमे घूमनेके बाद वानरो ( सुग्रीव आदि )की प्रिय जनता थक गयी थी। फलत मगरो और ( रोहू ) मछलियोंसे व्याप्त समुद्रके किनारे जलविहारके लिए जा पहुँची थी।

[ अगुरुचितायति वनं अभित. विहृत्य खेदात् इलां रक्षतां हरीणा समकररुचिः प्रियजनता समुद्रवा रतये धुनीपयः अगात् ] अगुरु चन्दन आदिके वृक्षोकी सघनताके कारण विस्तृत वनमे उक्त प्रकारसे प्रेमलीला करती हुई यादवोको अनुरक्त जनता क्लान्त हो गयी

पयसि भयमवेत्य योषितां दयितजनोऽभवदग्रत सरः ।
कुतपनियतविक्रमाः स्त्रियः क्व न विधुरे पुरुषः पुरःसरः ॥३४॥

पयसीति—दयितजन भर्तृसमूह योषिताम् तरुणीनाम् अग्रत सर अभवत्, किं कृत्वा ? पयसि वारिणि भयम् अवेत्य अवगम्य, युक्तमेतत्, स्त्रिय कुतपनियतविक्रमा [1]कुतपे नियतो विक्रमो यासा ता तथोक्ता उदुम्बरकनियमितचरणा, क्व ? विधुरे भये, पुरुष तासा स्त्रीणा पुरसरो न भवेत् अपि तु सर्वस्मिन् भवेदेवेति ॥३४॥

प्रणिपतदिव वारि पादयोस्त्रसदवलग्नमिवापि जङ्घयोः ।
शिथिलयदिव लोलमंशुकं प्रिय इव चाटुमुपानयद् वधूः ॥३५॥

प्रणिपतदिति—वारि कर्तृ वधू कामिनी चाटु चाटुकारम् उपानयत् प्रापयत्, किं कुर्वदिव ? पादयो प्रणिपतदिव, किं कुर्वदिव ? त्रसदिव उद्विजमानमिव बिभ्यदिवेत्यर्थ, कथभूत सत् ? जङ्घयोरपि अवलग्न सक्तमिव पुन अशुक वस्त्र शिथिलयदिव, कथभूतम ? लोल चञ्चलम्, क इवोपानयद् वधू ? प्रिय इव वल्लभ इव, प्रियविशेषणानि पूर्वोक्तानि तुल्यार्थानि ॥३५॥

तुलितरसनमौपनीविकं वलिभमिवाम्बु बभूव नाभिगम् ।
त्रिवलिषु पुनरुक्तवीचिकं बहुभवमेत्य बलावसंगतः ॥३६॥

तुलितेति—अम्बु वारि तुलितरसन तुलिता रसना येन तत्तथोक्त बभूव सजातम, रसना सर्वरत्नाङ्गी, उक्त च—"रसना सर्वरत्नाङ्गी मेखला मुखसयुता । एकयष्टिर्भवेत् काञ्ची करोति कटिसूत्रकमिति" ? कथभूतम् ? औपनीविकम् नीवी समीपे भवम् परिधानग्रन्थिसमीपस्थितम्, किमिवोत्प्रेक्षितम् ? वलिभमिव, वलिषु भवम्, वलिभम्, वलिसमुत्पन्नमिवेत्यर्थ, पुन नाभिगम नाभौ गतम्, तथा एति आगच्छति, किं कर्तृ ? अम्बु, किम् ? बहुभव प्राचुर्यम्, कस्मात्? अबलावसगत कामिनीसयोगात्, कथभूत तत् ? पुनरुक्तवीचिक पुनरुक्ता वीचयो येन तत्तथोक्त द्विगुणीकृततरङ्गकम्, कासु ? त्रिवलिपु वलित्रये, अत्र लुप्तोपमा बोध्या । यथा जन अबलावसगत कामिनीसयोगात् बहुभव बहूना भवाना समाहारो बहुभव तत् प्रचुरजन्म एति गच्छति ॥३६॥

---

थी । आदर्श और एक समान करव्यवस्थाके कारण प्रसन्न, पृथ्वी-पालकोकी यह जनता आनन्दसे कोलाहल करती हुई विश्राम और विनोदके लिए नदीकी धाराकी ओर बढ गयी थी ॥३३॥

जलमे सकट हो सकता है यह सोचकर ही प्रेमी अपनी अपनी प्रेयसियोके आगे-आगे पानीमे उतरते जा रहे थे । स्त्रियोका साहस पानीमे उतरते ही पानी-पानी होने लगता है; तब कौन ऐसा पुरुष है जो प्रियाके भीत होते ही आगे न बढे ॥ ३४ ॥

पहले चरणोमे पडते ( पैर डुबाता ) हुएके समान बादमे जाघो तक पहुँचकर ( जाघ डुबाता ) भी डरता हुआ ( लहराता ) सदृश और अन्तमे चंचल ( लहराती ) साडीको भी ढीला ( लथपथ ) करता हुआ समुद्र या नदीका पानी भी प्रेमियोके समान प्रेमिकाओका अनुरजन कर रहा था ॥३५॥

नीवी ( साडीकी गाँठ ) तक पहुँचकर पानी करधनीके समान हो गया था । नाभि तक पहुँचकर उसने त्रिवलिके समान नायिकाको भूषित किया था और त्रिवलिसे मिलकर

---

1 "कुतपोऽस्त्रिया दौहित्रे वाद्ये छागजकम्बले ।' कुशे दिनस्याष्टमांशे ना सूर्ये कुतपो पुन ।" मेदिनी । अतो 'कुतपे कुशे नियतो विक्रमो यासा ता' व्याख्योचिततरा ।

अभिमुखमवलम्बितोऽम्बुना निचितकुचद्वयसंप्रियाजनः।
स्तनजघनभरेण पीडितः स्फटिकमयीमिव भित्तिमाश्रितः ॥३७॥

अभीनि—अम्बुना वारिणा कर्त्रा प्रियाजन अवलम्बित अभिमुखमिति क्रियाविशेपणमेतत् निचित-कुचद्वयसम् कुचौ परिमाण कुचद्वयसम् "परिमाणे द्वयसद्घ्नमात्रट" [जै० सू० ३।४।१५९] इत्यनेन सूत्रेण द्वयसडिति प्रत्यय, निचित कुचद्वयस यस्मिन् अवलम्वनलक्षणे कर्मणि तद्यथा भवति तथा, क इवोत्प्रेक्षित? आश्रित इव, काम्? भित्तिम्, कथभूताम्? स्फटिकमयी स्फटिकनिर्वृत्ताम्, कथभूत प्रियाजनः? स्तन-जघनभरेण पीडित ॥३७॥

परिचितमभिगम्य लीलया कुचभुजयोर्विशतान्तरं मिथः।
परिषजदिव योषितो जलं चलवलिबाहुयुगेन निर्बभौ ॥३८॥

परिचितमिति—जल निर्बभौ भाति स्म, किं कुर्वदिव? अङ्गना कामिनी परिपजदिव आलिङ्ग-दिव, केन कृत्वा? चलवलिवाहुयुगेन तरङ्गभुजद्वन्द्वेन, कथम्? मिथ परस्परम्, किं कुर्वता सता? अन्तर मध्य विशता, कयो? कुचभुजयो, कया? लीलया अनायासेन, किं कृत्वा? पूर्वमभिगम्य प्राप्य, कथभूतम् अन्तरम्? परिचित सस्तुतमिति ॥३८॥

अधिजलमधिकुङ्कुमं बभौ करधृतमङ्गनया स्तनद्वयम्।
कनककलशयुग्ममम्भसि स्मरमभिषेक्तुमिवावतारितम् ॥३९॥

अधीति—अङ्गनया कामिन्या करधृत हस्तरुद्ध स्तनद्वय कुचयुग बभौ रेजे, कथभूतम्? अधिकुङ्कुम प्रचुरकुङ्कुमर्चचितम्, क्व बभौ? अधिजल जलमध्ये, किमिव? कनककलशयुग्ममिव शातकुम्भकुम्भद्वितय-मिव, कथभूतम्? कन्दर्पमभिषेक्तुम्। अम्भसि जले अवतारितम् ॥३९॥

करतलपिहितं प्रियाननं प्रियमृदुसिक्तविषक्तशीकरम्।
मुकुलितमिव पद्ममुल्लसद्विरलतुषारजलं व्यराजत ॥४०॥

करेति—प्रियानन भामिन्या मुख व्यराजत, बभौ, कथभूतम्? करतलपिहित हस्ततलप्रच्छादित पुन• प्रियमृदुसिक्त-विषक्तशीकर प्रियेण मृदु यथा भवति पूर्वं सिक्ता पश्चाद् विपक्ता लग्ना शीकरा

---

पानीकी लहरें दुगुनी सदृश हो गयी थीं। इस प्रकार कामिनियोके सम्पर्कसे पानीने भी अनेक भव ( रूप ) धारण किये थे ॥३६॥

पुष्ट एवं कठोर कुच-युगल-प्रमाण गहरा पानी जलक्रीडामे विभोर इन प्रेयसियोके मुखके सामने आ गया था [ मुखका भी चुम्बन कर रहा था ]। और इस पानीमे डूबी नायिकाएँ ऐसी लगती थीं कि अपने स्तन और जघाओंके भारसे पीड़ित होकर इन्होने स्फटिकमणिकी भीतिका सहारा ले लिया है ॥३७॥

पूर्व-परिचितके समान रतिलीला करता हुआ पानी नायिकाओंको सब तरफसे आवेष्टित करके उनके स्तनो और बाहुलताओंके बीचमे भी घुस गया था। तथा चपल तरंगो रूपी भुजाओंके द्वारा उनका आलिंगन करते हुएके समान सुशोभित हो रहा था॥३८॥

पानीमे उतरती हुई नायिकाओंने अपने-अपने स्तनोको कुकुमसे रगे हाथो-द्वारा सम्हाल लिया था। इस प्रकारसे सम्हाली गयी स्तनोकी जोडीको देखकर लगता था कि ये स्तन नहीं हैं, अपितु कामदेवके अभिषेकके लिए पानीमे डुवाये गये कुकुम-चर्चित दो सोनेके सुन्दर कलश ही हैं ॥३९॥

